## Abbreviations and works often cited

(Citations by pages, unless the contrary is mentioned).

---

| | |
|---|---|
| A. | The archetype MS. when this is compared (in the case of passages quoted from extant works) with other MSS.; elsewhere it is designated simply «MS.» |
| B. R. | Sanskrit-Wörterbuch von O. Böhtlingk u. R. Roth. |
| Böhtl.[2] or W. K. F. | Böhtlingk's Abridgment of the same work (Sanskrit-Wörterbuch in Kürzerer Fassung). |
| Ch. | Childers's Pali Dictionary. |
| Dh.-s. | Dharmasaṃgraha. (Anecd. Oxoniensia: Aryan Series. I. 5.). Cited by sections. |
| Divy. | Divyāvadāna, ed. Cowell and Neil, Cambridge 1886. |
| J. P. T. S. | Journal of the Pali Text Society. |
| K. F. | Analyse du Kandjour par A. Csoma . . traduite . . et augmentée par L. Feer (Annales du Musée Guimet, tom. 2). |
| Lal. v. | Lalitavistara, printed in *Bibliotheca Indica.* |
| marg. | The marginal annotations or corrections of the archetype. |
| MS. | The archetype; see above (A.). |
| Mhv. | Mahāvastu, ed. Senart. Tom. I. II. Paris 1882—1890. |
| M. Vyutp. | Mahāvyutpatti, ed. Minaev; forming part of Vol. I. pt. 2 of his 'Buddhism', St. Petersburg 1887. Cited by sections. |
| Nanjio. | A Catalogue of the Chinese translation of the Buddhist Tripiṭaka; Oxford 1883. Cited by sections. |
| Nep. B. L. | Nepalese Buddhist Literature by Rājendralāla Mitra. Calcutta 1882. |
| Ord. Sk. / Class. Sk. | = ordinary (i. e. non-Buddhistic) Sanskrit. |
| tr. | = 'translated' or 'translation. |
| Wassiljev. | Der Buddhismus. German translation. St. Petersburg 1860· The numbers in parentheses refer to pages of this translation. |

---

# शिक्षासमुच्चयः ।

## दानपारमिता नाम प्रथमः परिच्छेदः ॥

नमः सर्वबुद्धबोधिसत्त्वेभ्यः ॥

॥ [1]यस्याश्रवेण नरकादि - महाप्रपातदाहादिदुष्ख[2]मनुभूतमभूद्भवद्भिः ।
तीव्रं पुनः पुनरनन्तमशान्तचित्तैस्तच्छ्रोतुमादरमुदारतरं भजध्वम् ॥
श्रुत्वा ⏑–⏑⏑⏑ पापमनुद्धतात्मा पूर्वार्जितं च विपुलं नपयत्यशेषम् ।
अप्राप्तपूर्वमपि सौख्यमवाप्नुवन्ति हानिं सुखाच्च न कदाचिदपि प्रयान्ति ॥
सम्बोधिसत्त्वसुखमुत्तममक्षय – – | – – ⏑ – ऽप्यसमसंपदमाप्नुवन्ति । 5
तद्धर्मरत्नमतिदुर्लभमप्यलब्धं लब्धक्षणाः शृणुत सादरमुच्यमानम् ॥
आयान्तु च त्रिभुवनैकहितस्य वाक्यं श्रोतुं प्रसन्नमनसः सुरनागसत्त्वाः ।
गन्धर्वयक्षगरुडासुरकिन्नरेन्द्राः प्रेतादयः श्रवणजाततृषः सहर्षाः ॥
[3]सुगतान्ससुतान्सधर्मकायान् प्रणिपत्यादरतोऽखिलांश्च वन्द्यान् ।
सुगतात्मजसम्वरावतारं कथयिष्यामि समुच्चितार्थवाक्यैः ॥ 10
न च किञ्चिदपूर्वमत्र वाच्यं न च संग्रन्थनकौशलं ममास्ति ।
अत एव न मे परार्थयत्नः स्वमनो भावयितुं ममेदमिष्टम् ॥
मम तावदनेन याति वृद्धिं कुशलं भावयितुं प्रसादवेगः ।
यदि मत्समधातुरेव पश्येदपरोऽप्येनमतोऽपि सार्थकोऽयम्[4] ॥

---

1) Metre Vasantatilaka.
2) *Dushka* for *duḥka* always in MS.
3) Metre Aupacchandasika.
4) For ll. 9—14 cf. Bodhicaryāvatāra I, 1—6.

क्षणसम्पदियं सुदुर्लभा प्रतिलब्धा पुरुषार्थसाधनी ।

यदि नात्र विचि[2 a]न्त्यते हितं पुनरप्येष समागमः कुतः ॥

यथोक्तमार्यगण्डव्यूहसूत्रे[1] ' आर्यजयोष्मायतनविमोक्षे ॥

दुर्लभा ऽष्टाक्षणनिवृत्तिर्दुर्लभो मनुष्यप्रतिलंभो दुर्लभा क्षणसंपद्विशुद्धिर्दुर्लभो
5 बुद्धोत्पादो ' दुर्लभा ऽविकलेन्द्रियता ' दुर्लभो बुद्धधर्मश्रवो ' दुर्लभं सत्पुरुषसमव-
धानं ' दुर्लभानि भूतकल्याणमित्राणि ' दुर्लभो भूतनयानुशासन्युपसंहारः[2] । दुर्लभं स-
म्यग्जीवितं ' दुर्लभः सद्धर्मे तदनुकूलः प्रयत्नो मनुष्यलोक इति ॥

॥ तदेवंविधं समागममासाद्य संवृतिपरमार्थतः सुविदितसंसारदुःखस्योपशमनसुखा-
भिलाषिणो बुद्धगोत्रानुभावात्तु यस्य महासत्त्वस्यैवं प्रत्यवेक्षोत्पद्यते ॥

10 यदा मम परेषां च भयं दुःखं च न प्रियं ।

तदात्मनः को विशेषो यत्तं रक्षामि नेतरम् । इति

तेनात्मनः सत्त्वधातोश्च ॥

दुःखान्तं कर्त्तुकामेन सुखान्तं गन्तुमिच्छता ।

श्रद्धामूलं दृढीकृत्य बोधौ कार्या मतिर्दृढा ॥

15 उक्तं हि रत्नोल्काधारण्याम्[3] ॥

[4] श्रद्धयमानु जिनाञ्जिनधर्म्मान् श्रद्धयते चरि बुद्धसुतानाम् ।

बोधि अनुत्तर श्रद्धयमानो जायति चित्त महापुरुषाणाम् ॥

श्रद्ध पुरोगतमातृजनेत्री[5] पालिकवर्द्धिक सर्वगुणानाम् ।

---

1) This passage occurs in MS. Hodgson № 2 of the R. Asiatic Society f. 62 *a*, where the following variants are found: l. 4 °*pratilābho*; l. 7 °*jīvitaṃ manushyaloke* ' *durlabhā dharmānudharmapratipattiḥ*.

2) For the form *anuçāsanī* (not in lexx.) see below f. [23 b] and note there.

3) M. Vyutp. LXV. 50; CXCVII. 53.

4) Metre: Dodhaka.

5) The MS. has the corrupt and unmetric reading पूर्व्वङ्गमुमात्रज°. For this Prof. Cowell suggested to me पुरङ्गम° Cf. क्षेमपुर below. But the Tib. has (5 a.4) སྐྱེད་



काङ्क्षविनोदनि ओघप्रतारणि ' श्रद्ध निदर्शनि [2 b] क्षेमपुरस्य[1] ।

श्रद्ध अनाविलचित्तप्रसादो मानविवर्जितगौरवमूला ।

श्रद्ध निधानधनं चरणाग्रं पाणि यथा शुभसंग्रहमूलम् ॥

श्रद्ध प्रमोदकरी परित्यागे ' श्रद्ध प्रहर्षकरी जिनधर्म्मे ।

5 श्रद्ध विशेषकरी गुणज्ञाने ' देशिक प्रापणि बुद्धगतो ये ॥

इन्द्रियतीक्ष्णप्रभास्वरतायै ' श्रद्धबलं अविमर्दनतायै ।

निश्रयक्लेश - अधर्षिकतायै ' ऐषिक श्रद्ध स्वयंभुगुणानाम् ॥

श्रद्ध असङ्गतसङ्गसुखेषु[2] अक्षणवर्जित एकक्षणाग्रम् ।

श्रद्ध अतिक्रमु मारपथस्य ' दर्शिक उत्तममोक्षपथस्य ॥

10 बीजमपूतिकु हेतुगुणानां[3] ' श्रद्ध विरोहणि बोधिद्रुमस्य ।

वर्द्धनि ज्ञानविशेषसुखानां ' श्रद्ध निदर्शिक सर्वजिनानां ॥

ये सद श्रद्ध सगौरवबुद्धे ' ते तु न शील न शिक्ष त्यजन्ति ।

ये तु न शील न शिक्ष त्यजन्ती ' ते गुणवांस्तुतये गुणवन्तः[4] ॥

ये सद श्रद्ध सगौरवधर्म्मे । ते जिनधर्म्म अतृप्तु गृणोन्ती ॥

15 ये जिनधर्म्म अतृप्तगुणोन्ती । तेषधिमुक्ति अचिन्तियधर्म्मे ॥

ये सद श्रद्ध सगौरवसंघे । ते अविवर्त्तिक संघप्रसन्नाः ॥

ये अविवर्त्तिक संघप्रसन्नास्ते अवित्रर्त्तिक श्रद्धबलातः ।

---

འགྲོ; see Jäschke Dict. p. 101. b. For † *mātṛija* cf. the Pali *mātuja*: though perhaps *mātraja* itself may stand in this sense in a gāthā-passage.

1) Scan (and pronounce?) as if the Pali form *khema* cf. *guṇa* (*j*)*ñāne ekākshaṇa*, etc. below. See also Senart, Mhv. I p. 423 *ad fin.*; and compare Windisch, Māra p. 35.

2) In margin उपायानां न केनचित्सह संगतया शून्यतया सङ्गस्योपायसमाधिलाभ-निमित्तं श्रद्धा.

3) In margin (some letters being lost) हेतुभूता गु[णा]नां बीजं श्रद्धा.

4) In margin ते गुणे स्तुतौ नेर्ष्यालवः शीलवंतः

ये अविवर्त्तिक श्रद्धबलातो[1] ' इन्द्रियतीक्ष्णप्रभास्वर तेषाम् ॥
इन्द्रियतीक्ष्णप्रभास्वर येषां तेहि विवर्जित पापकमित्राः । [3 a]
येहि विवर्जित पापकमित्राः धार्म्मिकमित्रपरिग्रह तेषाम् ॥
धार्मिकमित्रपरिग्रह येषां ' ते विपुलं कुशलोपचिन्वन्ति ' ।
ये विपुलं कुशलोपचिनोन्ती हेतुबलोपगताय महात्मा ॥
हेतुबलोपगताय महात्मा ' तेष उदारधिमुक्तिविशेषाः ।
येष उदारधिमुक्तिविशेषास्ते सद धिष्ठित सर्वजिनेभिः ॥
ये सद धिष्ठित सर्वजिनेभिस्तेषुपपद्यति बोधयि चित्तम् ।
येषुपपद्यति बोधयि चित्तं ते अभियुक्त महर्षिगुणेषु ॥
ये अभियुक्त महर्षिगुणेषु जातयबुद्धकुले अनुजाताः[2] ।
जातय बुद्धकुले अनुजातास्ते समयोग अयोगविमुक्ताः ॥
ये समयोग अयोगविमुक्ताः । आशयु तेष प्रसादविशुद्धः ॥
आशयु येष प्रसादविशुद्धः तेष अध्याशयु उत्तमश्रेष्ठः ।
येष अध्याशयु उत्तमश्रेष्ठस्ते सद पारमितासु चरन्ति ॥
ये सद पारमितासु चरन्ती ते प्रतिपन्न इहो महयाने ।
ये प्रतिपन्न इहो महयाने ते प्रतिपत्तितु पूजयि बुद्धान् ॥
ये प्रतिपत्तितु पूजयि बुद्धान् तेषु अनुस्मृति बुद्ध अभेद्या ।
येषु अनुस्मृति बुद्ध अभेद्या । ते सद पश्यिय चि[3]न्तिय बुद्धान् ॥
ये सद पश्यिय चिन्तिय बुद्धान् ' तेष न जातु न तिष्ठति बुद्धः ॥
येष न जातु न तिष्ठति बुद्धः तेष न जातु रहायति धर्म्मः ।

1) The Tibetan སྤོབས་ཀྱིས confirms this curious adverbial form.
2) The MS. has the regular, but here unmetrical, prodelision.
3) °श्यिय अचि° MS.



येष न जातु रहायति धर्मः ते सद धिष्ठित सर्वजिनेभिर् ।
इत्या[3 b]दिश्रद्धामूलो गुणविस्तरोऽनन्तस्तत्रोक्तः ' तत्परिसमाप्य संक्षेपतः पुनराह ।
दुर्लभसत्वपृथग्जनकाया ' ये इमि श्रद्दधि ईदृशि धर्म्मान् ।
ये तु शुभोपचिताः कृतपुण्यास्ते इमि श्रद्दधि हेतुबलेन ॥
यो दशक्षेत्ररजोपमसत्वान्[1] कल्पमुपस्थिहि सर्वसुखेन ।
नोत तु तादृशु पुण्यविशेषो यादृश श्रद्दधतो इमि धर्म्मान् ॥ इति ।
॥ तथार्यदशधर्मसूत्रे[2] पि देशितं ॥
श्रद्धा हि परमं यानं येन निर्यान्ति नायकाः ।
तस्माच्छ्रद्धानुशारित्वं भजेत मतिमान्नरः ॥
अश्राद्धस्य मनुष्यस्य शुक्लो धर्मो न रोहति ।
बीजानामग्निदग्धानामङ्कुरो हरितो यथा ॥ इति ।
अत एवार्यललितविस्तरसूत्रे प्रतिवेदितं । श्रद्धायामानन्दयोगः करणीय इदं तथागतो वि-
ज्ञापयतीति ॥ तथा सिंहपरिपृच्छायां[3] ' श्रद्धया ' क्षणमक्षणं वर्जयतीत्युक्तम् ॥ तदेवं । श्रद्धा-
मूलं दृढीकृत्य बोधिचित्तं दृढं कर्त्तव्यं सर्वपुण्यसंग्रहत्वात् तद्यथार्यसिंहपरिपृच्छायां '
सिंहेन राजकुमारेण भगवान्पृष्टः ॥
संग्रहः सर्वधर्माणां ' कर्मणा केन जायते ।
प्रियश्च भोति सत्वानां [4 a]यत्र यत्रोपपद्यते ॥
भगवानाह । सर्वसत्वप्रमोक्षाय चित्तं बोधाय नामयेत् ।
एष संग्रह धर्माणां भवते तेन च प्रियः ॥ इति ।
॥ तथार्यगण्डव्यूहसूत्रे पि वर्णितं ' बोधिचित्तं हि कुलपुत्र बीजभूतं[4] सर्वबुद्धधर्मा-

1) बुद्धान् इति केचित् MS in margine a sec. manu.
2) Nanjio, 23 (9) tr. 386—534 A.D.; 29. tr. 502—557. K. F. p. 215.
3) Nanjio, 23 (37) M. Vyutp. LXV. 70, and K. F. p. 217.
4) *Vījānām*, Minaev; but the end of the word is illegible in the MS.

णां। नेत्रभूतं सर्वजगच्छुद्धधर्मविरोहणतया। धरणिभूतं सर्वलोकप्रतिशरणतया यावत्पितृभूतं सर्वबोधिसत्त्वारक्षणतया" पेयालं॥ वैश्रवणभूतं सर्वदारिद्र्यसंछेदनतया। चिन्तामणिराजभूतं सर्वार्थसंसाधनतया। भद्रघटभूतं सर्वाभिप्रायपरिपूरणतया। शक्तिभूतं क्लेशशत्रुविजयाय। धर्म[1]भूतं [2]योनिशो मनस्कारसंछेदनतया। खड्गभूतं क्लेशशिरःप्रपातनतया। कुठारभूतं दुःखवृक्षसंछेदनतया। प्रहरणभूतं सर्वोपद्रवपरित्राणतया। [3]वडिसभूतं संसारजलचराभ्युद्धरणतया। वातमण्डलीभूतं सर्वावरणनिवरणतृणविकिरणतया। उद्दान[4]भूतं सर्वबोधिसत्त्वचर्याप्रणिधानसंग्रहणतया। चैत्यभूतं सदेवमानुषासुरस्य लोकस्य। इति हि कुलपुत्र बोधिचित्तमेभिश्चान्यैश्चाप्रमाणैर्गुणविशेषैः समन्वागतमिति॥

कथं पुनर्ज्ञायते। पृथग्जनस्यापि बोधिचित्तमुत्पद्यते। न वाङ्मा[4 b]त्रमेतदिति। अनेकसूत्रान्तदर्शनात्॥ यथा तावदार्यविमलकीर्त्तिनिर्देशे[5] निर्दिष्टं। सुमेरुसमां सत्कायदृ[6]ष्टिमुत्पाद्य बोधिचित्तमुत्पद्यते। ततश्च बुद्धधर्मा विरोहन्तीति॥ रत्नकरण्डसूत्राच्च[7] पृथग्जनो ऽपि बोधिसत्त्व इति ज्ञायते॥ । यथोक्तं। तद्यथापि नाम मञ्जुश्रीः अण्डकोषप्रक्षिप्तो ऽपि कलविङ्कपोतो ' असंभिन्नाण्ड अनिष्क्रान्तः कोषात्कलविङ्करुतमेव मुञ्चति॥ एवमेव मञ्जुश्रीः अविद्याण्डकोषप्रक्षिप्तो पि बोधिसत्त्वो ' असंभिन्नात्मदृष्टिरनिष्क्रान्तस्त्रैधातुकाद्बुद्धरुतमेव मुञ्चति ' यदिदं शून्यतानिमित्ताप्रणिहितरुतमेव॥

[8]सर्वधर्मप्रवृत्तिनिर्देशे पि कथितं। जयमतेश्च बोधिसत्त्वस्य पृथिवी विदारमदात्। स कालगतो महानिरयं प्रापतदिति। स हि शून्यतां नाधिमुक्तवान् शून्यतावादिनि च प्रतिघं कृतवान्॥

1) धमचक्र° marg.
2) तंमय MS.
3) More usually बडिश «fish-hook».
4) For the *-dd* cf. Cambridge MS. Add. 1707 (as described in my Cat. p. 193).
5) Wassiljev, Buddhismus, 152 (164); 222 (243). M. Vyutp. LXV. 15. K. F. p. 256. Nanjio 146, 147, 149. cf. also 144, 145, 181.
6) A passage of considerable length, partly broken away and otherwise not very clear, is added in the margin as an amplification or explanation of these words.
7) Wassiljev, Buddhismus 154 (167). M. Vyutp. LXV. 84. K. F. p. 243, Nanjio, 168, 169. N. is wrong in refering to the Avalokiteçvaraguṇaratnakāraṇḍavyūha, which is quite a different work.
8) Nanjio 163, 164; tr. ca. A.D. 400. K. F. p. 256. M. Vyutp. LXV. 37.



॥ नियतानियतावतारमुद्रासूत्रे[1] ऽप्याख्यातं॥ कतमः पशुरथगतिको बोधिसत्त्वः। तद्यथा। कश्चित्पुरुषः पञ्चबुद्धक्षेत्रपरमाणुरजःसमान् लोकधातूनभिक्रमितुकामः स्यात्। स पशुरथमभिरुह्य मार्गं प्रतिपद्यते स चिरेण दीर्घेणाध्वना योजनशतं गच्छेत्। स तत्र महत्या वातमण्डल्या पश्चात् खलु पु[5 a]नरशीतिं योजनसहस्राणि प्रत्याकृष्य प्रत्युदावर्त्येत। तत्किं शक्नुयात्स पुरुषस्तान् लोकधातून् पशुरथेनातिक्रमितुम् ' यावदनभिलाप्यानभिलाप्यैरपि कल्पैरेकमपि लोकधातुमतिक्रमितुम्। आह। नो हीदं भगवन्। भगवानाह। एवमेव मञ्जुश्रीः यः कश्चिद्बोधिचित्तमुत्पाद्य महायानं ' न धारयति ' न पठति। श्रावकयानीयान् सेवते ' तैश्च सार्द्धं संस्तवं करोति। श्रावकयानं च पठति स्वाध्यायति मीमांसते परिबुध्यते ऽन्यांश्च पाठयति यावद्बोधयति। स तेन [ध]न्वप्रज्ञो भवति सोऽनुत्तरज्ञानमार्गात्प्रत्याकृष्यते प्रत्युदावर्त्यते। यदपि तस्य बोधिसत्त्वस्य बोधिभावनातः प्रज्ञेन्द्रियं प्रज्ञाचक्षुः तदपि तस्य धन्वीक्रियते प्रतिहन्यते। अयं पशुरथगतिको बोधिसत्त्व इति॥

तदेवमेषा शून्यतानधिमुक्तिर्महायानानभिरतिश्चासंपूर्णाधिमुक्तिचित्तचर्यस्यापि प्रायो न संदृश्यते ' प्रागेवाधिमात्राधिमुक्तिचर्यस्य बोधिसत्त्वस्य। स हि रत्नमेघे[2] ' सर्वबालचरितविपत्तिसमतिक्रान्तः पठ्यते असंख्येयसमाधिधारणीविमोक्षाभिज्ञाविद्याविक्रीडितो ' ऽनन्तधर्मारामरतिनिरामिषापरान्तकल्पकोट्यनाभोगनिर्विकल्पप्रीतिवेगालोकप्रतिलब्धश्चाप्रमेयकल्पकोटीनियुतशतसहस्रपरममहायानप्रस्थानविचित्रभावनासंपूर्ण-परार्थप्रतिपत्तिनिर्याण-पुण्यज्ञानसंभाराभिनिर्हाराभिनिर्वृत्तिः पूर्वयोगशतसहस्रसमृद्धश्च पठ्यते। [5 b]अथैतन्नेयार्थं। कस्मादन्ये बोधिचित्तोत्पादका अस्यां भूमौ[3] नेष्यन्ते ' न चात्रेच्छया किंचिद्विशेषचिह्नं नीतार्थं कर्त्तुं लभ्यते। अधिमात्रा[4]धिमुक्तिचर्याधर्मता वचनाच्च गम्यते। यथा मध्यमृदुप्रकाराप्यधिमुक्तिचर्या ऽस्त्येवेति॥ अस्य पुनस्तथागत[5]गुह्यसूत्रस्य को ऽभिप्रायो। यदुक्तं।

1) Nanjio 131, 132; tr. A.D. 542. K. F. 260.
2) Ratnamegha-sūtra, Nanjio 151, 152; tr. A.D. 503. K. F. 264—265. M. Vyutp. LXV, 12.
3) अधिमुक्तिचर्याभूमौ marg.
4) अभिसमयालङ्कारे ऊष्मादीनां मृद्वादिद्वादशोक्तेः marg.; a note will be added to the translation.
5) Nan., 23 (3), 1043 K. F. 214. M. Vyutp. LXV. 30. Tathāgatācintyaguhyanirdeça.

कस्य भगवन् बोधिचित्तोत्पादः। आह। यस्य महाराजाध्याशयो ऽविकोपितः। आह। कस्य भगवन्नध्याशयो ऽविकोपितः। आह। यस्य महाराज महाकरुणोत्पादः। आह। कस्य भगवन्महाकरुणोत्पादः। आह। यस्य महाराज सर्वसत्त्वापरित्यागः। आह। कथं भगवन् सत्त्वा अपरित्यक्ता भवन्ति। आह। यदा महाराजात्मसौख्यं परित्यक्तं भवतीति। बोधिचित्तमात्रसन्तुष्टानां करुणाभिलाषसंजननार्थमिदमुक्तं। यथा न ते तथागतशासने प्रव्रजिता येषां नास्ति त्याग इति। एवमिहान्य[(1)]बोधिचित्तनिन्दा द्रष्टव्या न तु बोधिचित्तमन्यथा नोत्पद्यत एव॥

यथा दशधर्मकसूत्रे देशितं। इह कुलपुत्र बोधिसत्त्वो गोत्रस्थः सन्ननुत्पादितबोधिचित्तः तथागतेन वा तथागतश्रावकेण वा संचोद्यमानः संवेद्यमानः समादाप्यमानो ऽनुत्तरायां सम्यक्संबो[धौ] [6 a]बोधिचित्तमुत्पादयतीदं प्रथमं कारणं बोधिचित्तोत्पादाय। संबोधेर्वा बोधिचित्तस्य वा वर्णं भाष्यमाणं श्रुत्वानुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयतीदं द्वितीयं कारणम्। स सत्त्वा - - - नशरणानद्वीपान् दृष्ट्वा कारुण्यचित्तमुपस्थाप्य यावदनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयतीदं तृतीयं कारणम् बोधिचित्तोत्पादाय। स तथागतस्य सर्वाकारपरिपूर्णतां दृष्ट्वा प्रीतिमुत्पाद्यानुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयतीदं चतुर्थं कारणमिति। तच्च बोधिचित्तं द्विविधं बोधिप्रणिधिचित्तं च बोधिप्रस्थानचित्तं च। यथार्यगण्डव्यूहसूत्रे भाषितं। दुर्लभाः कुलपुत्र ते सत्त्वाः सर्वलोके ये ऽनुत्तरस्यां सम्यक्संबोधौ चित्तं प्रणिदधति। ततो ऽपि दुर्लभतमास्ते सत्त्वा ये ऽनुत्तरां सम्यक्सम्बोधिमभिसंप्रस्थिता इति। तत्र बोधिप्रणिधिचित्तं। मया बुद्धेन भवितव्यमिति चित्तं प्रणिधानादुत्पन्नं भवति। शूरङ्गमसूत्रे[(2)] पि। शाठ्योत्पादितस्यापि बोधिचित्तस्य बुद्धत्वहेतुत्वाभिधानात्। कः पुनर्वादः किंचिदेव कुशलं कृत्वा। यथोक्तं भद्रकल्पिकसूत्रे[(3)]। घोषदत्तो नाम

1) निःकृपाणां[न] बोधिचित्तं marg.

2) Nanjio 399, Çūraṅgama-samādhi tr. before A.D. 417; Wassiljev, Buddhismus 175 (191), K. F. 249. M. Vyutp. LXV, 31. Ç—s—nirdeça. Translated from the Chinese by Beal, Catena pp. 284—369.

3) Nanjio 403. Tr. 300 A.D., K. F. 220—222. cf. J. J. Schmidt, Ueber die tausend Buddhas etc. Mém. Acad. St. Pétersbourg. VI Sér. Sc. pol. hist. phil. II, 41—86.



तथागतो यत्र नक्षत्रराजेन तथागतेन प्रथमं बोधिचित्तमुत्पादितं ताम्बूलपत्रं[6 b] दत्त्वा गोपालकभूतेन। एवं विद्युत्प्रदीपो नाम तथागतो यत्र यशसा तथागतेन प्रथमं बोधिचित्तमुत्पादितं दशिकां दत्त्वा तन्तुवायभूतेन। एवमनन्तप्रभो नाम तथागतो यत्रार्चिष्मता तथागतेन प्रथमं बोधिचित्तमुत्पादितं तृणप्रदीपं दत्त्वा नगरावलम्बकभूतेन। एवं दृढविक्रमो नाम तथागतो यत्र दुष्प्रधर्षेण तथागतेन प्रथमं बोधिचित्तमुत्पादितं दन्तकाष्ठं दत्त्वा काष्ठहारकभूतेनेत्यादि[(1)]॥

चर्याविकले ऽपि च बोधिचित्ते नावमन्यता कर्त्तव्या। तस्याप्यनन्तसंसारसुखप्रसवनत्वात्। यथार्यमैत्रेयविमोक्षे वर्णितं। तद्यथापि नाम कुलपुत्र भिन्नमपि वज्ररत्नं सर्वप्रतिविशिष्टं सुवर्णालंकारमभिभवति। वज्ररत्ननाम च न विजहाति। सर्वदारिद्र्यं विनिवर्त्तयति। एवमेव कुलपुत्राशयप्रतिपत्तिभिन्नमपि सर्वज्ञताचित्तोत्पादवज्ररत्नं सर्वश्रावकप्रत्येकबुद्धगुणसुवर्णालंकारमभिभवति बोधिसत्त्वनाम च न विजहाति। सर्वसंसारदारिद्र्यं विनिवर्त्तयतीति। इतश्च विनापि चर्यया बोधिचित्तमुपकारकमिति ज्ञातव्यं। येनापररा[(2)]जाववादकसूत्रे कथितं। यस्माच्च त्वं महाराज बहुकृत्यो बहुकरणीयः[7 a]। असहः सर्वेण सर्वः सर्वथा सर्वं सर्वदा दानपारमितायां शिक्षितुं। एवं यावत्प्रज्ञापारमितायां शिक्षितुं। तस्मात्तर्हि त्वं महाराज एवमेव सम्यक्संबोधिच्छन्दं श्रद्धां प्र[(3)]- - प्रणिधिं च गच्छन्नपि तिष्ठन्नपि निषण्णो ऽपि शयानो ऽपि जाग्रदपि भुञ्जानो ऽपि। पिबन्नपि। [(4)]सततसमितमनुस्मर। मनसिकुरु भावय। सर्वबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकपृथग्जनानामात्मनश्चातीतानागतप्रत्युत्पन्नानि सर्वकुशलमूलान्यभिसंक्षिप्य तुलयित्वा पिण्डयित्वा ऽनुमोदस्वाग्र्ययानुमोदनया यावदाकाशसमतया निर्वाणसमतया ऽनुमोदस्वानुमोद्य च सर्वबुद्धबोधिसत्त्वप्रत्येक-

1) एवं मञ्जुश्री श्रीकीर्तिनाम तथाग॰ यत्र गुणध्वजेन तथाग॰ प्र॰ बो॰ उत्पादितं। एकमामलकं दत्त्वा वैद्यराजभूतेन marg.

2) Nanjio 248, 249, 250. K. F. 263. M. Vyutp. LXV. 105.

3) The MS. is obliterated. The first letters of *praṇidhim* are hardly legible, but the restoration appears the more certain from the Tib. word used, སྨོན་པ.

4) Senart, Mhv. i., p. 422.

बुद्धार्यश्रावकाणां पूजाकर्मणे निर्यातय । निर्यात्य च सर्वसत्त्वसाधारणानि कुरु । ततः सर्व-
सत्त्वानां यावत् सर्वज्ञताप्रतिलम्भाय सर्वबुद्धधर्मपरिपूरणाय दिने दिने त्रैकाल्यमनुत्तरा-
यां सम्यक्संबोधौ परिणामय एवं खलु त्वं महाराज प्रतिपन्नः सन् राज्यं कारयिष्यसि रा-
ज्यकृत्यानि च न हापयिष्यसि बोधिसंभारांश्च परिपूरयिष्यसीति ॥ अत्रैव चास्य विपाक
5 उक्तः ' स खलु पुनस्त्वं महाराज तस्य सम्यक्संबोधिचित्तकुशलमूलकर्मणो [7 b]विपा-
केनानेकशतकृत्वो देवेषूपपन्नोऽभूः । अनेकशतकृत्वो मनुष्येषूपपन्नोऽभूः । सर्वासु च देवमनु-
ष्योपपत्तिष्वाधिपत्यमेव कारयसि । न च तावत्तत्र महाराज तस्य सम्यक्संबोधिचित्तस्य
कुशलकर्मण ऊनत्वं वापूर्णत्वं वा प्रज्ञायते । अपि च महाराज एकमपि सम्यक्संबोधि-
चित्तं सर्वसत्त्वोत्तारणारम्बणत्वा[1]त्सर्वसत्त्वामोचनारम्बणत्वात्सर्वसत्त्वसमाश्वासनारम्बणत्वा-
10 त्सर्वसत्त्वपरिनिर्वाणारम्बणत्वादप्रमेयासंख्येयकुशलोपचयम् । कः पुनर्वादो य एवं ब-
हुलीकरोतीति ॥

एतच्च बोधिचित्तं रूपकायदर्शनोत्पन्नं ' तत्र पूर्वावदाने[2] पठ्यते ' एवं तावत्प्रणिधिबो-
धिचित्तं वेदितव्यं । इदं तु वक्तव्यं किमभूमिप्रविष्टस्यापि बोधिसत्त्वसम्वराधिकारोऽस्ति
न वेति । अस्तीति वेदितव्यं आकाशगर्भसूत्रे[3] लाभसत्कारार्थं[4] मूलापत्तिश्रवणात् ।
15 दशभूमिकसूत्रे[5] तु प्रथमायां भूमौ दर्शितं ' न च कञ्चित्सत्कारं कस्यचित्सकाशात्प्रतिकांक्ष-
त्यन्यत्र मयैवैषां सर्वसत्त्वानां सर्वोपकरणबाहुल्यमुपनामयितव्यमिति । तथा चाह ।
प्रमुदितायां[6] बोधिसत्त्वभूमौ सुव्यवस्थितो भवत्यचलनयो[8 a]गे--ति । पुनश्चोक्तं । तथाग-

1) Cf. Pāli *ārammaṇa*.

2) Not *Pūrṇāvad°* as one would be tempted to conjecture, for the Tib. has སྔོན་གྱི་རྟོགས་པ་བརྗོད་པ. Pūrva is quoted (though not from Buddh. literature) as a nom. proprium; but see p. 13, 16. below.

3) Wassiljev, Buddhismus 171 (186); Nanjio 67, 68, 69. cf. also 70. KF. p. 270. M. Vyutp. LXV. 18.

4) आत्मोत्कर्षपरपंसने marg. The use of a noun from √*paṃs* hitherto found in Dhātupāṭha only, tends to show these glosses are very early.

5) Wassiljev, Buddhismus 302 (332); 309 (339—340); 324 (354) 327 (358). Nanjio 105, 110. cf. also 87, 88 and K. F. 211. Here, apparently, and p. 11, 10 infra the MS. reads °*bhūmaka*°.

6) Cf. Rāj. Mitra, Nep. B. L. p. 82.



तवंश[1]नियतो भवति संबोधिपरायण इति । आकाशगर्भसूत्रे त्वाह । श्रावकयानमेवास्य[2] न
भवति प्रागेव महायानमिति । तथार्योग्रपरिपृच्छायां[3] मात्सर्यपर्यवनद्धस्यापि शिक्षापदानि
प्रज्ञप्तानि । प्रमुदितायां तु पठ्यते । आत्मसंज्ञापगमाच्चास्यात्मस्नेहो न भवति । कुतः ।
पुनः सर्वोपकरणस्नेह इति । तथा मस्तकादिदानमप्यत्रास्योक्तं ॥

एवमादिसूत्रेषु भूमिप्रविष्टस्यापि शिक्षाप्रज्ञप्तिर्दृश्यते । यत्र वासामान्येन बोधिसत्त्व- 5
मधिकृत्योपदेशस्तत्राभ्यासायोग्यतया प्रतिषेधवाक्येन वा ऽदिकर्मिकबोधिसत्त्वेन न
शिक्षितव्यं[4] भवेदेतत् । उभया[5]संभवे तु सर्वत्र शिक्षितव्यं ' तत्राप्येकस्यां शिक्षायां शिक्षणा-
यामशक्तस्येतरशिक्षानभ्यासादनापत्तिः ॥ आर्याक्षयमतिसूत्रे[6] ऽप्येवमवोचत् । दानकाले शी-
लोपसंहारस्यापेक्षेति विस्तरः । न चात्र[7] शिथिलेन भवितव्यं न च शेषासु न समुदागच्छति ।
यथाबलं[8] यथाभजमानमिति दशभूमिकसूत्रे वचनात् । अयं च संवरः स्त्रीणामपि मृदुक्लेशानां 10
बोध्यभिलाषचित्तानां लभ्यते । उक्तं हि बोधिसत्त्वप्रातिमोक्षे[9] ' चतुर्भिः शारिपुत्र धर्मैः [8 b]
समन्वागताः बोधिसत्त्वाः सत्यवादिनो भवन्तीत्यारभ्याह । इह शारिपुत्र कुलपुत्रो वा कु-
लदुहिता वाऽनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्यारब्धवीर्यो विहरति कुशलधर्मपर्येष-
णायेत्यारभ्य सर्व उपदेशः ॥

संवरग्रहणं च बोधिसत्त्वशिक्षापदाभ्यासपरमस्य सांवरिकस्यान्तिकात्कर्तव्यं । एवं 15

1) Anusvāra deleted in MS.

2) सत्काराकांक्षणे मुदितायां प्रागेव महायानित्वात् श्रावकयान . . . (letters lost here) marg.

3) °*tathāyogra*° MS., but the Tib. འཕགས་པ་དྲག makes the correction certain. Translated into Chinese before A.D. 220: Nanjio 23 (19), 33, 34. K. F. 216. M. Vyupt. LXV. 72.

4) मस्तकादिदानं marg.

5) अयोग्यतानिषेधयोः marg.

6) Wassiljev, Buddhismus 171; Nanjio 74, 77 (where evidently Aksharamati stands for Akshayamati). A° *nirdeça* Wassiljev, Buddhismus 327 sqq (358 sqq) K. F. 256. A° *paripṛcchā* Nanjio 23 (45). K. F. 218.

7) शीले दूरादागतस्यार्थिनो धर्मदाने समाध्युपेक्षणमत्रोक्तं margin.

8) शिक्षा.

9) K. F. 268. Cf. also Nanjio 1096, 1098.

ह्यस्य शिक्षातिक्रमे तीव्रमपत्राप्यं गुरुविसंवादनभयं चोत्पद्यते । तत्र चानाभोगतः प्रेम-
गौरवसिद्धिरित्येष सामान्यसंवरधर्मः । अत एव बोधिसत्त्वाः तथागतानां पुरतः शिक्षा-
णामन्यतमशिक्षानिष्पत्तिकामाः समादानं कुर्वन्ति । तस्य च[1] कल्याणमित्रस्याभावे दश-
दिगवस्थितबुद्धबोधिसत्त्वाभिमुखीभावभावनया संवरो ग्राह्यः संवरमात्मबलं च तुलयि-
5 त्वा । अन्यथा तु सर्वबुद्धबोधिसत्त्वाः सदेवकश्च लोको विसंवादितः स्यात् । सद्धर्मस्मृ-[2]
त्युपस्थानसूत्रे हि किंचिन्मात्रं चिन्तयित्वाप्यददतः प्रेतगतिरुक्ता प्रतिज्ञातं चाददतो
नरकगतिः । किं पुनरनुत्तरमर्थमखिलस्य जगतः प्रतिज्ञायासंपादयतः । अत एवोक्तं
धर्मसंगीतिसूत्रे[3] । सत्यगुरुकेण कुलपुत्र बोधिसत्त्वेन भवितव्यं । सत्यसंगीतिः कुलपुत्र
धर्मसंगी[9 a]तिः । तत्र कुलपुत्र कतमत्सत्यं यद्बोधिसत्त्वो ऽनुत्तरायां सम्यक्संबोधौ चित्तमु-
10 त्पाद्य तच्चित्तं जीवितहेतोरपि न परित्यजति न सत्त्वेषु विप्रतिपद्यते । इदं बोधिसत्त्वस्य
सत्यं ॥ यत्पुनर्बोधिसत्त्वो ऽनुत्तरायां सम्यक्संबोधौ चित्तमुत्पाद्य पश्चात्तच्चित्तं परित्यजति
सत्त्वेषु विप्रतिपद्यते ऽयं बोधिसत्त्वस्य प्रतिकृष्टो मृषावाद इति । आर्यसागरमतिसूत्रे[4] पि
देशितं । स्याद्यथापि नाम सागरमते राजा वा राजमात्रो वा सर्वं नागरकं जनं श्वो
भक्तेनोपनिमन्त्र्योपेक्षको भवेन्नान्नपानं समुदानयेत्सत्यं सर्वजनकायं विसंवादयेत् । तत्र
15 ते ऽन्नपानभोजनमलभमाना उज्जग्घन्तः[5] प्रक्रामेयुः । एवमेव सागरमते यो बोधिसत्त्वः सर्व-
सत्त्वानाश्वास्यातीर्णतारणायामुक्तमोचनायानाश्वस्ताश्वासनाय यावन्न बाहुश्रुत्ये ऽभियोगं
करोति नापि ततो ऽन्येषु बोधिपक्ष्यकुशलमूलेषु धर्मेषु । अयं बोधिसत्त्वो विसंवादयति

1) MS. °चाक°

2) Nanjio 679, 804. (Capp. 3, 4 deal with *naraka* and the *pretas*); translated A.D. 539. K. F. 274—275.

3) M. Vyutp. LXV. 21. Translated A.D. 515, Nanjio 426. K. F. 266. Wassiljev, Buddhismus 327 (358).

4) The Tib. & Ch. lists (K. F. 253. Nanjio 976) know only Sāgaramati-paripṛcchā. The «Sūtra» of our text is preserved in the Tib. མདོ (11. a. 6).

5) Compare *Ashṭasāhasrikā-prajñāpāramitā*, p. 232, l. 12; 388 l. 19 and the Tibetan equivalent (11. b. 1) འཛུ་བ. The meaning «scoff, sneer» is just what the passage requires and is confirmed by the cognate forms such as Hindi *cagh*: also *cachinnor* and καχάζω. This passage should be added in confirmation of Jäschke's remarks s. v. (p. 358).



सदेवकं लोकं । एवं च तं पूर्वबुद्धदर्शिन्यो देवता उज्जग्घन्ति विवादयन्ति । दुर्लभास्ते
यज्ञस्वामिनो ये महायज्ञं प्रतिज्ञायोत्तारयन्ति । तस्मात्तर्हि सागरमते न सा बोधिसत्त्वेन
वाग्भाषितव्या यया सदेवमानु[9 b]षासुरं लोकं विसंवादयेत् ॥ पुनरपरं सागरमते
बोधिसत्त्वः केनचिदेवाधीष्टो भवति धर्मेष्वर्थकरणीयेषु । तत्र बोधिसत्त्वेन वाग्भाषि-
ता भवति यावदात्मपरित्यागो ऽपि बोधिसत्त्वेन कर्तव्यो भवेत्तत्र न पुनः स सत्त्वो 5
विसंवादयितव्य इति । तस्मात्स्वबलानुरूपेणैकमपि कुशलमूलं समादाय रक्षितव्यं ।
यथोक्तमार्यक्षितिगर्भसूत्रे[1] । एभिर्दशभिः कुशलैः कर्मपथैर्बुद्धत्वं[2] । न पुनर्यो ऽन्तश एकमपि
यावज्जीवं कुशलं कर्मपथं न रक्षति अथ च पुनरेवं वदति । अहं महायानिको
ऽहं चानुत्तरां सम्यक्संबोधिं पर्येषामीति । स पुद्गलः परमकुहको महामृषावादिकः सर्वेषां
बुद्धानां भगवतां पुरतो विसंवादको लोकस्योच्छेदवादी स मूढः कालं कुरुते विनिपातगा- 10
मी भवतीति । यावत्कालं च शक्नोति तावत्कालं कुशलं समादाय वर्तितव्यं ॥

एतच्च भैषज्यगुरुवैडूर्यप्रभसूत्रे[3] द्रष्टव्यं । यस्तु महासत्त्व एवं श्रुत्वापि बोधिसत्त्वचर्या-
दुष्करतामपि प्रज्ञयावगाह्योत्सहत एव सकलदुःखितजनपरित्राणधुरमवबोढुं तेन वन्द-
नपूजनपापदेशन-पुण्यानुमोदन-बुद्धाध्येषण-याचन-बोधिपरिणामनं कृत्वा कल्याणमित्र-
मभ्येत्य त[4][10 a]दुक्तानुवादेन स्वयं वा वक्तव्यं । समन्वाहराचार्याहमेवं नामेत्युक्त्वा । यथा- 15
र्यमञ्जुश्रीबुद्धक्षेत्रगुणव्यूहालङ्कारसूत्रे[5] भगवता मञ्जुश्रिया पूर्वजन्मावदाने चर्यापितं बोधि-
चित्तमुत्पादितं तथोत्पादयितव्यं । एवं हि तेनोक्तं ॥

यावती प्रथमा कोटिः संसारस्यान्तवर्जिता ।
तावत्सत्त्वहितार्थाय चरिष्याम्यमितां चरिम्[6] ॥

1) Wassiljev, Buddhismus 170—171 (185—186); K. F. 266—267 and Nanjio 64, 65 (before A.D. 439), where the title is *Daçacakrakshitigarbha*.

2) Here must be supplied in sense at least, if no actual words have fallen out, some such words as: *bodhisattvaḥ prāpnuyāt*; the Tib. has སངས་རྒྱས་སུ་འགྱུར.

3) Nanjio, 171 (tr. A.D. 650) 170, 172 cf. 167. M. Vyutp. LXV. 80.

4) These letters are quite uncertain.

5) Nanjio, 23 (15, 46), 31. Tr. by Dharmāraksha (fl. A.D. 300) & twice later. K. F. 215. M. Vyutp. LXV. 56.

6) चरि (fem.) = चर्या not in lexx. in this sense or gender.

उत्पादयाम संबोधौ चित्तं नाथस्य संमुखम्।
निमन्त्रये जगत्सर्वं दारिद्र्यान्मोचितास्मि तत्॥
व्यापादखिलचित्तं वा ईर्ष्यामात्सर्यमेव वा।
अद्याग्रे न करिष्यामि बोधिं प्राप्स्यामि यावता।
ब्रह्मचर्यं चरिष्यामि कामांस्त्यक्ष्यामि पापकान्॥
बुद्धानामनुशिक्षिष्ये शीलसंवरसंयमे।
नाहं त्वरितरूपेण बोधिं प्राप्तुमिहोत्सहे॥
[1]परान्तकोटिं स्थास्यामि सत्त्वस्यैकस्य कारणात्।
क्षेत्रं विशोधयिष्यामि अप्रमेयमचिन्तियम्॥
नामधेयं करिष्यामि दश दिक्षु च विश्रुतं।
कायवाक्कर्मणी चाहं शोधयिष्यामि सर्वशः॥
शोधयिष्ये मनस्कर्म कर्म कर्त्तास्मि नाशुभम्। इति॥

न चात्र सार्वकालिकात्संवरग्रहणाज्जन्मान्तरापत्तिशङ्का कर्तव्या ऽत्रैव सूत्रे ऽक्षोभ्यप्रणिधानानुज्ञानादेवं ह्युक्तं। यथा तेनाक्षोभ्येण तथागतेन पूर्वं बोधिसत्त्वभू[10 b]तेनैवं वाग्भाषिता ' विसंवादिता मे बुद्धा भगवन्तो भवेयुर्यदि सर्वस्यां जातौ न प्रव्रजेयमिति। एका जातिः प्रयत्नेन संशोध्या विबुधात्मना। अन्यास्तु जातोराबोधेः सैव संशोधयिष्यतीत्युक्तेः॥ ॥ एवं शारिपुत्र बोधिसत्त्वेनाक्षोभ्यस्य तथागतस्यानुशिक्षितव्यं ' एवं शिक्षमाणः शारिपुत्र बोधिसत्त्वो महासत्त्वः सर्वस्यां जातौ प्रव्रजत्युत्पादाद्वा तथागतानामनुत्पादाद्वा ऽवश्यं गृहावासान्निष्क्रामति। तत्कस्य हेतोः। परमो ह्ययं शारिपुत्र लाभो यदुत गृहावासान्निष्क्रमणमिति। यावत् ' भार्यापुत्रदुहितृतृष्णा चास्य न भवतीति। यथा जन्मान्तरेष्वयं दोषो न भवति तथात्रैव वक्ष्यमाणमित्यास्तां तावदेतत्॥

1) अपरा° MS. Both परान्त and अपरान्त occur = «death», the latter form therefore being unmetric may be rejected.



तदेवं समात्तसंवरस्य सामान्यमापत्तिलक्षणमुच्यते। येनापत्तिलक्षणेन युक्तं वस्तु स्वयमप्युत्प्रेक्ष्य परिहरेन्न चापत्तिप्रतिरूपकेष्वनापत्तिप्रतिरूपकेषु च संमुह्येत। बोधिसत्त्वः सर्वसत्त्वानां वर्त्तमानानागतसर्वदुःखदौर्मनस्योपशमाय वर्त्तमानानागतसुखसौमनस्योत्पादाय च निःशाठ्यतः कायवाङ्मनःपराक्रमैः प्रयत्नं करोति। यदि तु [त]त्प्रत्ययसामग्रीं नान्वेषते तदन्तरायप्रतिकाराय न घटते अल्पदुःखदौर्मनस्यं बहुदुःखदौर्मनस्यप्रतिकारभूतं नोत्पादयति ' महार्थसिद्ध्यर्थं चाल्पार्थहानिं न करोति क्षणमप्युपेक्षते ' सापत्तिको भवति। संक्षेपतो [1]ऽनापत्तिः स्वशक्त्यविषयेषु कार्येषु तत्र निष्फलतया शिक्षयाप्रज्ञप्त्यभावात्। प्रकृतिसावद्यतया त्वन्यदृश्यत एव। यत्र स्वशक्त्यगोचरे पि त्यागसामर्थ्यादापत्तिः स्यात्तन्न चिन्त्यं ' सामान्यपापदेशना न — वात्तु ततो मुक्तिः॥ एतत्समासतो बोधिसत्त्वशिक्षाशरीरं। विस्तरतस्त्वप्रमाणकल्पापर्यवसाननिर्देशं। अथवा संक्षेपतो द्वे बोधिसत्त्वस्यापत्ती ' यथा शक्तियुक्तायुक्तमसमीक्ष्यारभते ' नि[वृत्तः समो]क्ष[11 a]ते सापत्तिको भवति। निरूप्य यथार्हमतिक्रामत्यक्षश्चण्डालदासेनापि चोदितः सापत्तिको भवति। कुतः॥

एतदध्याशयसंचोदन[2]सूत्रे वचनात्। अपि तु मैत्रेय चतुर्भिः कारणैः प्रतिभानं सर्वबुद्धभाषि ----- भिः। इह मैत्रेय प्रतिभानं सत्योपसंहितं भवति ' [3]नासत्योपसंहितं धर्मोपसंहितं भवति नाधर्मोपसंहितं। क्लेशहायकं भवति न क्लेशविवर्द्धकं। निर्वाणगुणानुशंससन्दर्शकं भवति न संसार[गुणा]नुशंससन्दर्शकं। एभिश्चतुर्भिः पेयालं। यस्य कस्यचिन्मैत्रेय एभिश्चतुर्भिः कारणैः प्रतिभानं प्रतिभाति प्रतिभास्यति वा ' तत्र श्राद्धैः कुलपुत्रैः कुलदुहितृभिर्वा बुद्धसंज्ञोत्पादयितव्या शास्तृसंज्ञां कृत्वा ' स धर्मः श्रोतव्यः। तत्कस्य हेतोः। यत्किंचिन्मैत्रेय सुभाषितं सर्वं तद्बुद्धभाषितं। तत्र मैत्रेय य इमानि प्रतिभानानि प्रतिक्षिपेन्नैतानि बुद्धभाषितानीति। तेषु चागौरवमुत्पादयेत्पुद्गलविद्वेषेण तेन सर्वबुद्धभाषितं प्रतिभानं प्रतिक्षिप्तं भवति। धर्मं प्रतिक्षिप्य धर्मव्यसनसंवर्तनीयेन कर्मणा ऽपायगामी भवति॥

1) °पगे MS.
2) K. F. 216.
3) °नत्यो° MS.

यः पुनरेतदभ्यासार्थं व्युत्पादितमिच्छति[1] ' तेनात्र शिक्षासमुच्चये तावच्चर्यामुखमात्रशि-
क्षणार्थमभियोगः करणीयः शिक्षारम्भस्यैव महाफलत्वात्। यथोक्तं प्रशान्त[2]विनिश्चयप्रातिहा-
र्यसूत्रे। यश्च मञ्जुश्रीर्बोधिसत्त्वो गङ्गानदीवालिकासमेभ्यो बुद्धेभ्यः प्रत्येकं सर्वेभ्यो गंगा-
नदीवालुकासमानि बुद्धक्षेत्राणि वशिराजमहामणिरत्नप्रतिपूर्णानि कृत्वा दद्यादेवं ददङ्ग-
5 ङ्गानदीवालिकासमान् कल्पान् दानं दद्याद् ' यो वा ऽन्यो मञ्जुश्रीर्बोधिसत्त्व इमानेवंरूपान्ध-
र्मान् श्रुत्वा एकान्तेन ग[11 b]त्वा चित्तेनाभिनिरूपयेदिमेष्वेवंरूपेषु धर्मेषु शिक्षिष्यामीति।
सो ऽशिक्षितो पि मञ्जुश्रीर्बोधिसत्त्वो ऽस्यां शिक्षायां छन्दिको वततरं[3] पुण्यं प्रसवति। न
त्वेव तद्दानमयं पुण्यक्रियावस्त्विति। तस्मादेवमनुशंसदर्शिना बोधिसत्त्वेन न कथंचिन्निव-
र्त्तितव्यं ' यथात्रैवाह। तत्र मञ्जुश्रीर्ये त्रिसाहस्रमहासाहस्रलोकधातुपरमाणुरजःसमाः
10 सत्त्वास्तेषामेकैकः सत्त्वो राजा भवेज्जम्बूद्वीपाधिपतिस्ते सर्व एवं घोषयेयुः ' यो महायानमुद्ग्र-
हीष्यति धारयिष्यति वाचयिष्यति पर्यवाप्स्यति प्रवर्त्तयिष्यति तस्य नखच्छेदेनमांसं
पञ्चपलिकेन दिवसेनावतारयिष्यामः तं चैतेनापक्रमेण जीविताद्व्यपरोपयिष्याम इति।
सचेन्मञ्जुश्रीर्बोधिसत्त्व एवमुच्यमाने नो त्रस्यति न संत्रासमापत्स्यते ऽन्तश एकचित्तोत्पादे-
नापि न बिभेति न विषीदति न विचिकित्सते ' उत्तरि च सद्धर्मपरिग्रहार्थमभियुज्यते
15 पाठस्वाध्यायाभियुक्तो विहरति ' अयं मञ्जुश्रीर्बोधिसत्त्वश्चित्तशूरो दानशूरः शीलशूरः
क्षान्तिशूरः वीर्यशूरः ध्यानशूरः प्रज्ञाशूरः समाधिशूरः इति वक्तव्यः॥ सचेन्मञ्जुश्रीर्बोधि-
सत्त्वः तेषां बधकपुरुषाणां न कुप्यति न रुष्यति न खिल दोषचित्तमुत्पादयति ' स मञ्जु-
श्रीर्बोधिसत्त्वो ब्रह्मसम इन्द्रसमो ऽकम्प्य इति॥

इतश्चात्ययकाले शिक्षादरो महाफलविपाकः ' तथा हि चन्द्रप्रदीपसूत्रे।

---

1) *Vyutpādam* MS.

2) Nanjio 522, tr. A.D. 663 by Hiouen Thsang. K. F. 249. M. Vyutp. LXV. 52 (P. — *nirdeçaḥ*).

3) These words are of course corrupt. If I rightly understand the corresponding Tibetan བསོད་ནམས་ཆེས་མང་དུ་སྐྱེད་དེ (14. a. 6), some form like *adhikataram* (cf. Pali) must be replaced.



[1] बुद्धान कोटीनयुतानुपस्थिहे। दत्तेन पानेन प्रसन्नचित्तः।
छत्रैः पताकाभि च दीपमालैः। कल्पान कोट्यो यथ गङ्ग[12 a]वालिकाः॥
यश्चैव सद्धर्मे प्रलुज्यमाने ' निरुध्यमाने सुगतस्य शासने।
रात्रिं दिवं एक चरेय शिक्षाम्। इदन्ततः पुण्यविशिष्ट भोति॥

तस्मात्कर्तव्यो ऽत्रादरः॥ उक्तानि च सूत्रान्तेषु बोधिसत्त्वशिक्षापदानि। यथोक्तमार्यरत्न- 5
मेघे ' कथं च कुलपुत्र बोधिसत्त्वा बोधिसत्त्वशिक्षासंवरसंवृता भवन्ति। इह बोधिसत्त्वः
एवं विचारयति। न प्रातिमोक्षसंवरमात्रकेण मया शक्यमनुत्तरां सम्यक्संबोधिमभिसं-
बोद्धुं। किं तर्हि यानीमानि तथागतेन तेषु तेषु सूत्रान्तेषु बोधिसत्त्वसमुदाचारा ' बोधिस-
त्त्वशिक्षापदानि प्रज्ञप्तानि तेषु तेषु मया शिक्षितव्यमिति विस्तरः। तस्मादस्माद्विधेन मन्द-
बुद्धिना दुर्विज्ञेयो विस्तरोक्तत्वाद्बोधिसत्त्वस्य संवरः ' ततः किं युक्तं॥ मर्मस्थानान्यतो 10
विद्याद्येनानापत्तिको भवेत्॥ कतमानि च तानि मर्मस्थानानि यानि हि सूत्रान्तेषु महा-
यानाभिरतानामर्थायोक्तानि॥ यदुत।

आत्मभावस्य भोगानां त्र्यध्ववृत्तेः शुभस्य च।
उत्सर्गः सर्वसत्त्वेभ्यस्तद्रक्षा शुद्धिवर्द्धनम्॥

एष बोधिसत्त्वसंवरसंग्रहः। यत्र बोधिसत्त्वानामभ्यासविश्रामे ऽप्यापत्तयो व्यवस्थाप्यन्ते॥ 15

यथोक्तं बोधिसत्त्वप्रातिमोक्षे ' यो बोधिसत्त्वेन मार्गः परिगृहीतः सर्वसत्त्वानां कृतेन
दुष्खमु[प]गामी। सचेद्बोधिसत्त्वस्य तं मार्गं परिगृह्यावस्थितस्यापि कल्पकोटेरत्ययेनैकं
सुखचित्तमुत्पद्येतान्तशो निषद्य[2] चित्तमपि ' तत्र बोधिसत्त्वेनैवं चित्तमुत्पादयितव्यं सर्वस-
त्त्वानामात्ययिकं परिगृह्यैतदपि मे वर्जयन्निषीदामीति। परिगृह्येत्तम[3]। [12 b]पि मञ्जुश्री-
राह॥ पञ्चेमानि देवपुत्रानन्तर्याणि यैरानन्तर्यैः समन्वागता बोधिसत्त्वाः क्षिप्रमनुत्तरां सम्य- 20
क्संबोधिमभिसंबुध्यते। कतमानि पञ्च। यदा देवपुत्र बोधिसत्त्वो ऽध्याशयत्यनुत्तरायां सम्य-

---

1) Metre Upajāti, cf. Colebrooke Misc. Ess.[2] ii. 94. For °*dharmĕ* cf. Senart on Mhv. i. 43. 8.

2) °*dyā* MS.

3) Four or five syllables wrongly restored a sec. manu. The Tib. (15. b. 1) makes Mañjuçrī quote from a work on Vinaya.

कसंबोधौ चित्तमुत्पाद्य नान्तरा श्रावकप्रत्येकबुद्धभूमौ चित्तमुत्पादयतीदं देवपुत्र प्रथममानन्तर्यं। सर्वस्वपरित्यागितायां चित्तमुत्पाद्य नान्तरा मात्सर्यचित्तेन सार्द्धं संन्यसतीदं देवपुत्र द्वितीयमानन्तर्यम्। सर्वसत्त्वा मया त्रातव्या इत्येवं चित्तमुत्पाद्य नान्तरा सीदतीदं देवपुत्र तृतीयमानन्तर्यम्। अनुत्पन्नानिरुद्धान्सर्वधर्मानवभोत्स्य इत्येवं चित्तमुत्पाद्य नान्तरा दृष्टिगतेषु प्रपततीदं देवपुत्र चतुर्थमानन्तर्यम्। एकक्षणसमायुक्तया प्रज्ञया सर्वधर्मानवभोत्स्य इत्येवं चित्तमुत्पाद्य नान्तरा तिष्ठति न विष्ठीवति[1] अप्राप्तायां सर्वज्ञतायामिदं देवपुत्र पञ्चममानन्तर्यमिति ॥

तस्मादेवमात्मभावभोगपुण्यानामविरतमुत्सर्गरक्षाशुद्धिवृद्धयो यथायोगं भावनीयाः ॥ तत्र तावदुत्सर्गार्थं परिग्रहदोषभावनाद्वारेण वैराग्यमुत्पादयेत् त्यागानुशंसांश्च भावयेत्। यथा तावच्चन्द्रप्रदीपसूत्रे।

अध्यवसिता ये बालाः काये ऽस्मिन्पूतिके सम्यग्[2]।
जीविते चञ्चले ऽवश्ये मायास्वप्ननिभोपमे ॥
अतिरौद्राणि कर्माणि कृत्वा मोहवशानुगाः।
ते यान्ति नरकान् घोरान् मृत्युयानगताबुधा, इति ॥

तथानन्तमुखनिर्हारधारण्या[3] [13][4] मप्युक्तं ॥ ये केचित् सत्त्वा न भवन्ति विग्रहाः परिग्रहस्तत्र निदानमूलम्। तस्मात्त्यजेद्यत्र भवेत् तृष्णा, उत्सृष्टतृष्णस्य हि धारणी भवेत् ॥ बोधिसत्त्वप्रातिमोक्षे कथितं। पुनरपरं शारिपुत्र बोधिसत्त्वः सर्वधर्मेषु परकीयसंज्ञामुत्पादयति, न कञ्चिद्भावमुपादत्ते। तत्कस्य हेतोः। उपादानं हि भयमिति ॥ आर्योग्रदत्तपरिपृ-

1) *Vishṭhihati* MS. The Tib. has མི་གཅོད་པ་ «does not pause», which would suggest some form like *vishṭabhyate*.

2) The metre requires some word like *sadā*.

3) The Tib. title of this work is the same as that of a work in the «Kanjur», but there, as usually in the Chinese, translated Anantamukha-sādhaka-dh° (K.F. 250). In some of the Chinese versions the title corresponds with that in the text (Nanjio, 357, 358).

4) The leaf of the archetype numbered 13 is now lost.



च्छायामप्याह। यद्दत्तं तन्न भूयो रक्षितव्यं। यद्गृहे तद्रक्षितव्यं। यद्दत्तं तत्तृष्णाक्षयाय। यद्गृहे तत्तृष्णावर्द्धनं। यद्दत्तं तदपरिग्रहं यद्गृहे तत्सपरिग्रहं। यद्दत्तं तदभयं यद्गृहे तत्सभयम्। यद्दत्तं तद्बोधिमार्गोपस्तम्भाय। यद्गृहे तन्मारोपस्तम्भाय। यद्दत्तं तदक्षयम्। यद्गृहे तत्क्षयि। यद्दत्तं ततः सुखम् यद्गृहे तदारभ्य दुःखं। यद्दत्तं तत्क्लेशोत्सर्गाय। यद्गृहे तत्क्लेशवर्द्धनम्। यद्दत्तं तन्महाभोगतायै। यद्गृहे न तन्महाभोगतायै। यद्दत्तं तत्सत्पुरुषकर्म। यद्गृहे तत्कापुरुषकर्म। यद्दत्तं तत्सत्पुरुषचित्तग्रहणाय। यद्गृहे तत्कापुरुषचित्तग्रहणाय। यद्दत्तं तत्सर्वबुद्धप्रशस्तं। यद्गृहे तद्बालजनप्रशस्तम् ॥

यावत्सचेत्पुनरस्य पुत्रे ऽतिरिक्ततरं प्रेमोत्पद्यते — तथा ऽन्येषु सत्त्वेषु तेन तिसृभिः परिभाषणाभिः स्वचित्तं परिभाषितव्यं। कतमाभिस्तिसृभिः। सम्यक्[प्र]युक्तस्य समचित्तस्य बोधिसत्त्वस्य बोधिर्न विषमचित्तस्य बोधिर्न मिथ्याप्रयुक्तस्य, अनानात्वचारिणो बोधिसत्त्वस्य बोधिर्न नानात्वचारिणः। आभिस्तिसृभिः परिभाषणाभिः स्वचित्तं परिभाष्य — न्यत्रे[1] (?) ऽमित्रसंज्ञोत्पादयितव्या ऽमित्रं ह्येतन्मम, न मैत्रं। यो ऽहमस्यार्थाय बुद्धप्रज्ञप्ता –ः शिक्षाया उद्धुरताहत्वा ऽस्मिन् पुत्रे ऽतिरिक्ततरं प्रेमोत्पादयामि, न तथान्येषु सत्त्वेषु। तेन तथा तथा चित्तमुत्पादयितव्यं यथा यथास्य सर्वसत्त्वेषु पुत्रप्रेमानुगता मैत्र्युत्पद्यते, आत्मक्षमानु — मैत्र्युत्पद्यते। एवं चानेन योनिशः प्रत्यवेक्षितव्यं। अन्यत एष आगत, अन्यतो ऽहं। सर्वसत्त्वा अपि मम पुत्रा अभूवन्। अहं च सर्वसत्त्वानां पुत्रो ऽभूवम्। नेह संविद्यते कश्चित्कस्यचि — — — परो वा। यावदेवं हि गृहपते, गृहिणा बोधिसत्त्वेन न कस्मिंश्चिद्वस्तुनि ममत्वं परिग्रहो वा कर्तव्यः। नाध्यवसानं, न नियतिः न तृष्णानुशयः कर्तव्यः। सचेत्पुनर्गृहपते गृहिणं बोधिसत्त्वं याचनक उपसंक्रम्य किञ्चिदेव वस्तु याचेत, सचेदस्य वस्त्वपरित्यक्तं भवेत्, नैवं चित्तं निध्यापयितव्यं[2]। यद्यहमेतद्वस्तु परित्यजेयं यदि वा न परित्यजेयमवश्यं ममैतेन वस्तुना विनाभावो भविष्यति। अकामकेन मरणमुप

1) पुत्रे (?) cf. infra.

2) °*dhyap*° in the transcript.

गन्तव्यं भविष्यति ' एतच्च वस्तु मां त्यक्ष्यति अहं चैनं त्यक्ष्यामि । एतच्च वस्तु परित्यज्याहं आत्तसारः कालं करिष्यामि एतच्च परित्यक्तं न मे मरणकाले चित्तं पर्यादाय स्थास्यति । एतच्च मे मरणकाले प्रीतिं प्रामोद्यमविप्रतिसारितां च जनयिष्यति । सचेत्पुनरेवमपि समन्वाहरन् शक्नुयात्तद्वस्तु परित्यक्तुम् ' तेन स याचनकश्चतसृभिः संज्ञप्तिभिः संज्ञपयितव्यः । कतमाभिश्चतसृभिः । दुर्बलस्तावदस्म्यपरिपक्वकुशलमूलः । आदिकर्मिको महायाने । न चित्तस्य वशी परित्यागाय । सोपादानदृष्टिको ऽस्मि । अहंकारममकार[14 a]स्थितः । क्षमस्व सत्पुरुष ' मा परिताप्सी[1]स्तथाहं करिष्यामि तथा प्रतिपत्स्ये ' तथा वीर्यमारप्स्ये ' यथैनं च तवाभिप्रायं परिपूरयिष्यामि सर्वसत्त्वानां चेति । एवं खलु गृहपते ' तेन याचनकः संज्ञपयितव्यः । एतच्च संज्ञपनमुपरि दोषपरिहारायोक्तं । मा भूद्बोधिसत्त्वस्य तत्राप्रसादो बोधिसत्त्वे वा याचनकस्येति । न तु मात्सर्यमेवं अनवद्यं भवति कुत्सितं चेदं भगवता बोधिसत्त्वानां ॥

यथाह बोधिसत्त्वप्रातिमोक्षे । चत्वार इमे शारिपुत्र धर्मा बोधिसत्त्वानां न संविद्यन्ते । कतमे चत्वारः । शाठ्यं बोधिसत्त्वानां न संविद्यते । मात्सर्यं बोधिसत्त्वानां न संविद्यते । ईर्ष्यापैशुन्यं बोधिसत्त्वानां न संविद्यते । नाहं शक्तो ऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुमिति ' लीनं चित्तं बोधिसत्त्वानां न संविद्यते ' यस्येमे शारिपुत्र चत्वारो धर्माः संविद्यन्ते स पण्डितैर्ज्ञातव्यः ' कुहको वतायं ' लपको वतायं ' नष्टधर्मो वतायं ' संक्लेशधर्मो वतायं लोकामिषगुरुको वतायं भक्तचोडकपरमो वतायमिति । तथा चित्तशूराः खलु पुनः शारिपुत्र बोधिसत्त्वा भवन्ति । यावत्स्वहस्तपरित्यागी भवति पादपरित्यागी ' नासापरित्यागी ' शीर्षपरित्यागी ' अङ्गप्रत्यङ्गपरित्यागी ' पुत्रपरित्यागी ' दुहितृपरित्यागी ' भार्यापरित्यागी ' रतिपरित्यागी ' परिवारपरित्यागी ' चित्तपरित्यागी ' सुखपरित्यागी ' गृहपरित्यागी ' वस्तुपरित्यागी ' देशपरित्यागी रत्नपरित्यागी ' सर्वस्वपरित्यागीति ॥

1) °*tāpsīs* MS.



एवं नारायणपरिपृच्छायामप्युक्तं ' न तद्वस्तूपादातव्यं यस्मि[न्] [14 b]वस्तुनि नास्य त्यागचित्तमुत्पद्यते ' न त्यागबुद्धिः क्रमेत ' न स परिग्रहः परिग्रहीतव्यो यस्मिन्परिग्रहे नोत्सर्जनचित्तमुत्पादयेन् न स परिवार उपादातव्यो यस्मिन्याचनकैर्याच्यमानस्य परिग्रहबुद्धिरुत्पद्यते । न तद्राज्यमुपादातव्यं न ते भोगा न तद्रत्नमुपादातव्यं यावन्न तत्किंचिद्वस्तूपादातव्यं ' यस्मिन् वस्तुनि बोधिसत्त्वस्यापरित्यागबुद्धिरुत्पद्यते ॥ अपि तु खलु पुनः कुलपुत्र बोधिसत्त्वेन महासत्त्वेनैवं चित्तमुत्पादयितव्यं ' अयं ममात्मभावः सर्वसत्त्वेभ्यः परित्यक्तः उत्सृष्टः । प्रागेव बाह्यानि वस्तूनि यस्य यस्य सत्त्वस्य येन येन यद्यत्कार्यं भविष्यति तस्मै तस्मै तद्दास्यामि सत्संविद्यमानं हस्तं हस्तार्थिकेभ्यो दास्यामि पादं पादार्थिकेभ्यो नेत्रं नेत्रार्थिकेभ्यो दास्यामि । मांसं मांसार्थिकेभ्यः शोणितं शोणितार्थिकेभ्यो मज्जानं मज्जार्थिकेभ्यो ऽङ्गप्रत्यङ्गान्यङ्गप्रत्यङ्गार्थिकेभ्यः शिरः शिरोर्थिकेभ्यः परित्यक्ष्यामि । कः पुनर्वादो बाह्येषु वस्तुषु यदुत धनधान्यजातरूपरजतरत्नाभरणहयगजरथवाहनग्रामनगरनिगमजनपदराष्ट्रराजधानीपत्तनदासीदासकर्मकरपौरुषेयपुत्रदुहितृपरिवारेषु । अपि तु खलु पुनर्यस्य यस्य येन येन यद्यत्कार्यं भविष्यति तस्मै तस्मै सत्त्वाय तत्तद्देयं संविद्यमानं दास्यामि । अशोचन्नविप्रतिसारी अविपाकप्रतिकाङ्क्षी परित्यक्ष्यामि । अनपेक्षो दास्यामि सत्त्वानुग्रहाय सत्त्वकारुण्येन सत्त्वानुकम्पया तेषामेव सत्त्वानां संग्रहाय ' यथा मे ऽमी सत्त्वाः सं[15 a]गृहीता बोधिप्राप्तस्य धर्मज्ञानकाः स्युरिति । पेयालं ॥

तद्यथापि नाम कुलपुत्र भैषज्यवृक्षस्य मूलतो वा ह्रियमाणस्य गण्डतः शाखातः त्वक्तः पत्रतो वा ह्रियमाणस्य पुष्पतः फलतः सारतो वा ह्रियमाणस्य नैवं भवति विकल्पो ' मूलतो मे ह्रियते यावत्सारतो मे ह्रियत इति ॥ अपि तु खलु पुनरविकल्प एव हीनमध्योत्कृष्टानां सत्त्वानां व्याधीनपनयति । एवमेव कुलपुत्र बोधिसत्त्वेन महासत्त्वेनास्मिंश्चातुर्महाभौतिके आत्मभावे भैषज्यसंज्ञोत्पादयितव्या येषां येषां सत्त्वानां येन येनार्थः तत्तदेव मे हरन्तु हस्तं हस्तार्थिनः पादं पादार्थिन इति पूर्ववत् ॥

आर्याक्षयमतिसूत्रे ऽपि देशितं । अयमेव मया कायः सर्वसत्त्वानां किंकरणीयेषु क्षपयितव्यः । तद्यथापि नामेमानि बाह्यानि चत्वारि महाभूतानि पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुश्च

नानासुखैर्नानापर्यायैर्नानारम्बणैर्नानोपकरणैर्नानापरिभोगैः सत्त्वानां नानोपभोगं गच्छन्ति[1]।
एवमेवाहमिमं कायं चतुर्महाभूतसमुच्छ्रयं नाना[सुखै]र्नानापर्यायैर्नानारम्बणैर्नानोपकरणैर्ना-
नापरिभोगैर्विस्तरेण सर्वसत्त्वानामुपभोग्यं करिष्यामीति । स इममर्थवशं संपश्यन् कायदु-
ःखतां च प्रत्यवेक्षते कायदुःखतया च न परिखिद्यते सत्त्वावेक्षयेति ॥

5 [2]आर्यवज्रध्वजसूत्रे ऽप्याह ॥ इति हि बोधिसत्त्व आत्मानं सर्वसत्त्वेषु निर्यातयन् स-
र्वकुशलमूलोपकारित्वेन सर्वसत्त्वानां कुशलमूलैः स[मन्वा][15 b]हरन् प्रदीपसममात्मानं
सर्वसत्त्वेषूपनयन् सुखसममात्मानं सर्वसत्त्वेष्वधितिष्ठन् । धर्मकुक्षिसममात्मानं सर्वजगति
संधारयन् आलोक[3]सममात्मानं सर्वसत्त्वेष्वनुगच्छ[न्] [4]जगत्प्रतिष्ठापनसममात्मानं संप-
श्यन् । कुशलमूलप्रत्ययभूतमात्मानं सर्वजगत्यनुगच्छन् । मित्रसममात्मानं सर्वसत्त्वेषु नि-
10 योजयमानो ऽनुत्तरसुखमार्गसममात्मानं सर्वसत्त्वेषु संदर्शयमानः अनुत्तरसुखोपधानसममा-
त्मानं सर्वसत्त्वेषु परिशोधमानः सूर्यसममात्मानं सर्वजगति समीकुर्वाणः[5] । एवंधर्मोपेतमा-
त्मानं सर्वसत्त्वेषु प्रयच्छन् । यथाकामकरणीयवश्यमात्मानं सर्वलोके संपश्यन्नप्रचेत्या भवि-
ष्यामः ... सर्वजगत्स्थित्यात्मानं संपश्यन् । समचित्ततां सर्वजगति निष्पादयन् । सर्वोपकर-
णीयमात्मानं संपश्यन् । सर्वलोकसुखदातारमात्मानं प्रत्यवेक्षमाणः । सर्वजगतो दानप-
15 तिमात्मानमधिमुच्यमानः सर्वलोकज्ञानसममात्मानं कुर्वाणः बोधिसत्त्वचर्याप्रयुक्तमात्मानं
संजनयमानः । यथावादितथाकारित्वेनात्मानं नियोजयमानः । सर्वज्ञतासंनाहसंनद्धमात्मानं
प्रत्यवेक्षमाणः । पूर्वनिमन्त्रितं चित्तमनुपालयमानः । प्रतिपत्तौ चात्मानं स्थापयमानो बो-

1) MS. गच्छति.

2) Tib. (19 a 1) འཕགས་པ་རྡོ་རྗེ་རྒྱལ་མཚན་གྱི་མདོ prob. the same as the work in Kahgyur III. 30 (K. F. 211).

3) «Light» Tib. སྣང་བ (19 a. 3).

4) The Tib. has འགྲོ་བ་ཐམས་ཅད་ཀྱི་གཞི lit. «abode of all men» (19 a. 3).

5) स यथा समं निपतति marginal gloss.



धिसत्त्वत्यागचित्ततां मनसि कुर्वाण उद्यानभूतमात्मानं सर्वसत्त्वेषु संपश्यन् । धर्मरतिभूत-
मात्मानं सर्वलोकेष्वादर्शयमानः [16 a]सौमनस्यदातारमात्मानं सर्वसत्त्वानामधितिष्ठन् ।
अनन्तप्रीतिसंजननमात्मानं सर्वजगतो निर्यातयमानः सर्वशुक्लधर्माय द्वारभूतमात्मानं
सर्वलोके संधारयमानः । बुद्धबोधिदातारमात्मानं सर्वसत्त्वानां प्रणिदधत् । पितृसममा-
त्मानं सर्वप्रजायां नियोजयमानः । सर्वोपकरणावैकल्याधिकरणमात्मानं सर्वसत्त्वधातौ 5
प्रतिष्ठापयमानः ॥

इति हि बोधिसत्त्व आत्मानमुपस्थायकत्वाय[1] ददानः याचनकेषु नीचमनसिकारचित्तो
भूम्यास्तरणाधिष्ठानचेता धरणिसमसर्वदुःखसहनमनसिकारप्रवृत्तः सर्वसत्त्वोपस्थाना-
क्लान्तमानसप्रयुक्तो बालजनदुष्कृतस्थिरः स्थावराधिवासनजात्यः अस्थितः कुशलमूला-
भियुक्तः अप्रयुक्तसर्वलोकधातूपस्थानः कर्णौ नासां[2] संपरित्यजन् याचनकेभ्य उपसंक्रान्तेभ्यो 10
बोधिसत्त्वचर्योपात्ततथागतकुलकुलीनसंभूतचित्तः सर्वबोधिसत्त्वानुस्मरणविहारप्रसृतो
ऽसारात्सर्वत्रैलोक्यात्स – – त्यवेक्षमाणः स्वशरीरानध्यवसितसंतानः अनिकेतसर्वबुद्धध-
र्मानुस्मृतिविहार्यसाराच्छरीरात्सारादानाभिप्राय इति हि बोधिसत्त्वो जिह्वां याचितः
समानो म – – – वाता प्रेमणीयया मैत्र्योपचारवितततया भद्रे सिंहासने राजार्हे निषाद्य तं
याचनकमभिभाषते हृष्टः । अरिष्ट[3]चित्तो भूत्वा ऽनतचित्तो ऽनुपहतचित्तो महात्मन्सत्त्वा – – 15
[चि] [16 b]त्तो बुद्धवंशसंभूतचित्तो ऽलुलितसंतान[4]चित्तो महास्थामबलाधानो ऽनध्यवसि-
तशरीरचित्तो ऽनभिनिविष्टवचनचित्तो जानुमण्डलप्रष्ठितकायो भूत्वा स्वकान्मुखाज्जि-
ह्वा – – याचनकस्य सर्वशरीरमधीनं कृत्वा वाचं प्रमुञ्चन् स्निग्धां मृद्वीं प्रेमणीयां मैत्र्यो-
पचारां । गृहाण त्वं मम जिह्वां यथा कामकरणीयां कुरु । तथा कुरु यथा त्वं प्रीतो भवसि

1) *Upasthāyaka* = «servant» Divy. et alibi, buddhice. The form in °*tva* is new.

2) The reading is doubtful.

3) My emendation is founded on the MS. reading *arushta* under which has been written in a much later hand *akushta*.

4) This determines the meaning of *santāna* ('fixedness of mind') in Mhv. I. 90. 4, ubi v. Senart (I. 446).

प्रीतमानस आत्मना प्रमुदितो हृष्टः प्रीतिसौम[न]स्यजात इति स शिरः परित्यजन् सर्व-
धर्माग्रशिरः परमज्ञानमवतरन् सर्वसत्त्वपरित्राणशिरोबोधि -- गच्छन् सर्वजगदग्र्यशिरः
अनुपमज्ञानमभिलषन् सर्वदिक्किङ्करः प्राप्तुं[1] ज्ञानराजमधिमुच्यमानो ऽनुत्तरसर्वधर्मैश्वर्यशी-
र्षतां परिपूरयितुकामो ऽनन्तयाचनकप्रीतिपरिस्फुटचेता । इति हि बोधिसत्त्वो हस्तपादा-
5 न्परित्यजन्याचनकेभ्यः श्रद्धाहस्तप्रयुक्तेनानुग्रहचारित्रेण बोधिसत्त्वसिंहविक्रमत्यागप्रत-
तपाणिना व्यवसर्गाभिरतेन हस्तपादपरित्यागेन महाप्रतिष्ठानक्रमतलव्यतिहारेण बो-
धिसत्त्वचर्याध्यवसायेन वेदनानुपहततया दानप्रसादशक्त्या विमलचित्तोत्पादसंवरो निष्प-
र्यवस्थानज्ञा[17 a]नधर्मशरीराच्छिन्नाभिन्नालुप्तकायसंज्ञः अनीचचित्तः सर्वमारकर्माक-
ल्याणमित्रोपस्तब्धबृंहितचेताः[2] सर्वबोधिसत्त्वसंवर्णितकत्यागनिर्याण इति हि बोधिसत्त्वः
10 स्वशरीरमाक्षिप्य रुधिरमनुप्रयच्छन्याचनकेभ्यः प्रहर्षितबोधिचित्तो । बोधिसत्त्वचर्याभि-
लषितचित्तो ऽपर्यात्तवेदितचित्तः सर्वयाचनकाभिलषितचित्तः सर्वप्रतिग्राहकाविद्विष्टचित्तः
सर्वबोधिसत्त्वत्यागप्रतिपत्प्रतिपन्नो ऽनिवर्त्यया प्रीतिप्रश्रब्ध्या स्वशरीरानपेक्षचित्तः स्व-
शरीराद्रुधिरमनुप्रयच्छन् ज्ञानायतनमहायानप्रसृतचेता महायानाविनष्टमना इष्टमनास्तु-
ष्टमनाः प्रीतमनाः मुदितमना मैत्र्यमनाः सुखमनाः प्रसन्नमनाः प्रमुदितप्रीतिसौमनस्यजातो
15 मज्जामांसं स्वशरीरात्परित्यजन्याचनकेभ्यः कल्याणत्यागया । याचकाभिलषितया वाचा
तान् याचकानभिलपन्[3] । गृह्णन्तु भवन्तो मम शरीरान्मज्जामांसं यथा कामकरणाया तु-
ल्यप्रीतिविवर्द्धनेन त्यागचित्तेन । बोधिसत्त्वविज्ञगणनिषेवितेन महाकुश[लमू]लेन लोक-

1) MS. *prāptaṃ*. I construe the infin. with *adhimucyamāno*. On the next word, jñāna°, the following gloss (or part of text?) is added in the margin: *sarvato 'kṣi-çirosukhaṃ jñānam ity ukteḥ*.

2) The small upright bars added by the scribe or some (evidently not recent) reader of the MS. show that he took the compound as «cherished and saved by friends *from* the evil of all the actions of Māra». I confess however that this seems to me forced: that, I prefer to suppose that something has been lost after °*karmā* (unhurt by Māra's machinations), thus leaving the next compound quite clear and intelligible.

3) Cf. Pali *abhilāpa*.



मलापकर्षितेन प्रवरेणाध्याशयेन । सर्वबोधिसत्त्वसमतोपात्तैर्महादानारम्भैर्मनसाकाङ्क्षितैः
सर्वयाचकैरननुताप्यचित्तैर्दानवस्तुभिः अप्रत्यवेक्षितेन कर्मविपाकप्रत्ययेन सर्वलोकधात्व-
विमुखया सर्वबुद्धक्षेत्रालंकारव्यूहपूजया सर्वजगदभिमुखया करुणापरित्राणतया । सर्वबुद्ध-
बोध्यभिमुखया । दशबल[1] -- [17 b]चारणया ऽतीतानागतप्रत्युत्पन्नसर्वबोधिसत्त्वाभिमुख-
या एककुशलमूलपरिचर्यया सर्ववैशारद्याभिमुखेनार्षभसिंहनादनदनेन त्र्यध्वाभिमुखेन[2] । स- 5
र्वाध्वसमताज्ञानेन -- लोकाभिमुखेनापरान्तकोटीगतकल्पव्यवसायेन बोधिसत्त्वप्रणिधाने-
नापरितस्यना[3]भिमुखेनाखेदचित्तोत्पादेन बोधिसत्त्वः स्वहृदयं परित्यजन्याचनकेभ्यो दान-
वंशशिक्षितचित्तः पारमितानिष्पादनचित्तः सर्वबोधिसत्त्वदानानुद्धतसुप्रतिष्ठितचित्तः । अ-
धिष्ठानसर्वयाचनकप्रतिमाननचित्तः । अध्याशयं परिशोधयमानः । सर्वजगत्परि[पाच][4]न-
निदानं महाप्रणिधानं प्रतिपद्यमानो बोधिसत्त्वचर्यायां संवसमानः सर्वज्ञतासंभारं संभर- 10
माणः प्रणिधिमरिञ्चन् सो ऽत्र यकृत्बुक्काफुप्फुषं याचकेभ्यः परित्यजन् याचनकाभिप्रसन्न-
या दृष्ट्या प्रसन्नप्रीत्याकारैर्नेत्रैर्बोधिसत्त्वनिर्यातेन प्रेम्णा ऽव्युत्थित[5]मनसिकारेण त्यागेना-
सारात्कायात्सुप्रत्यवेक्षितेन सारादानचित्तेन श्मशानपर्यन्तेन कायानुस्मृतिमनसिकारेण
वृकशृगालश्वभक्ष्यं शरीरं प्रत्यवेक्षमाणः परभक्तिमनसिकृतया । शरीरानित्यतया ऽपवि-
त्रशरीरेण परभक्तचेतनेन एवं धर्ममनसिकारप्रयुक्तो बोधिसत्त्वस्तान्याचनकाननिमिषं 15
प्रेक्षमाण एवं चित्तमुत्पादयति । यदि चाहमेतस्याचनकस्यैतच्छरीराद्दत्त्वं यकृत्बुक्का-
फुप्फुषं दद्यां । यदि वा न दद्यां । आयुःक्षयपर्यन्ते नैषो [18 a]नित्यः श्मशानपर्यवसान

1) Dh. s. § 75.

2) Dh. s. § 85.

3) MS. °परितस्यना For the form (not in ord. Sk.) see Childers s. v. *paritassanā*; compare also note to fol. [23 b] below.

4) I have conjectured that these are the missing letters from the Tib. which has འགྲོ་བ་ཐམས་ཅད་ཡོངས་སུ་སྨིན་པར་བྱ་བའི་རྒྱུར་སྨོན་ལམ་ཆེན་པོ

5) Both reading and sense are somewhat doubtful. Böhtlingk (W. Kürz. F) gives to *avyutthāna* the meaning «das Nichtnachgeben».

इति। स एवं मनसिकारसंतोषितेन सत्त्वेनैवं धर्मज्ञानेनाशयेन कल्याणमित्रसंज्ञाधिष्ठि-
तेन याचनकदर्शनेनासारात्कायात्सारमादातुकामो धर्मकामतया स्वमांसान्यपि परित्यज-
न्नेव तत्कुशलमूलं परिणामयतीत्यात्मभावोत्सर्गं कृत्वा ॥

भोगपुण्योत्सर्गो ऽप्यत्रैवोक्तः। इति हि बोधिसत्त्वो नानादक्षिणीयप्रतिग्राहकेष्वन्या-
5 न्यपुद्गलदिगागतेष्वप्रमेयकृपणवनीपकेषु बोधिसत्त्वश्रवागतेषु बोधिसत्त्वशब्दं श्रुत्वा ऽगतेषु
बोधिसत्त्वप्रत्ययावकाशगतेषु बोधिसत्त्वदानपूर्वं प्रणिधानश्रुतेषु ' बोधिसत्त्वप्रणिधान-
चित्तनिमन्त्रितेषु ' सर्वत्यागमनसाभिलषितेषु तृप्तयाचनकप्रतिमाननाचेतन आगतयाच-
नकक्षमापणचेतनो। मयैव तत्र दिशं गत्वा यूयं प्रतिमानयितव्या अभविष्यत[1] येन युष्मा-
कमागमनक्लमो न स्यात्। एवं समृद्धप्रणिपातेन क्षमयति सर्वयाचनकान् क्षमयित्वा
10 स्नापयित्वा विश्रामितशरीरान् कृत्वा तेभ्यो यदृच्छयोपकरणं प्रतिपादयति। यदिदं मणि-
रथ[ान् जम्बु][2]द्वीपकल्याणकन्यारत्नपरिपूर्णान् यदिदं सुवर्णरथान् जनपदविशुद्धकन्यार-
त्नपरिपूर्णान् ' यदिदं वैडूर्यरथान्वानुकुलगीतवाद्यसंप्रवादितपरिपूर्णान्। एवं स्फ-
टिकरथान् सुमुखसुवेशधारिस्वलंकृतरूपानप्रतिकूलदर्शनचतुरकन्यारत्नपरिपूर्णानिति।
तथात्रैव देशितं मणिरथान्वा ददानः सर्वरत्नजालसंछन्नानाजानेय[3]हस्त्युपेतान् '
15 [18 b]सवाहनान् ' चन्दनरथान् ददानो रत्नचक्ररथ्यप्रयुक्तान् रत्नसिंहासनप्रतिष्ठितान्
यावन्नानारत्नछत्रसंछन्नव्यूहान् रत्नवितानविततसंछन्नान् ध्वजपताकालंकृतचतुर्दि-

1) °*shyana* MS.

2) These syllables wholly or partly wanting in the MS., have been restored from the Tibetan (f. 22. a 1).

3) The MS. here and in the corresponding passages at 19 a (p. 28.3) below has the *vox nihili*, *āyāneya*. I have succeeded in restoring the text in all three passages from the Tibetan equivalent ཅང་ཤེས. This ought of course to have some form like *sarvajña* for its original; but clearly the Tibetan translator mistook the somewhat rare Sanskrit word (parallelled however in Pali) for a derivative of *jñā*. It may, however, be noted that Indian tradition, as represented by the *Açva-tantra* cited by B. and R. does connect the word with that root and not with the Vedic *ājāni*.



क्कान्[1] नानागन्धविधूपित——सारगन्धानुलेपानुलिप्तान् ' सर्वपुष्पव्यूहावकीर्णान् कन्याश-
तसहस्ररत्नसूत्रप्रकर्षितानभ्रान्तगमनानभ्रान्तसमवाहनप्रयुक्तान् ' यावदप्रतिकूलमनोज्ञप्र-
वातगन्धान् सुदुहितृपुत्रवचनोपचारप्रयुक्तान्। विविधगन्धचूर्णसम्भृतकृतोपचारानिति ॥

पुनरत्रैवाह। आत्मानं च सर्वसत्त्वानां निर्यातयन्नुपस्थानं वा सर्वबुद्धानामु-
पाददानो राज्यं वा परित्यजन् पट्टभेदकं वा नगरराजधानीं सर्वालंकारभूषितां य- 5
थार्हं वा याचनकेषु सर्वपरिवारं परित्यजन् पुत्रदुहितृभार्यां वा ददानो याचनकेभ्यः स-
र्वगृहं वापसृजन्। य[ाव]त्सर्वोपभोगपरिभोगान् वा ददानः। एवं पानदानं रसदानमपि
बोधिसत्त्वो ददानो विविधान् कल्याणानुदारान् विशुद्धानविकलांस्तिक्तांल्लवणान्
कटुकान् कषायान् नानारसाग्र्योपेतान् सुस्निग्धान् विविधरसविधिनोपेतान् धातुक्षोभण-
समतास्थापनान् चित्तशरीरबलोपस्तम्भनान् प्रीतिप्रसादप्रामोद्यकल्पताजननान्। याव- 10
त्सर्वपरोपक्रमप्रतिषेधकान् सर्वव्याधिसमनारोग्यसंजननान्। एवं वस्त्रदानं पुष्पदानं
गन्धदानं विलेपनदानं माल्यदानं ' शयनदानमावासदानमपाश्रयदानं प्रदीपदानं च। ग्ला-
नप्रत्ययभैषज्य [19 a]परिष्कारान् बोधिसत्त्वो ऽनुप्रयच्छन् यावन् नानाभाजनानि विचि-
त्रसंभाराण्यनेककांस्यपात्रीरप्रमेयसंभारोपचिता हिरण्यसुवर्णरूप्यचूर्णपरिपूर्णास्तानि
बुद्धेभ्यो भगवद्भ्यो ददानो ऽचिन्त्यदक्षिणीयाधिमुक्तचेता बोधिसत्त्वरत्नेभ्यो वा ददानः ' 15
कल्याणमित्रसुदुर्लभचित्तोत्पादेन आर्यसंघाय वा ददानः ' बुद्धशासनोपस्तम्भाय पुद्गलाय
वा ददानः ' श्रावकप्रत्येकबुद्धेभ्यो वार्यगुणसुप्रसन्नचित्ततया मातापितृभ्यां ददानो ' गुरु-
शुश्रूषोपस्थानचित्ततया आचार्यगुरुदक्षिणीयेभ्यो वा ददानस्तत्र तत्र गुरुसंभाराववादशि-
क्षणप्रयुक्तः ' अशन[2]वसनं वा कृपणवनीपकयाचनकेभ्यो ददानः ' सर्वसत्त्वाप्रतिहतचक्षु-
र्मैत्रीपरिभावितचित्ततया। पेयालं ॥ 20

इति हि बोधिसत्त्वो हस्त्याजानेयान्[3] ददानः सप्ताङ्गसुप्रतिष्ठितान् ' षष्टिहा-

1) New form: *Caturdiçam* (indecl.) in lexx. cf. Pali *catuddisa*.

2) असन° MS.

3) See p. 26, note 3. For the order of members in the compound see B. & R. s. v. आजानेय.

यनान् षड्गन्त्रोपेतान्[1] पद्मवर्णान् सुखविशुद्धान् सुवर्णालंकारान् हेमजालप्रतिच्छन्नश-
रीरान् नानारत्नविचित्रालंकारजालशुण्डप्रक्षिप्तव्यूहान् सुवर्णकल्याणान् कल्याण-
[चारु]दर्शनान् । अक्लान्तयोजनसहस्रगमनोपचारान् अश्वाजानेयान्वा[2] ददानः । सुखवा-
हनसुखशरीरोपेताननुजवसंपन्नांश्चतुर्दिग्गमनाहारजवोपेतानारोहसंपन्नान् दिव्यकल्या-
णचारुसदृशसर्वविभूषणोपेतान् । स तान् ददानः परित्यजन् गौरवेण गुरुजनेभ्यः
कल्याणमित्रमातापितृभ्यः कृपणवनीपकयाचनकेभ्यः सर्वजगत्प्रतिग्राहकेभ्यो मुक्तचि-
त्ततया ददानो । नागृहीतचित्ततया[3]वृसजन्महाकरुणापरिस्फुटेन सन्तानेन महात्याग-
परिमाणबो[19 b]धिसत्वगुणेषु प्रतिपद्यमानो ऽभिज्ञातबोधिसत्वाध्याशयान् परिशोधय-
मानो यावदिति हि बोधिसत्व आसनदानं ददानः परित्यजन् राजभद्रासनानि वैडूर्यपाद-
कानि सिंहप्रतिष्ठितानि सुवर्णसूत्ररत्नजालवितानान्यनेकचीवरस्पर्शोपितप्रज्ञप्तानि स-
र्वसारगन्धवासितोपचाराणि विचित्रमणिराजसमुच्छ्रितध्वजान्यनेकरत्नकोटीनियुतशतस-
हस्रालंकारव्यूहानि हेमजालवितानविततानि सुवर्णकिङ्किणीजालसंघटितमनोज्ञनादनि-
र्घोषशब्दानि महात्यासनान्यभ्युद्गतो[द्विड्ढ][4]चतुर्दर्शनान्येकच्छत्रमहापृथिव्यनुशासननिष-
दनाभिषिक्तानि । सर्वराज्यैश्वर्याधिपतेय[5]नियतनिषद्याप्रतिहतचक्रशासनानुशासनसर्व-
राजाधिपतेये प्रवर्तन्ते[6]। एवं यावदिति हि बोधिसत्वश्छत्राणि ददानः परित्यजन्महा-
रत्नव्यूहप्रतिमण्डितानि रत्नदण्डानि किङ्किणीजालसंछन्नानि । रत्नसूत्रकर्णकण्ठाव-

1) MS. षड्गत्रोपे° I have supposed a neuter *gantra*, a by-form of *gantrī* (cf. Buddhacarita II, 12—a similar passage to this. See Cowell's preface. p. XV).

2) MS. *açvāyāneyamvā* (last letters indistinct); see p. 26, note 3 above.

3) «With no niggardliness of mind». See R. Morris in *Academy*, 25 Feb. 1888.

4) These two letter-groups are quite uncertain. A marginal note has: उच्छ्रित ऊर्द्ध्वदृष्टिदृश्य.

5) *Adhipateya*, a Palicism not hitherto noted in Sanskrit; *niyata* (if the reading be correct) apparently = «regularly enjoined for».

6) The sentence, if the reading be right must apparently be parenthetical: «(and he, sc. the recipient of these gifts, flourishes in sovereignty)».



लीविनामितवैडूर्यमणिहाराभिप्रलम्बितानि नन्दीघोषमनोज्ञशब्दोपचाराणि हेमजा-
लाभ्यन्तरविशुद्धच्छदनानि रत्नशलाकालंकारशतसहस्रविततानि रत्नकोषसन्धारितान्य-
गुरुचन्दनान्येकसारवरगन्धकोटीनियुतशतसहस्रविधूपितवासितोपचाराणि जाम्बुनदप्र-
भास्वरशुद्धानि । तादृशानां छत्राणामनेककोटीनियुतशतसहस्रालंकाराणां तदतिरिक्ता-
नि चासंख्येयकोटीनियुतशतसहस्रालंकाराण्यनपेक्षचित्तो ददानः परित्यजन्नवसृजन्नु-
प्रयच्छन्संमुखीभूतेभ्यो वा सत्वसारेभ्यो निर्वृतानां[1] वा तथागतानां चैत्यालंकाराय। धर्मप-
र्येष्टये बोधिसत्वकल्याणमित्रे[20 a]भ्यो वाभिज्ञातबोधिसत्वधर्मभाणकेभ्यो वा माता-
पितृभ्यां वा संघरत्ने वा सर्वबुद्धशासने वा यावत्सर्वप्रतिग्राहकेभ्यः स एवं तत्कुशलमूलं
परिणामयति ॥

यथा तावत्प्रथमायामेव परिणामनायां सर्वकुशलमूलप्रस्तावेषूपदिष्टं । एवं प्रणिधा-
नमुत्पादयति । कथमेतानि कुशलमूलानि सर्वजगदुपजीव्यान्युपकारिभूतानि भवेयुर्विशु-
द्धधर्मपर्यवसानानि येन सर्वसत्वानामेतैः कुशलमूलैर्नरकापायप्रतिप्रस्रब्धिर्भवति । तैर्यग्यो-
निकयामलौकिकाद्दुःखस्कन्धान्निवर्तयेयुः । स तानि कुशलमूलानि परिणामयन्नेवं
तत्कुशलमूलं परिणामयति । अनेनाहं कुशलमूलेन सर्वसत्वानां नयनं भवेयं सर्वदुःखस्क-
न्धविनिवर्तनाय । सर्वसत्वानां त्राणं भवेयं सर्वक्लेशपरिमोचनतया । सर्वसत्वानां शरणं भवेयं
सर्वभयारक्षणतया । सर्वसत्वानां गतिर्भवेयम् सर्वभूम्यनुगमनतया । सर्वसत्वानां परायणं
भवेयमत्यन्तयोगक्षेमप्रतिलम्भतया । सर्वसत्वानां आलोको भवेयं वितिमिरज्ञानसंद-
र्शनतया । सर्वसत्वानां उल्का भवेयमविद्यातमोऽन्धकारविनिवर्तनतया । सर्वस-
त्वानां प्रद्योतो भवेयमत्यन्तविशुद्धिप्रतिष्ठापनतया । सर्वसत्वानां नायको भवेयम-
चिन्त्यधर्मनयावतारणतया । सर्वसत्वानां परिणायको भवेयमनावरणज्ञान[2]स्कन्धोपन-
यनतया । पेयालं ॥ तच्चाध्याशयतः परिणामयति न वचनमात्रेण । तच्चोदग्र-
चित्तः परिणामयति । हृष्टचित्तः परिणामयति । प्रसन्नचित्तः परिणामयति । प्रमु-

1) = Pali *nibbuta*.

2) Cf. the name of a Bodhisattva quoted in B. and R. from Daçabhūmīçvara: Anāvaraṇajñānaviçuddhagarbha.

दितचित्तः स्निग्धचित्तः परिणामयति ' मैत्रचित्तः प्रेम[20 b]चित्तः अनुग्रहचित्तो हितचित्तः सुखचित्तः परिणामयति । तच्चैवं परिणामयति । इदं मम कुशलमूलं सर्वसत्वानां गतिविशुद्धये संवर्त्तेत ' उपपत्तिविशुद्धये संवर्त्तेत ' पुण्यमाहात्म्यविशुद्धये संवर्त्तेत ' अनभिभूततायां संवर्त्तेत ' अपर्यादानतायां संवर्त्तेत ' दुरासदचित्ततायां संवर्त्तेत ' स्मृत्यप्रमोषतायां[1] संवर्त्तेत ' गतिमतिविनिश्चयतायां संवर्त्तेत ' बुद्ध्यप्रमाणतायां संवर्त्तेत । कायकर्ममनस्कर्मसर्वगुणालंकारपरिपूर्या संवर्त्तेत[2] ॥ अनेन मे कुशलमूलेन ते सर्वसत्वाः सर्वबुद्धानारागयेयुरारागयित्वा[3] च मा विरागयेयुः[4] । तेषु च बुद्धेषु भगवत्सु प्रसादमभेद्यं प्रतिलभेरन् । तेषां च तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके धर्मदेशनां शृणुयुः । श्रुत्वा च सर्वां विमतीर्विनिवर्त्तयेयुः । यथाश्रुतं[5] च संधारयेयुः । सन्धारयन्तश्च प्रतिपत्त्या संपादयेयुः[6] । तांश्च तथागतानाराधयेयुः ' चित्तकर्मण्यतां च प्रतिलभेरन् ' अनवद्यानि कर्माणि समुदानयेयुः ' महत्सु च कुशलमूलेष्वात्मानं प्रतिष्ठापयेयुरत्यन्तं च दारिद्र्यं विनिवर्त्तयेयुः सप्त धनप्रतिलम्भांश्च परिपूरयेयुः सर्वबुद्धानां चानुशिक्षयेयुः कल्याणेन्द्रियप्रतिलम्भं चाधिगच्छेयुः ' उदाराधिमुक्तिसमतां च परिनिष्पादयेयुः ' सर्वज्ञज्ञाने चावकाशं प्रतिलभेरन् ' अप्रतिहतचक्षुष्मत्तां[7] च सर्वजगत्युत्पादयेयुः[8] । लक्षणालंकृततां च कायप्रतिपूरिं प्रतिलभेरन् । सर्वगुणालङ्कारां च वाक्यविशुद्धिं परि[21 a]गृह्णीयुः । संवृतेन्द्रियतां दशबलप्रयुक्तां चित्तकल्यतां समुदानयेयुः । अनि-

1) Compare *mushitaçruti* at F. 58 a. *infra* and M. Vyutp. there cited; also *asampramoshacāriṇo* at 23 b. *infra* and Pali forms quoted by R. Morris in *Academy*, 25 Feb. 1888.

2) The scribe here adds a figure noting that these ejaculations are ten in number.

3) 4) Words peculiar to Buddhist Sanskrit from which other curious forms are quoted in Divyāvad.; v. index.

5) The text of the MS. has *yathārutam*, but a marginal note doubtless refering to this, has *çrutā* (sic).

6) Here the scribe adds «5»; compare note (2).

7) क्षुनताद्य MS.

8) «10» added: see note (2) above.



श्रितविहारतां च परिपूरयेयुः । येन च सुखोपधानेन सर्वबुद्धाः समन्वागतास्तत्सुखोपधानप्रतिलब्धाः सर्वसत्वा भवेयुरिति ॥ यथा षष्ठी परिणामनोक्तेन विधिना परिणामयति । सर्वसत्वा ' ज्ञानाहाराद्भवन्तु असङ्गप्रयुक्तचेतसः ' आहारप्रज्ञाताविनो[1] ऽनध्यवसिताहाराः प्रीतिभक्षानिरामिषाहारा यावत् कामतृष्णाविनिवर्त्तकाः । सर्वसत्वाः धर्मरसमेघप्रवर्षका भवन्तु ' अनुत्तरधर्मरतिप्रीणितसन्तानाः । सर्वसत्वाः सर्वरसाग्रजिह्वा[2] भवन्तु रसनिमित्ताग्रहीतारः सर्वबुद्धधर्मचिन्तनप्रयुक्ताः अविपन्नयाना अग्रयाना उत्तमयानाः शीघ्रयाना महायानाः । सर्वसत्वा अतृप्तदर्शना भवन्तु बुद्धप्रीतिप्रतिलब्धाः । सर्वसत्वाः सर्वकल्याणमित्रदर्शनानुपहतसन्ताना भवन्तु । सर्वसत्वा अगदभैषज्यराजोपदर्शना भवन्तु ' सर्वसत्वाः क्लेशविषविनिवर्त्तकाः ' सर्वसत्वा आदित्यमण्डलोद्गत[3]दर्शना भवन्तु सर्वसत्वतमस्तिमिरपटलविधमन[4]त्वात् ॥

एवमात्मानमुपनिधाय स्वभावनानुकूल्येन पठितव्यं । सर्वसत्वानामभिरुचिरदर्शनतायां परिणामयामि ' सौमनस्यदर्शनतायां कल्याणदर्शनतायां परिणामयामि ' अभिलषितदर्शनतायां प्रहर्षितदर्शनतायां दौर्मनस्यादर्शनतायां बुद्धदर्शनोपेतायां परिणामयामि ॥

सर्वसत्वाः शीलगन्धोपेता भवन्त्वनाच्छेद्यशीला बोधिसत्वपारमिताशीला[21 b]: ॥ सर्वसत्वा दानवासिता भवन्तु सर्वत्यागपरित्यागिनः । सर्वसत्वाः क्षान्तिवासिता भवन्तु अक्षोभ्यचेतनाप्रतिलब्धाः । सर्वसत्वा वीर्यवासिता भवन्तु महावीर्ययानसन्नद्धाः । सर्वसत्वा ध्यानवासिता भवन्तु प्रत्युत्पन्नबुद्धसंमुखीभावस्थिताः समाधिप्रतिलब्धाः । सर्वसत्वा बोधिसत्वपरिणामनावासिता भवन्तु सर्वसत्वाः सर्वशुक्लधर्मवासिता भवन्तु सर्वाकुशलधर्मप्रहीणाः । सर्वसत्वा दिव्यशयनप्रतिलब्धा भवन्तु महाज्ञानाधिगमाय । सर्वसत्वा आर्यशयन-

1) MS. °*vino*. *Ātāpi* «zealous» cf. Divy. index; or read *tāyino*; cf., Morris, R. J.P.T.S. 1891—3, p. 54.

2) MS. apparently °ग्यागृह्वा.

3) So a secunda manu; originally °*odaragatad*°.

4) Böhtlingk, W.K.F. quotes Lalitavistara 36. 6.

प्रतिलब्धा भवन्तु। निःपृथग्जनबोधिचित्तावासनत्वात्सर्वसत्वाः सुखशयनप्रतिलब्धा भवन्तु। सर्वसंसारावचरदुःखपरिवर्जनत्वात्सर्वसत्वाः क्षेमशयनप्रतिलब्धा भवन्तु धर्मकामस्पर्शोपेताः[1]। सर्वसत्वाः परिशुद्धबुद्धक्षेत्रावभासा भवन्तु गुणावाससुप्रयुक्ता आर्यावासनिकेतोच्चलिताः। अनुत्तरसर्वबुद्धावासाविरहिताः। सर्वसत्वा बुद्धोपनिश्रय[2]विहारिणो भवन्तु। सर्वसत्वा अनन्तालोका भवन्तु सर्वबुद्धधर्मेषु सर्वसत्वा अप्रतिहतावभासा भवन्तु सर्वधर्मधात्वेकस्फरणाः। सर्वसत्वा आरोग्यशरीरा भवन्तु तथागतकायप्रतिलब्धाः। सर्वसत्वा भैषज्यराजोपमा भवन्तु अत्यन्ताकल्पन[3]धर्माणः। सर्वसत्वा अप्रतिहतभैषज्यस्तम्भोपमा भवन्तु जगच्चिकित्साप्रतिपन्नाः। सर्वसत्वा रोगशल्यनिरुद्धा भवन्तु सर्वज्ञारोग्यप्रतिलब्धाः। सर्वसत्वाः सर्वजगद्भैषज्यकुशला भवन्तु यथाशयभैषज्यप्रयोगसंप्रयोक्ता [22 a]रः॥ सर्वसत्वेषु सर्वरोगविनिवर्त्तनाय परिणामयामि। सर्वसत्वेष्वपर्यन्तस्थामबलशरीरतायां परिणामयामि। सर्वसत्वानां चक्रवाडपर्वतानवमर्द्य[4]कायबलोपपत्तये परिणामयामि। सर्वसत्वानां सर्वबलोपस्तम्भनातृप्ततायां परिणामयामि॥ सर्वसत्वा अप्रमाणभाजना भवन्त्वाकाशधातुविपुलाः स्मृतोन्द्रियोपेताः सर्वलौकिकलोकोत्तरभाषसंग्रहणाद्ग्रहणास्मृत्यसंप्रमूढाः। सर्वसत्वाः कल्याणविशुद्धिभावना भवन्तु। अतीतानागतप्रत्युत्पन्नसर्वबुद्धबोध्यभेद्प्रसादग्राहिणः। सर्वसत्वा कामङ्गमा[5] भवन्तु सर्वत्रगामिनो[6]बुद्धभूमिप्रतिलब्धाः। सर्वसत्वाः सर्वसत्वेष्वप्रतिहतचित्ता भवन्तु। सर्वसत्वा अनाभोगसर्वबुद्धक्षेत्रपरिस्फुटगमना भवन्तु। एकचित्तक्षणसर्वधर्मविक्रमाः। सर्वसत्वाः आत्ताल्पात्तसर्वलोकधातुगमना भवन्तु। अविश्राम्यमानमनोमयकायप्रतिलब्धाः।

1) Possibly *sparça* is here equivalent to the Pali *phāsu*. Cf. Childers, s. v.

2) The equiv. of Pali *upanissaya*, not hitherto found in Sanskrit.

3) The Tib. (26. a. 2) has རྣམ་པར་མི་འཁྲུགས་པའི་ཆོས་ཅན་ which I understand to mean «possessing the quality of excessive *sang froid*». In one of the polyglot lists of the thousand names of Buddhas I find མི་འཁྲུགས་ as the equivalent of Akshobhya.

4) No such derivative as *mardya* is quoted; but the general sense is clear.

5) This form hitherto in Pali only.

6) Not one of the *daça bhūmayaḥ*; but cf. the *daça balāḥ* Dh.-s. § 76.



सर्वसत्वाः सुखगमनमुक्ता भवन्तु सर्वबोधिसत्वचर्यानुप्रवेशिनः। अनेन कुशलमूलेन सर्वसत्वाः कल्याणमित्रात्यागचित्तानुत्सृष्टा भवन्तु कृतज्ञाः कृतानुपालनतया। सर्वसत्वाः कल्याणमित्रैः सहैकार्था भवन्तु सभागकुशलमूलसंग्रहणतया। सर्वसत्वाः कल्याणाशया भवन्तु कल्याणमित्रसंवसनसंपद्विहारानुधन्वनतया। सर्वसत्वाः कल्याणमित्रकुशलमूलकर्मविपाकविशुद्धा भवन्त्वेकप्रणिधानाः। सर्वसत्वा महायानाभिरूढाः[1] सं[22 b]प्रस्थिता भवन्त्वविष्कम्भितयानसर्वज्ञतापर्यवसानाः। सर्वसत्वाः प्रच्छादितकुशलमूला भवन्तु सर्वबुद्धावस्थागोपनप्रतिलब्धाः। सर्वसत्वा गुणज्ञानाभिच्छादिता भवन्तु सर्वलोकोपक्लेशव्य[प]वृत्ताः। सर्वसत्वा अच्छिन्नाविक्षिप्तशुक्लधर्माणो भवन्त्वविपन्नबुद्धधर्मप्रवाहाः। सर्वसत्वाश्छत्रभूता भवन्तु दशबलवितानान्विताः। सर्वसत्वा अत्यन्तबोध्यासनप्रतिलब्धा भवन्तु। सर्वसत्वा[2] [बुद्धविक्रान्तिसिं]हासनप्रतिलब्धा भवन्तु सर्वजगदवलोकनीया इति॥

आर्यगगनगञ्जसूत्रे[3] ऽप्याह। मा भूत्तन्मम कुशलमूलं धर्मज्ञानकौशल्यं वा यन्न सर्वसत्वोपजीव्यं स्यादिति॥

अतीतानागतशुभोत्सर्गस्त्वार्याक्षयमतिसूत्रे ऽभिहितः। कुशलानां च चित्तचैतसिकानामनुस्मृतिरनुस्मृत्य च बोधिपरिणामना। इदमतीतकौशल्यं। यो ऽनागतानां कुशलमूलानां निध्यप्तिबोधे[4]रामुखी[5]कर्मसमन्वाहारः। ये मे उत्पत्स्यन्ते कुशलाश्चित्तोत्पादास्ताननुत्तरायां सम्यक्संबोधौ परिणामिष्यामीति इदमनागतकौशल्यं॥ तदेवं चैतसिके-

1) The last letters have partly fallen away: but my reading is confirmed by the Tib. ཐེག་པ་ཆེན་པོ་ལ་གཞོལ་

2) The leaf is here much broken. The Tib. (26 b — 27 a) has སངས་རྒྱས་རྣམ་པར་རོལ་པའི་སེངྒེའི་གདན་ཁྲི་

3) Cf. G.-g.-paripṛcchā in K.F. 252, also M. Vyutp. LXV. 11.

4) Böhtlingk (W.K.F. VII. 352) suggests for *nidhyapti* (quoting M. Vyutp. 245. 1053): «*etwa* Nachdenken, philosophische Betrachtung». The Tib. (27 a. 3) has ངེས་པར་སེམས་ཤེད་

5) New as a noun; vb. *āmukhī-kṛ* in Lalitavistara p. 218. 17 and Divy.

नाभ्यासेन सर्वत्यागाधिमुक्तिं परिपूर्य त्यागचित्तवेगापन्नेन कायप्रयोगेणोत्सृष्टसर्वपरिग्र-
हः। सर्वपरिग्रहमूलाद्भवदुःखाद्विमुक्तो मुक्त इत्युच्यते । अनुत्तरांश्चाप्रमेयासंख्येयान् क-
ल्पान् नानाकारानन्तान् लौकिकलोकोत्तरान् सुखसंपत्प्रवर्षाननुभवति । तेन चात्मभावा-
दिना बडिशामिषेणेव स्वयमनभिगतोपभोगेनाप्याकृष्य परानपि तारयति ॥ अत एवो-
5 [23 a]क्तं रत्नमेघे । दानं हि बोधिसत्त्वस्य बोधिरिति ॥

॥ शिक्षासमुच्चये दानपारमिता प्रथमः परिच्छेदः ॥

## II.

10 शीलपारमितायां सद्धर्मपरिग्रहो नाम द्वितीयः परिच्छेदः ॥

एवमेषामात्मभावादीनामुत्सृष्टानामपि रक्षा कार्या। कुतो। यस्मात् ॥ परिभोगाय
सत्त्वानामात्मभावादि दीयते । अरक्षिते कुतो भोगः । किं दत्तं यन्न भुज्यते ॥ तस्मात्सत्त्वो-
पभोगार्थमात्मभावादि पालयेत् ॥ उक्तं हि बोधिसत्त्वप्रातिमोक्षे । यं शारिपुत्र रक्षिष्या-
मीत्यात्मा रक्षितव्यः। एवंरूपया शारिपुत्र हितैषि[का][1]तया समन्वागतो बोधिसत्त्वो जी-
15 वितहेतोरपि पापं कर्म न करोतीति ॥

वीरदत्तपरिपृच्छायामप्याह[2] । शकटमिव भारोद्वहनार्थं केवलं धर्मबुद्धिना वाढव्य-
मिति। तथा ऽक्षयमतिसूत्रे ऽपि । कायदुःखतया च न परिखिद्यते सत्त्वावेक्षतयेति[3] ॥

तच्चात्मभावादिकं कथं पालयेत् । कल्याणमित्रानुत्सर्जनात् । यथोक्तमार्यगण्ड-
व्यूहे[4] आर्यश्रीसंभवेन ॥ कल्याणमित्रसन्धारिताः कुलपुत्र बोधिसत्त्वा न पतन्ति दुर्गति-

1) This syllable, which would give a form explicable but not found, is possibly an addition to the MS.

2) M. Vyutp. LXV. 83. Vīradattagṛhapatiparipṛcchā; cf. Nanjio 23 (28) and K.F. 216.

3) For the form see Divy. 253. 10.

4) With the text of the subjoined extract I have collated R. As. Lond. MS. Hodgson № 2. (called «H» below) f. 253. a sub fin.



षु। कल्याणमित्रसमन्वाहृतानातिक्रामन्ति बोधिसत्त्वशिक्षां। कल्याणमित्रप्रतिच्छन्ना अ-
भ्युद्गता[1] भवन्ति लोकात् कल्याणमित्रपर्युपासिता[2] बोधिसत्त्वा असंप्रमोषचारिणो[3] भवन्ति
सर्वबोधिसत्त्वचर्यासु । कल्याणमित्रपरिगृहीताः बोधिसत्त्वा दुर्धर्षा भवन्ति कर्मक्लेशैः।
सम्बोधकाः[4] कल्याणमित्रा अकरणीयानां सन्निवारकाः प्रमादस्थानात् । निष्कासयितारः
संसारपुरात् । तस्मात्तर्हि[5] कुलपुत्रा एवं मनसिकारात्[6] प्रतिप्रश्रब्धेन [7]कल्याणमित्रा-[8] 5
ण्युपसं[8][23 b]क्रमितव्यानि । पृथिवीसमचित्तेन सर्वभारवहनापरिणमनतया[9] वज्रसमचित्ते-
नाभेद्याशयतया। चक्रवाडसमचित्तेन[10] सर्वदुःखासंप्रवेधनतया[11]। लोकदाससमचित्तेन सर्वक-
र्मसमादानाजुगुप्सनतया[12] । रजोहरणसमचित्तेन[13] मानातिमानविवर्जनतया । यानसमचित्तेन
गुरुभारनिर्वहनतया । श्वसमचित्तेनाक्रुध्यनतया । नौसमचित्तेन गमनागमनापरित्र-

1) Doubtless = «gone forth from»; cf. Childers p. 613.

2) For the form see Divyāv. Ind.; for the meaning, note to translation.

3) For the form cf. p. 30. supra, note (1).

4) *Sambodhanāni* (neut.) H. *sañcodakāḥ* our MS.

5) This occurs in H. at f. 254. b. 3 sqq.

6) So rightly H.; our MS. °*rā*.

7) H. inserts *te*.

8) . . . (8) These syllables supplied from H.

9) H. reads clearly °*nāparinamanatayā* (°रिन°) which gives good sense. Our MS. however shows the same form *āparitasyanatayā* that has been noted on p. 25. 7 above and also occurs a few lines below; a derivative of *tras* is of course possible, though less probable, here. The Tib. (28. a. 1) has མི་འགྱུ་བ «not changing place» (Jäschke p. 25).

10) *vajravāḍa*. H.

11) A «Palicism» for व्यथ°: Cf. Milindapañho p. 386.2 *pabbato... asampavedhī*.

12) *Samā... yugupsanatayā* (three aksharas lost) A.; *samādānaghanatayā* H. Our reading is confirmed by the Tib. མི་སྨོད་པས་ (28. b. 2). The meaning of *loka-dāsa* (འཇིག་རྟེན་གྱི་བྲན་) is rather to be sought in the *kammakara* of Mil.-P. 379 than in the similar Tibetan phrase cited by Jäschke, Dict., 45. a. 3.

13) रजोपहृ° H. «Besen» (Böhtl.[2]) but ཕྱག་དར་བ་ «the act of sweeping» Tib., 28. a. 2 fin.

स्यनतया[1]। सुपुत्रसदृशेन कल्याणमित्रमुखवीक्षणतया[2]। आत्मनि च ते कुलपुत्रातुरसंज्ञोत्पादयितव्या । कल्याणमित्रेषु च वैद्यसंज्ञा । अनुशासनीषु[3] भैषज्यसंज्ञा । प्रतिपत्तिषु व्याधिनिर्घातनसंज्ञा । आत्मनि च ते कुलपुत्र भीरुसंज्ञोत्पादयितव्या । कल्याणमित्रेषु शूरसंज्ञा । अनुशासनीषु प्रहरणसंज्ञा । प्रतिपत्तिषु शत्रुनिर्घातनसंज्ञा ॥ अत्रैव[4] वाचनोपासिकाविमोक्षे वर्णितं । कल्याणमित्रानुशासनीप्रतिपन्नस्य कुलपुत्र बोधिसत्वस्य बुद्धा भगवन्तो ऽभिराद्धचित्ता भवन्ति । कल्याणमित्रवचनाविलोमस्थायिनो बोधिसत्वस्य सर्वज्ञता ऽसन्नीभवति । कल्याणमित्रवचनाविचिकित्सकस्यासन्नीभवन्ति कल्याणमित्राणि । कल्याणमित्रमनसिकाराविरहितस्य सर्वार्था अभिमुखा भवन्तीति । अत एवार्यसुधनः सारध्वजस्य भिक्षोः पादौ शिरसाभिवन्द्यानेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य सारध्वजं भिक्षुमवलोक्य प्रणिपत्य पुनः पुनरवलोकयन्नियतं प्रणिपतन् [24 a]नमस्यन्नवनमन्मनसि कुर्वन् चिन्तयन् भावयन् परिभावयन्नुदानमुदानयन् हाक्कारं कुर्वन् । गुणानभिमुखीकुर्वन्निगमयन्नत्र सन्ननुस्मरन् दृढीकुर्वन्नविजहन्मनसागमयन्नुपनिबध्नन् प्रणिधिं समवसरन् दर्शनमभिलषन् स्वरनिमित्तमुद्गृह्णन्यावत्तस्यान्तिकात्प्रक्रान्तः । तथा कल्याणमित्रागतां सर्वज्ञतां संपश्यन्नश्रुमुखो रुदन् यावन्मेघस्य द्रमितस्या[5]न्तिकात्प्रक्रान्तः ॥

बोधिसत्वप्रातिमोक्षे ऽप्युक्तं । इह शारिपुत्र बोधिसत्वो धर्मकामतया नास्ति तल्लोके

1) Both MSS. here read °*năparitasya*°; my conjecture, however, appears to be substantiated not only by 17. b. above, but also by the sense and language of the third simile of the ship in Milindapañho 376—7 (= II. p. 297 Rhys Davids), where the *terrors* of the sea are dwelt on. The Tib. has མི་སྐྱོ་བ «not weary».

2) °*khodīksh*° H.

3) This fem. form (not in lexx.) is supported here and just below by H.

4) Sc. *Gaṇḍavyūha-sūtre*; but I have not succeeded in verifying this extract in the text of that work. Compare however Rāj. Mitra, Nep. B. L. p. 91.

5) Our MS. is not clear here. The word may be read *Dramiḍasya*, a form supported by the Gaṇḍavyūha MS. («H») at f. 41 a. 3. Rāj. Mitra op. cit. p. 91 speaks of «Dravidian named Megha»; and this is probably right, though the Vyutpatti (cited by B.R.) gives Dramita or Dramiṭa as *nomen proprium.*



रत्नं यन्न परित्यजति । नास्ति तत्कायोपस्थानं यन्न करोति । नास्ति तज्जङ्घाप्रेषणं यन्नोत्सहते । नास्ति तद्दासकर्म यन्नोत्सहते आचार्योपाध्यायगौरवतया ॥ पेयालं ॥ तत्कस्य हेतोः । बन्धच्छेदायैष धर्मः संवर्तते । जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्यच्छेदायैष धर्मः संवर्तत इति रत्नचित्तमुत्पाद्य भैषज्यचित्तमुत्पाद्य । सर्वसत्वानां ग्लान्यव्युपशमायैष धर्मः संवर्तत इति । एष्टव्यश्चास्माभिः सर्वसत्वानां ग्लान्यव्युपशमायैवंरूपो धर्म इति ॥

उग्रदत्तपरिपृच्छायामप्युक्तं । सचेत्पुनर्गृहपते पाठस्वाध्यायार्थिको बोधिसत्वः कस्यचिदन्तिकाच्चतुष्पादिकां गाथां शृणुयादुद्दिशेद्वा उद्गृह्णीयाद्दानशीलक्षान्तिवीर्यध्यानप्रज्ञासंप्रयुक्तां बोधिसत्वसंभारोपचयं वा तेन तस्मिन्नाचार्ये धर्मगौरवं करणीयं यावद्भिर्नामपदव्यञ्ज[न – –] [24 b]गाथोद्दिष्टा । यदि तावत एवं कल्पांस्तस्याचार्यस्योपस्थानपरिचर्यां कुर्यादशठतया सर्वलाभसत्कारपूजया । अद्यापि गृहपते न प्रतिपूरितमाचार्यस्याचार्यगौरवं भवति । कः पुनर्वादो धर्म[गौरवं][1] ॥

प्रज्ञापारमितायामष्टसाहस्रिकायामप्युक्तं[2]। कल्याणमित्रेषु च त्वया कुलपुत्र तीव्रं गौरवमुत्पादयितव्यं । प्रेम च करणीयं । अथ खलु सदाप्ररुदितो बोधिसत्वो महासत्व एवंरूपैर्गुणैर्गौरवमनसिकारैर्गच्छन्ननुपूर्वेणान्यतमनगरमनुप्राप्तम् । तत्र तस्यान्तरायणमध्यगतस्यैतदभूत् । यन्न्वहमिममात्मभावं विक्रीयानेन मूल्येन धर्मोद्गतस्य बोधिसत्वस्य महासत्वस्य सत्कारं कुर्यां । दीर्घरात्रं हि ममात्मभावसहस्राणि भग्नानि क्षीणानि विक्रीतानि पुनरपरिमाणे संसारे ऽपरिमाणानि [3]यानि मया कामहेतोः कामनिदानमनुभूतानि न पुनरेवंरूपाणां धर्माणां कृतश[4] एवंरूपाणां वा सत्वानां सत्काराय ॥ अथ खलु सदाप्ररुदितो बो-

1) These syllables or something like them may be supplied to fill the lacuna from the Tib. (29. a. 5): ཆོས་ཀྱི་གུས་པ་ལྟ་ཅི་སྨོས་ཤེས་གསུངས་

2) See Asht.-Pāramitā, Ch. XXX, pp. 495, sqq.

3) च निरयदुःखानि Asht. P. text.

4) कृतस text.

धिसत्त्वो महासत्त्वो ऽन्तरापणमध्यगतः शब्दमुदीरयामास[1] घोषमनुश्रावयामास[1]। कः पुरुषे-
णार्थिकः कः पुरुषेणार्थिक इति पेयालं[2]। अथ खलु मारः पापीयान् ब्राह्मणगृहपतिकां-
स्तथा समुपस्थापयामास[3] यथा तं घोषं नाश्रौषुः[4]। यदात्मनः क्रायकं न लभते तदैकान्तं
गत्वा प्रारोदीदश्रूणि च प्रावर्त्तयदेवं चावदद् । अहो बतास्माकं दुर्लभा लाभा ये वयमात्मभाव-
5 स्यापि क्रेतारं न लभामहे। अथ खलु शक्रो दे[25 a]वानामिन्द्रो माणवकरूपेण यावत्स-
दाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्। किं त्वं कुलपुत्र दीनमना उत्कण्ठितमानसो
ऽश्रूणि प्रवर्त्तयमानः स्थितः॥ सदाप्ररुदित एवमाह। अहं माणवक धर्मकामतया इममा-
त्मभावं विक्रीय धर्मपूजां कर्त्तुकामः सो ऽहमस्य क्रायकं[5] न लभे। पेयालं[6] ॥ अथ खलु स
माणवकः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्। न मम कुलपुत्र पुरुषेण कृत्यमपि
10 तु खलु पुनः पितुर्मे यज्ञो यष्टव्यः । तत्र मे पुरुषस्य हृदयेन कृत्यं लोहितेन चास्थिमज्जया
च। तद्दास्यसि त्वं क्रयेण[7]॥ अथ खलु सदाप्ररुदितस्यैतदभूत्। लाभा मे सुलब्धाः परिनिष्पन्नं
चात्मानं[8] जाने प्रज्ञापारमितोपायकौशल्येषु । यन्मयात्मनः क्रायको लब्धो हृदयस्य रुधिरस्य
चास्थिमज्जायाश्च ॥ स हृष्टचित्तः कल्यचित्तः प्रमुदितचित्तस्तं माणवकमेतदवोचत्। दा-
स्यामि माणवक येन ते इत आत्मभावादर्थः। यावत्सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्ती-
15 क्ष्णं शस्त्रं गृहीत्वा दक्षिणं बाहुं विद्ध्वा लोहितं[निस्रावयति स्म[9]]दक्षिणं चोरुं विद्ध्वा निर्मांसं
च कृत्वास्थि भेत्तुं कुड्यमूलमुपसंक्रामति ॥

1) अनुश्रावयामास ... उदीरयति स्म text.

2) The omitted words are: कः पुरुषं क्रेतुमिच्छतीति and a paragraph giving the resolution of Māra.

3) प्रत्युप° some MSS. of the Ashṭasāhasrikā.

4) A few unimportant words of the Ashṭasāhasrikā text are here omitted by our author.

5) Hitherto only in lexx. But *krāyika* occurs in the Divyāvadāna.

6) 8 lines omitted of the text (p. 497).

7) So the printed text; our MS. has दास्यस्ये तत्क्रयेण.

8) *Parinishp.* is a new compound, doubtless intens. of निष्प°; the text has आत्मभावं.

9) Supplied from Ashṭasāhasrikā text.



अथ खल्वन्यतरा श्रेष्ठिदारिकोपरिप्रासादतलगताद्राक्षीत् सदाप्ररुदितं बोधि-
सत्त्वं यावत्सा श्रेष्ठिदारिका येन सदाप्ररुदितो बोधिसत्त्वस्तेनोपसंक्रम्यैतदवोचत्। किं नु
खलु त्वं कुलपुत्रैवंरूपामात्मनः कारणां कारयसीति। यावत्सा दारिका पूजाप्रयोजनं
श्रुत्वा[1] पुनराह। का पुन[25 b]स्ते कुलपुत्र ततो गुणजातिर्निष्पत्स्यते। स तामेतदवोचत्।
स दारिके कुलपुत्रो मम प्रज्ञापारमितामुपायकौशल्यं चोपदेक्ष्यति। तत्र वयं शिक्षिष्याम- 5
स्तत्र[2] वयं शिक्षमाणाः सर्वसत्त्वानां प्रतिशरणं भविष्यामः। पेयालं[3] ॥ अथ खलु सा श्रेष्ठिदा-
रिका सदाप्ररुदितं बोधिसत्त्वमेतदवोचत्। आश्चर्यं कुलपुत्र । यावदुदाराः प्रणीताश्चामी[4]
त्वया धर्माः परिकीर्त्तिताः। एकैकस्यापि[5] कुलपुत्रैवंरूपस्य धर्मस्यार्थाय गङ्गानदीवालिको-
पमानपि कल्पानेवमात्मभावाः परित्यक्तव्या भवेयुः। तथोदाराः[6] प्रणीताश्चामी त्वया धर्माः
परिकीर्त्तिताः[7]। अपि तु खलु कुलपुत्र येन येन कृत्यं तत्ते दास्यामि सुवर्णं वा मणिं वा मुक्तां 10
वा वैडूर्यं वा[8] यावद्येन त्वं तं धर्मोद्गतं बोधिसत्त्वं सत्करिष्यसि। यावद्विस्तरेण तया दारिकया
पञ्चशतपरिवारया सार्द्धं तस्य धर्मोद्गतस्य संक्रमणं कर्तव्यं ॥

अथ[9] खलु धर्मोद्गतो बोधिसत्त्वो महासत्त्वः उत्थायासनात्स्वकं गृहं प्राविक्षत्[10]। यावत्स-
प्त वर्षाण्येकसमाधिसमापन्न एवाभूत् । सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः सप्त वर्षाणि न
कामवितर्कमुत्पादयामास । न व्यापादवितर्कं न विहिंसावितर्कमुत्पादयामास । न रसगृ- 15

1) The Ashṭasāhasrikā text gives his explanation verbatim.

2) °ष्यामहे text.

3) For the passage omitted by our author see Ashṭasāhasrikā p. 499, ll. 1—10.

4) This word is omitted in the MS. here and below, line 9.

5) तावत् added in A.-P. text.

6) प्रागेव बहूनामर्थाय A.-P. text.

7) यथा मम रोचते A.-P. text.

8) The enumeration is much longer in the A.-P. text: see p. 500.

9) See Ashṭasāhasrikā Ch. 31. p. 520, a considerable passage being passed over by our author.

10) This clause gives the substance of a passage occurring at p. 520 (fin.) of the printed text.

द्धिमुत्पादयामास[1]अन्यत्र[2] ' कदा नाम धर्मोद्गतो बोधिसत्वो महासत्वो व्युत्थास्यति । यद्[3]वयं धर्मोद्गतस्य बोधिसत्वस्य महासत्वस्य धर्मासनं प्रज्ञापयिष्यामो यत्रासौ कुलपुत्रो निषद्य धर्मं देशयिष्यति तं च पृथिवीप्रदेशं सिक्तं संमृष्टं च करिष्यामो नानापुष्पाभिकीर्णं [इति चिन्तयामास][4] ॥ तान्यपि श्रेष्ठिदारिका प्रमुखाणि पञ्चदारिकाशतानि सदाप्ररुदितस्य बोधिसत्वस्यानुशिक्षमाणानि द्वाभ्यामेवेर्यापथाभ्यां कालमतिनामयामासुः ॥ अथ खलु सदाप्ररुदितो बोधिसत्वो महासत्वो दिव्यं निर्घोषमश्रौषीदितः सप्तमे दिवसे धर्मोद्गतो बोधिसत्वो महासत्वो ऽस्मात्समाधेर्व्युत्थाय मध्ये नगरस्य निषद्य [26 a]धर्मं देशयिष्यतीति । अथ खलु सदाप्ररुदितो बोधिसत्वो महासत्वस्तं निर्घोषं श्रुत्वा आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तं पृथिवीप्रदेशं शोधयामास सार्द्धं श्रेष्ठिदारिकाप्रमुखैः पञ्चभिर्दारिकाशतैर्धर्मासनं प्रज्ञपयामास सप्तरत्नमयं । अथ खलु सदाप्ररुदितो बोधिसत्वो महासत्वस्तं पृथिवीप्रदेशं सेक्तुकामश्च ' न चोदकं समन्तात्पर्येषमाणो ऽपि लभते येन तं पृथिवीप्रदेशं सिञ्चेद् ' यथापि नाम मारेण पापीयसा तत्सर्वमुदकमन्तर्धापितं अप्येव नामास्योदकमलभमानस्य चित्तं दुःखितं स्याद्दौर्मनस्यं च भवेच्चित्तस्य वान्यथात्वं भवेद्येनास्य कुशलमूलान्तर्धानं भवेन्न वा भ्रासेरन् कुशलमूलानि । अथ खलु सदाप्ररुदितस्य बोधिसत्वस्य महासत्वस्यैतदभूत् । यन्न्वहमात्मनः कायं विद्ध्वा इमं प्रदेशं रुधिरेण सिञ्चेयं । तत्कस्य हेतोः । अयं हि पृथिवीप्रदेश उद्धतरजस्को ' मा रजोधातुरितो धर्मोद्गतस्य बोधिसत्वस्य महासत्वस्य काये निपततु । किमहमनेनात्मभावेनावश्यंभेदनधर्मिणा कुर्या । वरं खलु पुनर्ममायं काय एवंरूपया क्रियया विनश्यतु न च निःसामर्थ्यक्रियया । कामहेतोः कामनिदानं बहूनि

1) So A.-P. text and MS. for *gṛdhyam*: Childers cites a passage where *giddha* (adj. neut.) is used nominally.

2) A.-P. has the better reading: *api tu.*

3) This reading (yad = «ut») is confirmed by a XII cent. MS. of the Ashṭasāhasrikā in the British Museum. The reading of the printed text p. 520 ad fin., *yan nvayam* (!) is possibly meant for *yan nu vayam.*

4) These words are supplied from the Ashṭasāhasrikā text.



मे आत्मभावसहस्राणि पुनः पुनरपरिमाणे संसारे संसरतो भिन्नानि । यदि पुनर्भिद्यन्ते काममेवंरूपेष्विव धर्मस्थानेषु भिद्यन्तां ॥

अथ खलु सदाप्ररुदितो बोधिसत्वो महासत्व इति[1] प्रतिसंख्याय तीक्ष्णं शस्त्रं गृहीत्वा स्वकायं सम[26 b]न्ततो विद्ध्वा तं पृथिवीप्रदेशं स्वरुधिरेण सर्वमसिञ्चत् । एवं ताभिरपि दारिकाभिः कृतं । न च सदाप्ररुदितो बोधिसत्वस्य महासत्वस्य तासां वा सर्वासां दारिकाणां चित्तस्यान्यथात्वमभूत् ' यत्र मारः पापीयानवतारं लभेतेति[2] ॥

अत एवं चतुर्धर्मकसूत्रे[3] ऽप्युक्तं । कल्याणमित्रं भिक्षवो बोधिसत्वेन महासत्वेन यावज्जीवं न परित्यक्तव्यमपि जीवितहेतोरिति ॥

तदेवं कल्याणमित्रानुत्सर्गादात्मभावादीनां रक्षादिकं कार्यं ॥

सूत्राणां च सदेक्षणाद्बोधिसत्वशिक्षापदानि हि प्रायः सूत्रेष्वेव दृश्यन्ते । तेषु तेषु सूत्रान्तेषु बोधिसत्वसमुदाचारा बोधिसत्वशिक्षापदानि प्रज्ञप्तानीति वचनात् । तस्मात्तदनीक्षणे मा भूदापत्तिमापन्नस्याप्यज्ञानादविरतिरिति सदा सूत्रदर्शनायादरः कार्यः । तदनेन कल्याणमित्रानुत्सर्गेण सूत्रान्तदर्शनेन च सर्वः सद्धर्मपरिग्रह उक्तो भवति ॥

यथोक्तमार्यसागरमतिसूत्रे । याभिरक्षरनिरुक्तिभिः सो ऽनभिलाप्यो धर्मः सूच्यते तासामक्षरनिरुक्तीनां यदा धारणं देशना यावद् ' अयमुच्यते सद्धर्मपरिग्रहः । पुनरपरं कुलपुत्र ये ते धर्मभाणका एषामेवंरूपाणां सूत्रान्तानां देशयितारः प्रतिपत्तिसाराश्च तेषामपि धर्मभाणकानां यत्सेवनं भजनं पर्युपासनमुत्थानमुपस्थानं गौरवं चित्रीकारः शुश्रूषा आरक्षा परिग्रहश्चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारदानं साधुकारदानं स्वाम्यारक्षा कुशलपक्षरक्षा वर्णभाषणमवर्णप्र[तिच्छा][4] [27 a]दनता ' अयमपि सद्धर्म-

1) So text: *itaḥ* MS.

2) The A.P. text (p. 522.) adds: kuçalamūlāntarāya - karaṇāya.

3) K.F. 268.

4) These syllables which are lost in the MS. I suggest from the Tibetan which has, if I rightly read the print, here rather indistinct: མི་སྣང་པ་འཆབ་པ (32. b. 2). *Paṭicchādana* occurs in Pali in a similar way: see Dhammapada p. 376 quoted by Childers, s. v.

परिग्रहः । पेयालं ॥ पुनरपरं कुलपुत्र याविवादपरमता ' अधर्मे धर्मवादिनां च पुद्गलानां सह धर्मेण निग्रहः ' अयमपि सद्धर्मपरिग्रहः । पुनरपरं कुलपुत्राप्रतिहतसत्त्वा- नस्य सर्वसत्त्वप्रमोक्षबुद्धेर्निरामिषचित्तस्य परेभ्यो धर्मदानम् अयमपि सद्धर्मपरिग्रहः। पुन- रपरं कुलपुत्र यो धर्मश्रवणहेतुको वा धर्मदेशनाहेतुको वा ऽन्तश एकक्रमव्यतिहारो 5 ऽन्तश एकउच्छ्वास[1]प्रश्वासो वा ' अयमपि सद्धर्मपरिग्रहः। पेयालं ॥ प्रह्रुतं[2] वतेदं कुलपुत्र चित्तं विषयेषु । तस्य या निवारणा परिरक्षा एकाग्रीभावो दमः शम उपशमो विनयो ऽयमुच्यते सद्धर्मपरिग्रहः । पेयालं ॥ पुनरपरं कुलपुत्र येन धर्मेण यो अधर्मः प्रवर्तते तस्य धर्मस्याप- रिग्रहो ऽनुपादानमयमपि सद्धर्मपरिग्रह इत्यादि ॥

तत्र धर्मभाणकसेवादिना कल्याणमित्रानुत्सर्ग उक्तः। कल्याणमित्रलक्षणं च। तदेते- 10 न सद्धर्मपरिग्रहेण विना ' न रक्षा ' न शुद्धिर्न वृद्धिस्ततश्च सो ऽपि न बोधिसत्त्व इत्यवश्य- कार्यः सद्धर्मपरिग्रहः ॥

उक्तं हि श्रीमालासिंहनादसूत्रे[3] । यान्यपीमानि भगवन् गङ्गानदीवालिकासमानि बोधिसत्त्वप्रणिधानानि तान्येकस्मिन्महाप्रणिधाने उपनिक्षिप्तान्यन्तर्गतान्यनुप्रविष्टानि यदुत सद्धर्मपरिग्रहे । एवं महाविषयो भगवन् सद्धर्मपरिग्रह इति ॥ पुनरत्रैवाह । स्या- 15 द्यथापि नाम देवि महाबलवतो ऽपि पुरुषस्याल्पो ऽपि मर्मणि प्रहारो ' वेधनीयो भव- ति बाधाकरश्च । एवमेव देवि मारस्य पापीयसः परीत्तो ऽपि सद्धर्मप[रिग्रहो] [27 b]वे- धनीयो भवति शोकावहः परिदेवकरश्च भवति। नाहं देवि अन्यमेकमपि धर्मं कुशलं सम- नुपश्यामि मारस्य पापीयस एवं वेधनीयं शोकावहं परिदेवकरं च ' यथायमल्पो ऽपि

1) Sic MS.

2) This is a new compound from the rare root *hru* (by-form, *hṛi*) which means «to be or make crooked». Native Pali lexx. (not however Childers) have *hurati* in the same sense. This agrees with the Tibetan which has (32. b. 5—6) སེམས་ འདི་ནི་ཕྱིན་ཅི་ལོག་གི་ཡུལ .. Cf. Jäschke, Dict. 350. b. 7.

3) K.F. 218.



[सद्ध]र्म परिग्रह इति ॥ पुनराह । स्याद्यथापि नाम देवि सुमेरुः पर्वतराजः सर्वान्कुलपर्व- तानभिभवन्नभिरोचते च समभिरोचते चोच्चत्वेन विपुलत्वेन च । एवमेव देवि महायानिकस्य कायजीवितनिरपेक्षस्य[1] न च गृहीतचित्तस्य सद्धर्मपरिग्रहो नवयानसंप्रस्थितानामपि का- यजीवितसापेक्षाणां महायानिकानां सर्वान् कुशलान्धर्मानभिभवतीत्यादि ॥

तथार्यसागरमतिसूत्रे ऽप्याह ।[2] 5

परिगृहीतो भवती जिनेभि-
र्देवेभि नागेभि च किन्नरेभिः ।
पुण्येन ज्ञानेन परिगृहीतः
सद्धर्मधारित्व तथागतानाम् ॥ पेयालं ॥
स शून्यक्षेत्रेषु न जातु जायते 10
सर्वत्र जातो च जिनं स पश्यति ।
दृष्ट्वा च तस्मिँल्लभते प्रसादं
सद्धर्मधारित्व तथागतानाम् ॥
जातिस्मरो भवति[3] महात्मधर्मा
प्रव्रज्यलाभी भवते पुनः पुनः । 15
परिशुद्धचारी प्रतिपत्तिसारः
सद्धर्मधारित्व तथागतानाम् ॥ पेयालं ॥
लाभी च भोती विदुधारणीये[4]
न नश्यते कल्पशतेभि यच्छुभम् ।

1) *Kshasyā* MS.

2) Metres: Upajāti and Vaṃçastha (cf. Jacobi in ZDMG XXXVIII. 605).

3) To be read, or at all events pronounced for the metre, *bhoti*, as in the *gāthās* of Ch. 1.

4) *Vidyādhāraṇīnām* gloss a sec. manu.

प्रतिभानवन्तो भवते असक्तः[1]

सद्धर्मधारित्व तथागतानां ॥

शक्रो ऽथ ब्रह्मा तथ लोकपालो

मनुष्यराजा भुवि चक्रवर्त्ती।

5 सुखेन सौख्येन स बोधि बुध्यते

सद्धर्मधारित्व तथागतानाम् ॥

द्वात्रिंश काये ऽस्य भवन्ति लक्षणाः

[28 a]अनिन्दिताङ्गो भवते विचक्षणः।

न तस्य तृप्तिं लभि[2] प्रेक्षमाणाः

10 सद्धर्मधारित्व तथागतानाम् ॥

न तस्य संमुह्यति बोधि चित्तं

न चोद्धुरः पारमिता चरोषु।

असंगृहीतः कुशलः शतेभिः

सद्धर्मधारित्व तथागतानामिति ॥

15 ॥ शीलपारमितायां सद्धर्मपरिग्रहो नाम द्वितीयः परिच्छेदः ॥

## III.

## धर्मभाणकादिरक्षा तृतीयः परिच्छेदः ॥

उक्तस्त्रयाणामपि सामान्येन रक्षाद्युपायः। रक्षादयस्तु वाच्याः। तत्रात्मभावे का

20 रक्षा यदनर्थविवर्जनं ॥ तत्रेति सद्धर्मपरिग्रहे वर्त्तमानस्यात्मभावरक्षा चिन्त्यते यथा परान्न नाशयेत्। इदं चानर्थविवर्जनमार्यगगनगञ्जसूत्रे सद्धर्मधारणोद्यतैर्बोधिसत्त्वैर्भाषितं ॥

1) The words *bh*° *as*° are a correction in a later hand, the original reading being *pratipattisāraḥ*.

2) Here for *labhante*: the form is cited as replacing other inflections by Muir Skt. Texts [2], II, 122.



वयमुत्सहामो भगवन्[1] निर्वृते द्विपदोत्तमे।

सद्धर्मं धारयिष्यामः त्यक्त्वा कायं स्वजीवितम् ॥

लाभसत्कारमुत्सृष्ट्वा सर्वं चोत्सृज्य संस्तवं।

अनुत्सृष्ट्वा[2] इमं धर्मं बुद्धज्ञाननिदर्शकम् ॥

5 आक्रोशपरिभाषांश्च दुरुक्तवचनानि च।

क्षान्त्या तान्मर्षयिष्यामः सद्धर्मप्रतिसंग्रहात् ॥

उच्चग्घनां[3] तर्जनां च अवर्णमयशांसि च।

सर्वांस्तान्मर्षयिष्यामो धारयन्त इमं नयम् ॥ पे ॥

एवंविधे महाघोरे भिक्षुराजानक्षोभणे[4]।

10 विलोपकाले सत्त्वानां सद्धर्मं धारयामहे ॥

गम्भीरा ये च सूत्रान्ता विमुक्तिफलसंहिताः।

प्रतीच्छका न भेस्यन्ति[5] चित्रा मृक्ष्यन्ति ते कथाम् ॥ पे ॥

मैत्रीं तेषु करिष्यामो ये धर्मेषु प्रतिष्ठिताः।

कारुण्यं च करिष्यामो धारयन्त इमं नयम् ॥

15 दृष्ट्वा दुःशीलसत्त्वांश्च इच्छालोभप्रतिष्ठितान्।

अश्रुपातं करिष्यामो गतिः कान्धस्य भाविता ॥

1) The metre requires, of course, a dissyllable: cf. the voc. form *bhagoḥ*.

2) Sic MS.

3) Compare p. 12, note 5, above. The noun-form appears to be new.

4) The Tib. (34. b. 2) has དགེ་སློང་རྒྱལ་པོ་རབ་འཁྲུག་ཅིང and this would seem to confirm-*kshobhaṇa* though not of course strictly metrical. *Rājāna-* is quite clear in the MS., but as the compound-base of *rājan* it is difficult to justify even in a Buddhist poet.

5) *Bhesyanti* for *bhavishyantii* Pali *hessanti*; *mṛkshyanti* (though the MS. is uot clear). I take to be an incorrect fut. from √mṛç. The Tib. appears to have no equivalent for this word.

[28 b]सहसैव च तं दृष्ट्वा सद्धर्मप्रतिबाधकं ।
दूरतो मैत्रमेष्यामो मा नो रुष्येत एव हि ॥
रक्षिष्यामो यथाशक्त्या वाचाकर्मसु संवृताः ।
सहसैनान्न वक्ष्यामः स्वपापे ऽस्मिन्प्रतिष्ठितान् ॥
5 दानैस्तथापि सत्कारैः परिपाच्येह तान्नरान्[1] ।
पश्चैनांश्चोदयिष्यामो भूतमापायगोचरान्[2] ॥
गृहिसंभवसंत्यक्ताः प्रान्तारण्यसुगोचराः ।
मृगभूता भविष्यामो अल्पार्था अल्पकृत्यकाः ॥ पे ॥
दान्ताः शान्ताश्च मुक्ताश्च ग्रामे ऽस्मिन्नवतीर्य च ।
10 देशयिष्यामहे धर्मं सत्त्वा ये धर्मतार्थिका ॥
सुदूरमपि यास्यामो धर्मकामान्निशम्य च ।
धर्मारामरतिप्राप्ता अर्थं कर्त्तास्म[3] देहिनाम् ॥
संमुखं तत्र संदृश्य सत्त्वानां स्खलितं पृथु ।
आत्मप्रेक्षा भविष्यामो धर्मसौरत्यसंस्थिताः ॥
15 असत्कृताः सत्कृता वा मेरुकल्पाः प्रभूय च ।
अनुपलिप्ता[4] लोकेन भेस्यामो[5] लोकनायकाः ॥
भिक्षूणां भिन्नवृत्तानां परिवादं निशम्य च ।
कर्मस्वका भविस्यामो मैषां कर्म विपच्यताम् ॥

---

1) °*hanānna*° MS.

2) This is the reading (quite clear) of the MS. I cannot construe it. The Tib. has (34. b. 6) ཡང་དག་སྡིག་མེད་སྤྱོད་ཡུལ་གྱིས་., which seems to imply a reading *bhūtam* (adverbial = *bhūtataḥ*, p. 47.6) *ăpāpagocarāḥ*.

3) Apparently an irregular form (metri gratia) for °*smo*.

4) *Anopa*° MS.

5) Cf. *bhesyanti* supr.



बधकान् योजयिष्यन्ति धर्मेष्वेषु हि वर्ततां[1] ।
एते धर्मा न चास्माकं संविद्यन्ते कथञ्चन ॥
अस्माकं श्रमणानां हि न च श्रामणका गुणाः ।
[2]भूतां चोदन संश्रुत्य इदं सूत्रं प्रतिक्षिपन् ॥
संछिन्नकर्णनासानामादर्शेषां कुतः प्रियः । 5
चोदनां भूततः श्रुत्वा सद्धर्मं ते क्षिपन्ति तम् ॥
ये भिक्षवो भविष्यन्ति सद्धर्मप्रतिग्राहकाः ।
चेष्टिष्यन्ते तथा तेषां कश्चिद्धर्ममिमं शृणोत्[3] ॥
राजानो ग्राहयिष्यन्ति भेस्यन्ति च महाजनः ।
बुद्धाधिष्ठानतः सत्त्वा धर्मं श्रोष्यन्तिमं[4] तदा ॥ 10
तस्मिन्काले वयं[29 a]कष्टे त्यक्त्वा कायं सजीवितं ।
सद्धर्मं धारयिष्यामः सत्त्वानां हितकारणाद् । इति ॥
आर्यसद्धर्मपुण्डरीके ऽप्युक्तं[5] ॥
आचारगोचररक्षी असंसृष्टः शुचिर्भवेत् ।
वर्जयेत्संस्तवं नित्यं राजपुत्रेभि राजभिः ॥ 15

---

1) A marginal note in MS., apparently referring to this word, has *varttināṃ*.

2) For the use of *bhūta* (Tib. yaṅ-dag, the usual equivalent of *samyak*) cf. *bhūtataḥ* just below. *Pratikshipan* apparently for °*kshipanti*.

3) The MS. has the unmetrical reading: *mā kaçcid dharm imaṃ* [*sic*] *çṛṇīta*. The reading above suggested is intended to be construed interrogatively.

4) I. e. °*shyant' imam*, with elision as in Pali.

5) The passage occurs at p. 169 of Burnouf's translation and p. 265 of Kern's. The text has been collated with ff. 109b — 110a (=११० । १११) of MS. Or. 2204 (XIII cent.) in the Wright collection of the British Museum, called W. below; and with RAS. Hodgson № 6 (=«R») ff. 100b sqq.

ये चापि राज्ञां पुरुषाः कुर्यात्तेर्हि न संस्तवं[1]।
चण्डालमुष्टिकैः[2] शौण्डैस्तीर्थिकैश्चापि सर्वशः ॥
अधिमानीन्[3]न सेवेत विनयेच्चागमे[4] स्थितान्।
अर्हत्तसंमतान् भिक्षून् दुःशीलांश्चैव वर्जयेत् ॥
भिक्षुणीं वर्जयेन्नित्यं हास्यसंलापगोचरां।
उपासिकाश्च वर्जेया[5] प्रकटमनवस्थिताः[6] ॥
स्त्रीपण्डकाश्च ये सत्त्वाः संस्तवं तैर्विवर्जयेत्।
कुलेषु चापि वधुकाः कुमार्यश्च[7] विवर्जयेत् ॥
न ताः संमोदयेज्जातु कौशल्यं साधु पृच्छितुं।
संस्तवं च विवर्जेया[8] सौकरौ[9]रभ्रिकैः सह ॥
स्त्रीपोषकाश्च ये सत्त्वा वर्जयेत्तैर्हि संस्तवं।
नैर्टकल्लकमल्लै[10]र्भिर्ये चान्ये तादृशा जनाः ॥

---

1) *Samsanam* W.

2) So W.; *mushṭrikaiḥ* R; *pauskakaiḥ* A; «Bateleurs» Burnouf (and so Kern); but the meaning «Ḍoms» cited by B.R. from Rām. 2. 59. 19 suits this passage well.

3) For *abhimānino. Adhimānīn* A.; *abhimānī* W.; *ābhimānīṃ* R.

4) °*ye cāgama* A; *yenāgama* W. cf. Kern, p. 265 note 2.

5) For this potential form, cf. infra: and also *kareyā* in Lalitavistara (Muir, SkT²II.121). R has (against metre) the regular *varjayet*.

6) «Notoriously loose female lay devotees» Kern, which agrees with our text. Burnouf's «connus [masc.] pour ne pas être fermes»; and the corrupt (?) *prākaṭāyā avasthitā* of W. and R., are less satisfactory.

7) This form of the acc. plur. (found in Ved.) is certified by the MSS.

8) °*yāt*. A.

9) *saukara* in the sense of «pork-butcher» seems new; *saukarika* is quoted in Böhtl². from this work: and *aurabhr.*° appears in the Nachträge to the same lexicon.

10) So R.; A is quite corrupt. «Musicians», Kern; but see Manu X. 22 and XII. 45 (and comm. ad locc.).



वारमुख्यान्न सेवेत ये चान्ये भोगवृत्तिनः।
प्रतिसंमोदनं तेभिः सर्वशः परिवर्जयेत् ॥
यदा च धर्मं देशेया मातृग्रामस्य पण्डितो।
न चैकः प्रविशेत्तत्र नापि हास्यस्थितो भवेदिति ॥

अयं चापरो ऽनर्थो भवेद्यदिदं मारकर्मोक्तं प्रज्ञापारमितायां[1]। मारः पापीयांस्तस्य बोधिसत्त्वस्याचिरं यानसंप्रस्थितस्यान्तिके बलवत्तरमुद्योगमापत्स्यते। अत्रैवाह। पुनरपरमानन्द यस्मिन्समये बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां योगमापद्यते तस्मिन्समये माराः पापीयांसो बोधिसत्त्वस्य विहेठनमुपसंहरन्ति[2] भयं संजनयन्ति । उल्कापातान्दिशि दिग्व[29 b]हानुत्सृजन्ति संदर्शयन्ति । अप्येव नामायं बोधिसत्त्वो महासत्त्वो ऽवनीयेत वा रोमहर्षो वास्य भवेदिति। येनास्यैकचित्तोत्पादो ऽपि क्षीयेतानुत्तरायाः सम्यक्संबोधेरिति। पुनरपरमन्यविज्ञानसंज्ञिनो लिखिष्यन्ति यावत्पर्यवाप्स्यन्ति। न वयमत्रास्वादं लभामहे इत्युत्थायासनात्प्रक्रमिष्यन्ति। एवं विजृम्भमाणा उच्चग्घन्तो[3] यावत्पर्यवाप्स्यन्तीति मारकर्म। एवमुत्पत्स्यन्ते जनपदग्रामादिवितर्काः। एवमाचार्योपाध्यायमातापितृमित्रामात्यज्ञातिसालोहितमनसिकाराः। एवं चोर[4]मनसिकाराः। एवं चीवरादिमनसिकाराः। पुनरपरं धर्मभाणकश्छन्दिको भविष्यति इमां गम्भीरां प्रज्ञापारमितां लेखयितुं यावद्वाचयितुं धर्मश्रवणिकश्च किलासो भविष्यति[5]। एवं विपर्ययात्। धर्मभाणकश्च देशान्तरं गन्तुकामो भविष्यति धार्मश्रवणिकाश्च नेति नेयं। एवं धर्मभाणको महेच्छो भविष्यति धार्मश्रवणिको ऽल्पेच्छ इति नेयं। संक्षेपाद्धर्मभाणकधार्मश्रवणिकयोर्या काचिद्विधुरता सर्वं तन्मारकर्मेत्युक्तं ॥

---

1) This is not the Ashṭasāhasrikā recension, though the subject and language Ch. XI. (pp. 232—252 in printed text) closely correspond.

2) °*heṭhanām* MS.

3) Cf. Ashṭ.-S. p. 232. 11—12 and *supra* p. 12. 15.

4) Probably *caila*° is the right reading: see Ashṭ.-S. p. 241. 10.

5) Cf. Ashṭ.-S. p. 243. 10.

आर्यगगनगञ्जसूत्रे ऽप्युक्तं । इति हि यावद्[1]अकुशलधर्मानुवर्त्तनता । कुशलधर्मोत्सर्गश्च सर्वं तन्मारकर्मेति ॥

आर्यसागरमतिसूत्रे ऽप्याह । पुनरपरं भगवन् बोधिसत्त्व आरण्यको भवति प्रान्तशय्यासनाभिरतो ऽल्पेच्छुः संतुष्टः प्रविविक्तो ऽसंसृष्टो गृहस्थप्रव्रजितैः । सो ऽल्पार्थतया ऽल्पकृत्यतया च सुखं विहरति न च बाहुश्रुत्यपर्येष्टावभियुक्तो भवति न सत्त्वपरिपाकाय न च धर्मश्रवणे वा धर्म[सां] [30 a]कथ्ये[2] वा ऽर्थविनिश्चयकथायां वा वर्तमानायां संक्रमितव्यं मन्यते । न परिपृच्छकजातीयो भवति । न किंकुशलाभियुक्तो[3] भवति । तस्यारण्यवासेन चैकारामरतितया च क्लेशा न समुदाचरन्ति । स पर्युत्थानविष्कम्भणमात्रेण तुष्टिं विन्दति । न चानुशयसमुद्घाताय मार्गं भावयति । स तत्र नात्मार्थाय प्रतिपन्नो भवति न परार्थाय । अयं भगवन् बोधिसत्त्वस्यारण्यवासप्रतिसंयुक्तः सप्तमो माराङ्कुश इति ॥ पे ॥ पुनरपरं भगवन् बोधिसत्त्वः कल्याणमित्रप्रतिरूपकाणि पापमित्राणि सेवते भजते पर्युपास्ते । ये ह्येनं संग्रहवस्तुभ्यो विच्छन्द्य पुण्यसंभारात्सद्धर्मपरिग्रहाद्विच्छन्द्य प्रविवेके[4] नियोजयन्ति । अल्पार्थायाल्पकृत्यतायां नियोजयन्ति । श्रावकप्रत्येकबुद्धप्रतिसंयुक्ताश्चास्मै कथा अभीक्ष्णं देशयन्ति ॥ यस्मिंश्च समये बोधिसत्त्वो विवेकवासेन महायाने ऽभ्युद्गच्छेत्तस्मिन्समये तं बोधिसत्त्वं वैयावृत्य[5]पलिबोधे[6] नियोजयन्ति वैयावृत्यं बोधिसत्त्वेनावश्यं करणीयं ॥ यस्मिंश्च समये बोधिसत्त्वो वैयावृत्ये संनियोजयितव्यस्तस्मिन्समये विवेके नियोजयन्ति । एवं चैनं वदन्ति । आरब्धवीर्यस्य बोधिसत्त्वस्य बोधिर्न कुसीदस्य । सचेत्त्वमष्टाभिर्नवभिर्वा कल्पैरनुत्तरां स-

1) The syllable *ça* wrongly added in the transcript, arose from an early, but erroneous correction (as if to read *daçakuçala* instead of *akuçala*).

2) Cf. Kāraṇḍa-vyūha, p. 56.8 (cited in Böhtlingk).

3) If the text is correct here, it must be understood in the sense which I gather from the Tib. དགེ་བ་ཅི་ཞིག་ཚོལ་བ་ལ་མི་བརྩོན (36. b. 1) 'he is not devoted to searching after [his own] profit.'

4) *Vekye* MS.; for the form, peculiar to Buddh. Skt see Lal-v. p. 217.1, and compare the whole passage with the present.

5) *Vaiyāpṛitya* MS., here and below (55.6 et al.).

6) *Paligodha* MS; but cf. the Pali *palibodha* and *pralugna*, 56.8 below.



म्यक्संबोधिं नाभिसंभोत्स्यसे । न भूयः शक्यस्यनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम् । तत्र भगवन् बोधिसत्त्वो ऽत्यारब्धेन वीर्येण स्थानं खलु पुनरेतद्विद्यते यन्निर्वाणफलं [30 b]प्राप्नुयाद् । अयं भगवन् बोधिसत्त्वस्य कल्याणमित्रप्रतिरूपकेण दशमो माराङ्कुशः ॥ ये ऽपि ततो ऽन्ये बोधिसत्त्वयानीयाः पुद्गला माराङ्कुशाविद्धाः प्रत्यवेतेषु धर्मेषु चरन्ति तैः सार्द्धं रतिं विन्दति । तथा हि तदनुवर्त्तका भवन्ति स हीनसेवी विशेषमनधिगतो हीनगतिं गच्छति यदुत धन्वगतिं जडैडमूकगतिं यावदेकादशो माराङ्कुश इति ॥

येन चैवं संतत्यारब्धवीर्यस्य निर्वेदात्सर्वथा बोधिसत्त्वभाव एव भवत्यत एव रत्नमेघे ऽभिहितं । इह बोधिसत्त्वः सर्वेर्यापथेषु[1] वीर्यमारभते । तथा चारभते यथा न कायखेदं संजनयति । न चित्तखेदं । इदमुच्यते बोधिसत्त्वस्य सांतत्यवीर्यमिति । कीदृशं तद्वीर्यम् । येन खेदो भवति । यदिदमल्पबलस्य गुरुकर्मारम्भो ऽतिवेला[यां] वापरिपक्वाधिमुक्तेर्वा दुष्करकर्मारम्भस्तद्यथा स्वमांसदानादिः । दत्तश्चानेनात्मभावः । किन्त्वकालपरिभोगाद्वारयति । अन्यथा हि तेषामेव सत्त्वानां बोधिसत्त्वखेदेन बोधिचित्तबीजनाशान्महतः फलराशेर्नाशः स्यात् ॥

अतश्च गगनगञ्जसूत्रे ऽभिहितं । अकालप्रतिकाङ्क्षणता मारकर्मेति । नाप्यकाल इत्यात्मभावत्यागचित्तमेव नोत्पाद्या[2]भ्यासानारम्भाद्धि न कदाचिद्दद्यात् । तस्मादेवं स्मृतिमुपास्थाप्य बोधिचित्तपरिपाचनविरोधिभ्यो मोहात्स्वार्थघातिभ्यः पिशिताशनेभ्यः कर्मकारिभ्यश्चात्मभावो रक्षितव्यः ॥

भैषज्यवृक्षस्य सुदर्शनस्य मूलादिभोग्यस्य यथैव बीजं ।
दत्त्वापि संरक्ष्यमकालभोगात्संबुद्धभैषज्यतरोस्तथैव ॥

[31 a]अयं समासतो मारकर्मानर्थः ॥

अस्य विसर्जनं रत्नमेघसूत्रे कथितं । कथं च कुलपुत्रात्र बोधिसत्त्वो मारकर्मपरिहारोपायकुशलो भवति । इह बोधिसत्त्वो ऽकल्याणमित्रं सर्वेण सर्वं परिव-

1) Cf. Divy. Index s. v. *īryā*.
2) °*dyam abhayāsa*° MS.

र्ज[यति] । [अ]प्रतिरूपदेशवासं लोकायतमन्त्रसेवनभावनां लाभसत्कारपूजोपस्थान-
बहुमानं सर्वेण सर्वं परिवर्जयति । ये चान्ये उपक्लेशा बोधिपक्ष्यमार्गान्तरायिका-
स्तान्सर्वेण सर्वं परिवर्जयति । तेषां च प्रतिपक्षं भजते ॥

अत्रैव चाकल्याणमित्रलक्षणमुक्तं । शीलविपन्नपुद्गलविवर्जनतया पापमित्रपरिवर्ज-
5 ना वेदितव्या । एवं दृष्टिविपन्नाचारविपन्नाजीवविपन्नपुद्गलविवर्जनतया । सङ्गणिकाराम-
पुद्गलविवर्जनतया । कुशीदपुद्गलविवर्जनतया । संसाराभिरतपुद्गलविवर्जनतया । बोधिप-
राङ्मुखपुद्गलपरिवर्जनतया । गृहिसंसर्गविवर्जनतया पापमित्रपरिवर्जना वेदितव्या । तेन च
कुलपुत्रैतानि स्थानानि परिवर्जयता न तेषां पुद्गलानामन्तिके दुष्टचित्तमुत्पादयितव्यं न
प्रतिघचित्तं नावमन्यनाचित्तमुत्पादयितव्यम् । एवं चानेन चित्तमुपस्थापयितव्यम् । उक्तं
10 हि भगवता धातुशः सत्त्वाः कामादिधातुं आस्रवन्ति जायन्ते संस्यन्दन्ते संसर्गाच्च विनश्य-
न्ति । तस्मादहं संसर्गं वर्जयिष्यामीति ॥

बोधिचित्तसंप्रमोषो ऽप्यनर्थः तस्य च हेतुरुक्तो रत्नकूटे[1] । चतुर्भिः काश्यप धर्मैः सम-
न्वागतस्य बोधिसत्त्वस्य बोधिचित्तं मुह्यति ' कतमैश्चतुर्भिः । आचार्यगुरुदक्षिणीयविसंवादन-
तया परेषामकौकृत्ये कौकृत्योपसंहरणतया । महायानसंप्रस्थितानां [31b] च सत्त्वानामव-
15 र्णायशो ऽकीर्त्यश्लोकनिश्चारणतया मायाशाठ्येन च परमुपचरति नाध्याशयेनेति अस्य
विवर्जनमत्रोक्तं । चतुर्भिः काश्यप धर्मैः समन्वागतस्य बोधिसत्त्वस्य सर्वासु जातिषु जातमा-
त्रस्य बोधिचित्तमामुखीभवति । न चान्तरा मुह्यति यावद्बोधिमण्डनिषदनात् । कतमैश्चतुर्भिः ।
यदुत जीवितहेतोरपि संप्रजानन्मृषावादं न प्रभाषते ' अन्तशो हास्यप्रेक्षिकयापि[2] ।

---

1) See M. Vyutp. LXV. 39; K. F. 213. My friend Mr. T. Watters informs me that this passage occurs at the beginning of a work of which there are two translations in Chinese. See Nanjio 23 (43) and 805, who like Wassiljev gives the Sk. title of the work as Kāçyapa-parivarta. We must accordingly take *Ratnakūṭa* as a vague reference to the collection so called (Wassiljev, 154 (167), 305 (335).) But see Nanjio's literal Sanskrit version of the title of 805, as well as of 57 and 58.

2) The general sense is clear. The Tib. has: བཞད་གད་ཀྱི་ཕྱིར 'on account of laughter'. Should we read *prekshitayā*, as a form *prekshitva* is quoted?



अध्याशयेन च सर्वसत्त्वानामन्तिके तिष्ठत्यपगतमायाशाठ्यतया सर्वबोधिसत्त्वेषु च शास्तृसं-
ज्ञामुत्पादयति । चतुर्दिशं च तेषां वर्णं निश्चारयति । यांश्च सत्त्वान्परिपाचयति तान्सर्वाननु-
त्तरायां सम्यक्संबोधौ समादापयति । प्रादेशिकयानास्पृहणतया ' एभिः काश्यप चतु-
र्भिरिति ॥

5 सिंहपरिपृच्छायामप्याह[1] ।

न जातु धर्मदानस्य अन्तरायं करोति यः ।
तेनासौ लभते क्षिप्रं लोकनाथेहि सङ्गमम् ॥

तथा जातिस्मरा[ह्]धर्मदानाज्ज्ञानीष्वेवं[2] कुमारकेति ॥ तथात्रैव ।

बोधिचित्तं न रिञ्चति तेन सर्वासु जातिषु ।
10 स्वप्नान्तरेऽपि तच्चित्तं किं पुनर्यदि जाग्रतः ॥

आह ।

येषु विरतिस्थानेषु ग्रामेषु नगरेषु वा ।
समादापेति[3] बोधाय तेन चित्तं न रिञ्चति ॥

आर्यमञ्जुश्रीबुद्धक्षेत्रगुणव्यूहालंकारसूत्रे[4] ऽप्याह । चुतर्भिर्धर्मैः समन्वागतो बो-
15 धिसत्त्वः प्रणिधानान्न चलति ॥ पे ॥ निहतमानश्च भवतीर्ष्यामात्सर्यपरिवर्जकश्च भवति-
परसंपदं च दृष्ट्वा आत्तमना भवतीति ।

इदमेव पात्रबोधिचित्तस्य स्फुटतरमसंप्रमो[32 a]षकारणं यत्तत्रैव रत्नकूटे ऽभिहि-
तम् । सर्वेर्यापथेषु बोधिचत्तपरिकर्मणतया ' बोधिचित्तपूर्वङ्गमतया चेति ॥

तथा हि चन्द्रप्रदीपसूत्रे पाठः । आरोचयामि प्रतिवेदयामि[5] वो यथा यथा बहुलु[6]

---

1) See p. 5, note 3.
2) °*shvevam* MS.
3) *tat stha-satvān samādāpayati* margin. We should probably read °*dāpeti*. Compare Divy. Index p. 693.
4) See p. 13. note 5.
5) °*vedanayāmi* MS.
6) So MS. for *bahulam* (Tib. མང་དུ).

वितर्कयेन्नरः तथा तथा भवति तन्निम्न[1]चित्तः तेहि वितर्केहि तन्निश्रितेहीति ॥

अवसादोऽप्यनर्थः एतद्दर्शनं च रत्नमेघे दृष्टं। इह बोधिसत्त्वो नैवं चित्तमुत्पादयति'
दुष्प्रापा बोधिर्मनुष्यभूतेन सता' इदं च मे वीर्यं परीत्तं च कुसीदो ऽहं बोधिश्चा-
दीप्तशिरश्चैलोपमेन बहून्कल्पान्' बहूनि कल्पशतानि बहूनि कल्पसहस्राणि समु-
5 दानेतव्या। तन्नाहमुत्सहे ईदृशं भारमुद्वोढुं ॥ किं तर्हि बोधिसत्त्वेनैवं चित्तमुत्पाद-
यितव्यं' ये ऽपि तेऽभिसंबुद्धास्तथागता अर्हन्तः सम्यकसंबुद्धा ये चाभिसंबुध्यन्ते ये वाभि-
संभोत्स्यन्तेऽपीदृशेनैव नयेन ईदृश्या प्रतिपदा। ईदृशेनैव वीर्येणाभिसंबुद्धा अभिसंबुध्यन्ते
ऽभिसंभोत्स्यन्ते च। यावन्न ते तथागतभूता एवाभिसंबुद्धाः' अहमपि तथा तथा घटिष्ये
तथा तथा व्यायंस्ये सर्वसत्त्वसाधारणेन वीर्येण सर्वसत्त्वारम्बणेन वीर्येण यथाहमनुत्तरां
10 सम्यक्संबोधिमभिसंभोत्स्य इति ॥

पुनरपरोऽनर्थो रत्नकूटे[2] दृष्टः। अपरिपाचितेषु सत्त्वेषु विश्वासो बोधिसत्त्वस्य स्ख-
लितं अभाजनीभूतेषु सत्त्वेषूदारबुद्धधर्मसंप्रकाशनात् बोधिसत्त्वस्य स्खलितं ॥ उदारा-
धिमुक्तिकेषु सत्त्वेषु हीनयानसंप्रकाशना[द्] बोधिसत्त्वस्य स्खलितमिति। सम्यकस्मृ[32b]
त्युपस्थितेषु शीलवत्सु कल्याणधर्मेषु प्रतिविमानना दुःशीलपापधर्मसंग्रहो बोधिसत्त्वस्य
15 स्खलितमिति ॥

अनधिमुक्तिरप्यनर्थः। यथोक्तं राष्ट्रपालसूत्रे।

[3]यस्य अधिमुक्ति न विद्यति बुद्धधर्मगणे च न तस्य धिमुक्तिः।
शिक्षव्रतेषु न तस्य धिमुक्तिः पापमतेस्तिरपायमुखस्य[4] ॥

---

1) After *nimna* (? corr. *nishṭha*) the transcript reads *bodhi*-cittaḥ from marginal addition in the archetype.

2) Cf. 52.12 supra.

3) Metre as on p. 2 above.

4) The Tib. has (f. 39. b. 2). ངན་སོང་གསུམ་ཕྱོགས་པ་ which must mean 'turned towards the *three* hells'; though Childers mentions *four apāyas*. *Tirapāya* therefore = *apāya-traya*.



स इतश्च्युतो मनुजेषु कर्मवशादबुधो हि विमूढः।
नरकेष्वथ तिर्यगतीषु प्रेतगतीषु च विन्दति दुष्खम् ॥

इति अस्य विसर्जनं रत्नकूटेऽभिहितं दृष्टं। येषु चास्य गम्भीरेषु बुद्धिनावगाहते'
तत्र तथागत एव साक्षीति कृत्वा न प्रतिक्षिपति' तथागत एव जानीते' नाहं जाने'
अनन्ता बुद्धबोधिर्नानाधिमुक्तिकतया तथागतानां सत्त्वेषु धर्मदेशना प्रवर्त्तत इति ॥ 5

वैयावृत्य[1]वर्तमानेनानर्थविवर्जनकुशलेन भवितव्यं। बोधिसत्त्वप्रातिमोक्षे[2] हि सह-
धार्मिके धर्मश्रवणे' तथागतपूजायां च वैयावृत्यमुपदिष्टं तत्र या वृत्तिः सा रत्नराशिसूत्रा[3]-
दागता। तत्र वैयावृत्यकरेण भिक्षुणा सर्वभिक्षुसंघस्य चित्तमभिराधयितव्यं। तत्र ये भि-
क्षव आरण्यकाः प्रान्तशय्यासनिका[4]स्तेषां' वैयावृत्यकरेण भिक्षुणा सर्वेण सर्वं न कर्मस-
मुत्थानं दातव्यं। यदि पुनरारण्यकस्य भिक्षोः संघपर्यापन्नं शैक्षकं[5] कर्म प्राप्नुयात्' एतेन 10
वैयावृत्यकरेण भिक्षुणात्मनैव तत्कर्तव्यं। अन्यतरो वा भिक्षुरध्येष्यो न पुनः स आ-
रण्यको भिक्षुरुत्पीडयितव्यस्तत्र यो भिक्षुः पिण्डचारिको भवति तस्य तेन वैयावृत्यक-
रेण भिक्षुणा प्रणीतभोजनेषु संविभागः कर्तव्यः। तत्र काश्यप यो भिक्षुर्योगा[33 a]चारी
भवति' तस्य तेन वैयावृत्यकरेण भिक्षुणाऽनुलोमिकान्युपकरणान्युपसंहर्तव्यानि ग्लान-
प्रत्ययभैषज्यपरिष्काराश्च। यस्मिंश्च प्रदेशे स योगाचारी भिक्षुः प्रतिवसति तस्मिन्प्रदेशे 15
नोच्चशब्दः कर्तव्यः। रक्षितव्यो वैयावृत्यकरेण भिक्षुणा योगाचारी भिक्षुः। शय्यासनोप-
स्तम्भनास्य कर्तव्या। प्रणीतानि च संप्रियाणि[6] योगाचारभूम्यनुकूलानि खादनीयभोजनी-
यान्युपनामयितव्यानि ॥ पे ॥ ये भिक्षवो बाहुश्रुत्ये ऽभियुक्ता भवन्ति तेषामुत्साहो दात-

---

1) See p. 50 note 5.

2) See p. 11 note 9.

3) Nanjio 23 (44): tr. before A. D. 439.

4) Similar forms in Divy. Index.

5) The adjectival form appears to be new; for *çaiksha*, see Avadāna-çataka (Index to Feer's tr. p. 479).

6) °*preyā* MS.

व्यः। यावत्ते ऽपि रक्षितव्याः। ये धार्मकथिका भिक्षवो भविष्यन्ति ' तेषां प्रतोद्धारधर्मता कर्तव्या। यावद्धर्मश्रवणिकाश्चोद्योजयितव्याः पर्षन्मण्डलं परिसंस्थापयितव्यं। सांकथ्यमण्डलं विशोधयितव्यं यावत्साधुकारबहुलेन चास्य भवितव्यं ॥ पे ॥ न क्वचिद्वस्तुनि ऐश्वर्यसंज्ञोत्पादयितव्या। कियत्परीत्तमपि कार्यं संघमतेन कर्तव्यं। न स्वमतेन यावन्न सांघिकश्चातुर्दिशसांघिकेन[1] संसृष्टः कर्तव्यः। एवं विपर्ययादेवं स्तौपिकेन सहान्योन्यसंसर्गप्रतिषेधः। यदि चातुर्दिशे संघे वैकल्यं भवेत्सांघिकश्च लाभ उत्सदो[2] भवेत्तेन वैयावृत्यकरेण भिक्षुणा भिक्षुसंघमेकमानसं कृत्वा ' सांघिकलाभाच्चातुर्दिशसांघिककार्यं कर्तव्यं। एवं स्तूपे ऽपि प्रलुग्ने[3] ऽयमेव विधिर्दायक[ान्]दानपतीन् वा समादाप्य प्रतिसंस्कर्तव्य इत्याज्ञा। यदि पुनः काश्यप कियद्बहुरपि स्तौपिको लाभो भवेत् ' स वैयावृत्यकरेण न संघेन चातुर्दिशसंघे उपनामयितव्यः। तत्कस्माद्धेतोः। या स्तौपिका अन्तश एकदशापि[4] श्राद्धैः प्रसादबहुलैर्निर्यातिता भवति ' सा स[33b]देवकस्य लोकस्य चैत्यं ' कः पुनर्वादो रत्नं वा रत्नसंमतं वा यच्च स्तूपे चीवरं निर्यातितं भवति। तत्तत्रैव तथागतचैत्ये वातातपवृष्टिभिः परिक्षयं गच्छतु। न पुनः स्तौपिकं चीवरं हिरण्यमूल्येन परिवर्तयितव्यं। न हि स्तौपिकस्य कश्चिदर्घो नापि स्तूपस्य केनचिद्वैकल्यं यो हि कश्चित्काश्यप वैयावृत्यकरो भिक्षू रुष्टचित्तः शीलवतां दक्षिणीयानामैश्वर्यादाज्ञप्तिं ददाति स तेनाकुशलेन कर्मणा नरकगामी भवतीति। यदि मनुष्यलोकमागच्छति दासो भवति परकर्मकरो लाभी च भवति खटचपेटप्रचण्डप्रहाराणाम्। पे। द[ण्डक][5]र्मभयतर्जितं भिक्षुं

1) Cf. Feer, Avad.-ç. pp. 479, 339.

2) Apparently in the sense of 'desire' occasionally found in the Pali *ussado* (Suttanip. v. 515, tr. p. 89). Cf. Senart, Mhv. I. p. 372.

3) A remarkable 'Palicism'. Cf. *palibodha* at p. 50.15 above.

4) Cf. Whitney Gr.² § 486 c; Speijer, Syntax p. 222, where this indecl. usage is noted as an archaism.

5) These two letters are uncertain in the MS. Tib. (40. b. 5) has ཚད་པས་ གཙོད་པ་ ...



करोत्यकालप्रेषणमकालज्ञप्तिं ददाति। स तेनाकुशलेन कर्मणा बहुशङ्कुर्नाम प्रत्येकनरकस्तत्रास्योपपत्तिर्भवति। यावत्सहस्रविद्धः कायो भवति ' आदीप्तः ' प्रदीप्तः संप्रज्वलितः। पे। योजनशतविस्तारप्रमाणा जिह्वा भवति। तस्य तत्र जिह्वेन्द्रिये बहूनि शङ्कुशतसहस्राणि आदीप्तानि अयस्मयानि निखातानि भवन्ति। यो हि कश्चित्काश्यप वैयवृत्यकरो भिक्षुरागतागतं सांघिकं लाभं सन्निधिं करोति न कालानुकालं ददाति ' उद्धश्यापयित्वा[1] विहेठयित्वा ददाति। केषाञ्चिन्न ददाति। स तेनाकुशलमूलेन जङ्घा नाम गूथमृत्तिकाप्रेतयोनिस्तत्रास्योपपत्तिर्भवति। तत्रास्यान्ये प्रेता भोजनं गृहीत्वापदर्शयन्ति। स उद्धश्यमानस्तद्भोजनमनिमिषाभ्यां नेत्राभ्यां पश्यमानः क्षुत्पिपासापरिगतो दुष्खां ' वेदनां वेत्ति न च वर्षसहस्रेणापि तस्य भोजनस्य लाभी भवति। यदपि कदाचित्कर्हिचिद्भोजनं लब्धं [34 a] भवति तदुच्चारं भवति पूयशोणितं वेति ॥

संघरक्षितावदाने[2] ऽप्यनर्थ उक्तः। यांस्त्वं संघरक्षित सत्वानद्राक्षीः कुड्याकारांस्ते भिक्षव[3] आसन्। तैः सांघिकं कुड्यं श्लेष्मणा नाशितं ' तस्य कर्मणो विपाकेन कुड्याकाराः संवृत्ताः। यांस्त्वं संघरक्षित[4] सत्वानद्राक्षीः स्तम्भाकारांस्ते भिक्षव आसन्। तैः सांघिकस्तंभः सिंहाणकेन नाशितः। तेन स्तम्भाकाराः संवृत्ताः। यांस्त्वं सत्वानद्राक्षीर्वृक्षाकारान् पत्राकारान् फलाकारान् ते ऽपि भिक्षव आसन्। तैरपि सांघिकानि वृक्षपत्रपुष्पफलानि पौद्गलिकपरिभोगेन परिभुक्तानि तेन ते वृक्षपत्रपुष्पफलाकाराः संवृत्ताः। यांस्त्वं सत्वानद्राक्षी रज्ज्वकारान् संमार्जन्याकारांस्ते भिक्षव आसन् ' तैः सांघिका रज्जुसम्मार्जन्यः पौद्गलिकपरिभोगेन परिभुक्तास्तेन रज्ज्वाकाराः सम्मार्जन्याका-

1) A corrupt and doubtful form: Tib. (40.b.7 fin) has མཐོ་བརྩམས་ལ 'jeering'

2) Divyāvadāna, Tale 23; see printed text p. 342 l. 13: also the translation in Burnouf's Introduction¹ pp. 328—9; but the present extract is from a *textus ornatior*.

3) °*buddhasya çrāvakā* Divy.-text.

4) This example is not narrated at length in our Divy.-text.

राश्च संवृत्ताः। यं त्वं सत्वमद्राक्षीस्तट्टुकाकारं[1] स श्रामणेरक आसीत्। स तट्टुकं निर्मादय-
ति। आगन्तुकाश्च भिक्षवो ऽभ्यागताः। तैरसौ दृष्टः पृष्टश्च श्रामणेरक किमयं संघस्य पा-
नकं भविष्यति। स मात्सर्योपहतचित्तः[2] कथयति। किं न पश्यथ तट्टुकं निर्मादितं पीतं
पानकमिति। ते वृत्ता वेलेति नैराश्यमापन्ना ह्रीनदीनवदनाः प्रक्रान्ताः। स तस्य क-
र्मणो विपाकेन तट्टुकाकारः संवृत्तः॥ यं त्वं सत्वमद्राक्षीरुदूखलाकारं सोऽपि भिक्षुरासीत्।
तस्य पात्रकर्म[3] प्रत्युपस्थितं। तत्र चैकः श्रामणेरको ऽर्हन् मुद्रावारे[4] नियुक्तः। स तेनोक्तः
श्रामणेरक ददस्व मे खलिस्ताकं कुट्टयित्वेति। स कथयति। स्थविर तिष्ठ तावन्मुहूर्तं
व्यग्रो ऽस्मि पश्चात्कुट्टयित्वा दास्यामीति। स संजातामर्षः कथयति। [34 b] श्रामणे-
रक यदि मम कल्पेत उदूखलं स्प्रष्टुं त्वामेवाहमुदूखले प्रक्षिप्य कुट्टयेयं। प्रागेव खलि-
स्तोकमिति। स श्रामणेरः संलक्षयति। तीव्रपर्यवस्थानपर्यवस्थितो ऽयं। यद्यहमस्मै
प्रतिवचनं दास्यामि भूयस्या मात्रया प्रकोपमापत्स्यतीति तूष्णीमवस्थितः। यदास्य पर्य-
वस्थानं विगतं तदोपसंक्रम्य कथयति। स्थविर जानीषे त्वं को ऽहमिति। स कथयति। जाने
त्वां काश्यपस्य सम्यक्संबुद्धस्य प्रव्रजितं श्रामणेरकं। अहमपि भिक्षुः स्थविरः। श्राम-
णेरकः कथयति। यद्यप्येवं तथापि तु यन्मया प्रव्रजितेन करणीयं तत्कृतं। किं कृतं क्ले-
शप्रहाणं छिन्नसकलबन्धनोऽहं सर्वबन्धनविनिर्मुक्तः। खरं ते वाक्कर्म निश्चारितं। अत्य-
यमत्ययतो देशय। अप्येव नाम एतत्कर्मपरिक्षयं तनुत्वं पर्यादानं गच्छेदिति। तेनात्ययम-

1) Tib. གཞོང་པ 'a wooden basin, trough' - Jäschke. The forms *taṭṭa* and *taṭṭuka* are alike unknown to Sk. dictionaries; but the Dravidian languages, Tamil and Malayalam, show forms of similar meaning to that given in the Tib.

2) Not in ed.

3) sc. *piṇḍa-pātra*. Tib. ལྷུང་བཟེད (41.b.2).

4) The Tib. has (41. b. 2) དགྲ་བཅོམ་པ་གཅིག་གཅིག་ལ་དམ་བཞག་པའི་ལས་རེས་བབ་



त्ययतो न देशितं तेन कर्मणोदूखलाकारः संवृत्तः॥ यांस्त्वं सत्वानद्राक्षीः स्थाल्याकारान्।
ते कल्पिककारका आसन् भिक्षूणामुपस्थायकाः। ते भैषज्यानि[1] क्वाथयन्तो भिक्षुभिरप्रियमु-
क्ताः तैश्चित्तं प्रदूष्य स्थाल्यो भिन्नाः तेन स्थाल्याकाराः संवृत्ताः। यं त्वं सत्वमद्राक्षीर्मध्ये
छिन्नं तन्तुना धार्यमाणं सोऽपि भिक्षुरासील्लाभी आह्निकः तेन मात्सर्याभिभूतेन लाभः सं-
परिवर्तितः। यो वार्षिकः स हैमन्तिकः परिणामितः। यस्तु हैमन्तिकः स वार्षिकः प-
रिणामितः। तस्य कर्मणो विपाकेन मध्ये छिन्नस्तन्तुना धार्यमाणो गच्छति॥

॥ शिक्षासमुच्चये धर्मभाणकादिरक्षापरिच्छेदस्तृतीयः॥

## IV.

अपरेऽपि महान्तो ऽनर्थाः सूत्रान्तेषूक्ताः। यथा तावदाकाशगर्भसूत्रे[2]। पञ्चेमाः कुलपुत्र
क्षत्रियस्य मूर्द्धाभिषिक्तस्य मूलापत्तयः। याभि[35 a]र्मूलापत्तिभिः क्षत्रियो मूर्द्धाभिषिक्तः
सर्वाणि पूर्वावरोपितानि कुशलमूलानि झाषयति[3]। वस्तुपतितः पाराजिकः सर्वदेवमनु-
ष्यसुखेभ्यो ऽपायगामी भवति। कतमाः पञ्च। यः कुलपुत्र मूर्द्धाभिषिक्तः स्तौपिकं वस्त्व-
पहरति सांघिकं वा चातुर्दिशसांघिकं वा निर्यातितं वा। स्वयं वापहरति हारय-
ति वा। इयं प्रथमा मूलापत्तिः॥ यः पुनर्धर्मं प्रतिक्षिपति श्रावकनिर्याणभाषितं वा प्रत्येक-
बुद्धनिर्याणभाषितं वा महायाननिर्याणभाषितं वा प्रतिक्षिपति प्रतिषेधयतीयं द्वितीया
मूलापत्तिः॥ यः पुनर्मामुद्दिश्य शिरस्तुण्डमुण्डकाषायवस्त्रप्रावृतः शिक्षाधारी वा शि-

1) *Bhaisajy*° MS.

2) v. supr. p. 10,14. The present is the passage referred to in the Bodhicaryāvatāra, V. 104 (ed. Minaev. - Zap. Tom. 4) — a reference to which M. de la Vallée Poussin called my attention. See also Wassiljev, p. 171.

3) See f. 35. b. init. The Tib. (42 a 5) ཐལ་བར་རློག ('pulverises') confirms the form in the text, hitherto only certified *'hiṃsārthe'* in the Dhātupāṭhas both Sk. and Pali (*s. v.* jhas). *Jāsayati* in Çat.-Br. II. 2.2. 19 is similarly used.

क्षाधारी वा तस्य दुःशीलस्य वा शीलवतो वा काषायाणि वस्त्राण्यपहरति अपहारय-
ति । गृहस्थं वा करोति काये दण्डैः प्रहरति चारके वा प्रक्षिपति जीवितेन वा वियोज-
यतीयं तृतीया मूलापत्तिः ॥ यः पुनः क्षत्रियः संचिन्त्य मातरं जीविताद्व्यपरोपयति पि-
तरमर्हन्तं भगवच्छ्रावकं वा जीविताद्व्यपरोपयति समग्रं वा संघं भिनत्ति तथागतस्यार्हतः
सम्यक्संम्बुद्धस्य संचिन्त्य दुष्टचित्तो रुधिरमुत्पादयति ॥ एभिः पञ्चभिरानन्तर्यैः[1] कर्मभिरन्य-
तरान्यतरं कर्मोत्पादयतीयं चतुर्थी मूलापत्तिः ॥ यः पुनः क्षत्रियो ऽहेतुवादी भवति पर-
लोकोपेक्षकः । दशाकुशलान्कर्मपथान्समादाय वर्तते ऽन्यांश्च बहून्सत्त्वान्दशस्वकुशलेषु
कर्मपथेषु समादापयति विनयति निवेशयति प्रतिष्ठापयतीयं पञ्चमी मूलापत्तिः ॥ पे ॥
यः पुनर्ग्रामभेदं जनपदभेदं नगरभेदं राष्ट्रभेदं करोतीयं मूलापत्तिः ॥ पे ॥ आदिकर्मिणां म-
हायानसंप्रस्थितानां [35 b] कुलपुत्राणां कुलदुहितॄणां वाष्टौ मूलापत्तयो ' याभिर्मूलाप-
त्तिभिः स्खलिता आदिकर्मिका महायानसंप्रस्थिताः सर्वाणि पूर्वावरोपितानि कुशलमू-
लानि झाषयन्ति[2] । वस्तुपतिताः पराजिता देवमनुष्यमहायानसुखादपायगामिनो भवन्ति
चिरं च संसारे सीदन्ति कल्याणमित्रविरहिताः । कतमा अष्टौ । ये सत्त्वाः पूर्वदुश्चरितहे-
तुनास्मिन् क्लिष्टे पञ्चकषाये[3] लोके उपपन्नास्त इत्वर[4]कुशलमूलाः कल्याणमित्रं संनिः-
श्रित्येदं परमं गम्भीरं महायानं शृण्वन्ति । ते च परीत्तबुद्धयो ऽपि कुलपुत्रा अनुत्तरायां
सम्यक्संबोधौ चित्तमुत्पादयन्ति । तेषामादिकर्मिका ये च बोधिसत्त्वा इदं परमगम्भीरं शून्य-
ताप्रतिसंयुक्तं सूत्रान्तं शृण्वन्ति उद्दिशन्ति पठन्ति ' ते यथाश्रुतं यथापर्यवाप्तं परेषां [5]पूर्वबुद्धि-
सदृशानां स्वर्थं सुव्यञ्जनं विस्तरेणाग्रतः स्मारयन्ति प्रकाशयन्ति । ते ह्यकृतशमा बालाः
पृथग्जनाः शृण्वन्त उत्त्रस्यन्ति संत्रस्यन्ति संत्रासमापद्यन्ते । ते संत्रासेन विवर्तयन्त्यनुत्तरायाः

1) See Wassiljev 240 (264) note 2. The usage at 17.20.—18.7 above is different.

2) v. supra 59, 11.

3) *kalpāyuḥsatvasaṃkleçadṛshṭayaḥ* marg.; cf. Dh.-s. § 91.

4) A marginal gloss *arvācina* on this word, for which see Divy. Ind.

5) *samvarāt pūrva*, margin.



सम्यक्संबोधेश्चित्तं श्रावकयाने चित्तं प्रणिदधति । एषा आदिकर्मिकबोधिसत्त्वस्य मूलाप-
त्तिः प्रथमा ॥ यया मूलापत्त्या स कुलपुत्रः सर्वं पूर्वावरोपितं कुशलमूलं झाषयति । वस्तु-
पतितः पराजितः स्वर्गापवर्गसुखात् ' विसंवादितं चास्य बोधिचित्तमपायगामी भवति ।
तस्माद्बोधिसत्त्वेन महासत्त्वेन परपुद्गलानामाशयानुशयं प्रथमं ज्ञात्वा यथाशयानां सत्त्वानाम-
नुपूर्वेण धर्मदेशना कर्तव्या । तद्यथा महासमुद्रेऽनुपूर्वेणावतारयति ॥ पे ॥

पुनरपरमादिकर्मिको बोधिसत्त्वः कस्यचिदेव [36 a] वक्ष्यति ॥ न त्वं शक्यसि षट्-
पारमितासु चर्यां चर्तुं । न त्वं शक्यस्यनुत्तरां सम्यक्संबोधिमभिसंबोद्धुं ' शीघ्रं त्वं श्रावक-
याने प्रत्येकबुद्धयाने वा चित्तमुत्पादय । तेन त्वं संसारान्निर्यास्यसि ' यावद्यथापूर्वोक्तमिय-
मादिकर्मिकस्य बोधिसत्त्वस्य द्वितीया मूलापत्तिः ॥

पुनरपरमादिकर्मिको बोधिसत्त्वः कस्यचिदेवं वक्ष्यति । किं भोः प्रातिमोक्षविनयेन '
शीलेन सुरक्षितेन शीघ्रं त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयस्व ' महायानं पठ । यत्ते
किंचित्कायवाङ्मनोभिः क्लेशप्रत्ययादकुशलं कर्म समुदानीतं तेन पाठेन शुद्धिर्भवत्य-
विपाकं । यावद्यथापूर्वोक्तमयमादिकर्मिकस्य बोधिसत्त्वस्य तृतीया मूलापत्तिः ॥

पुनरपरं कुलपुत्र केषांचिदादिकर्मिको बोधिसत्त्व एवं वक्ष्यति ' वर्जयत[1] यूयं कुलपु-
त्राः श्रावकयानकथां । मा शृणुत मा पठत मा परेषामुपदिशत ' गोपयत श्रावकयानकथां '
न यूयं तस्मात् महत्फलं प्राप्स्यथ । न यूयं ततो निदानाच्छक्ताः क्लेशान्तं कर्तुं । श्रद्दधत
महायानकथां । शृणुत महायानं पठत महायानं परेषां चोपदिशत ' ततो यूयं सर्वदुर्गत्य-
पायपथान् शमयिष्यथ । क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यथ ॥

यदि ते तस्य वचनकारिणो भवन्तीदृशं दृष्टिगतमुपगृह्णीयुः ' उभयोरपि मूलापत्तिर्भ-
वतीयमादिकर्मिकस्य बोधिसत्त्वस्य चतुर्थी मूलापत्तिः ॥

पुनरपरमादिकर्मिका बोधिसत्त्वा द्विजिह्विका भवन्ति अन्यथा निर्दर्शयन्ति ' इदं च
महायानं कीर्तिशब्दश्लोकार्थं लाभसत्कारहेतोः पठन्ति स्वाध्यायन्ति धारयन्ति वाचयन्ति

1) The MS. has the indic. (°*tha*) for this verb only.

देशयन्ति परेषां च श्रुतमा[36 b]त्रमुपदिशन्ति । एवं च वक्ष्यन्ति ' वयं महायानिका नान्ये ' ते परेषामीर्ष्यायन्ति लाभसत्कारहेतोर्यतस्ते लभन्ते उपभोगपरिभोगान्परेभ्यस्तत्प्रत्ययात्ते प्रकुप्यन्ति तेषां चावर्णं निश्चारयन्ति कुत्सन्ति पंसयन्ति[1] विजुगुप्सन्ति ' आत्मानं चोत्कर्षयन्ति न तान् । अतस्ते ईर्ष्याहेतुना चोत्तरिमनुष्यधर्मैरात्मानं विज्ञपयन्ति । ततस्ते तेन वस्तुना पतिताः पराजिता महायानसुखादेतां महागुरुकामापत्तिमापद्यन्ते यथापायगामिनो भवन्ति । यथा कश्चित्पुरुषो रत्नद्वीपं गच्छेद्गन्तुं नावा समुद्रमवतरते स महासमुद्रे स्वयमेव तां नावं भिन्द्यात्तत्रैव मरणं निगच्छेद् ' एवमेव ये आदिकर्मिका बोधिसत्त्वा महागुणसागरमवतर्तुकामा ईर्ष्याहेतोस्तद्ददन्ति ' तत्प्रत्ययात्ते श्रद्धानावं भित्त्वा प्रज्ञाजीवितेन वियोगं प्राप्नुवन्ति । एवं ते बाला आदिकर्मिका बोधिसत्त्वा ईर्ष्याहेतोरनृतप्रत्यया महागुरुकामापत्तिमापद्यन्ते ' इयं पञ्चमो मूलापत्तिरादिकर्मिकस्य बोधिसत्त्वस्य ॥

पुनरपरं कुलपुत्र भविष्यन्त्यनागते ऽध्वनि गृहस्थप्रव्रजिता आदिकर्मिका बोधिसत्त्वा ये ते गम्भीराः शून्यताप्रतिसंयुक्ताः सूत्रान्ताधारणीक्षान्तिसमाधिभूमिस्वलंकृतमहाविद्वत्पुरुषाणां कृतश्रमाणां बोधिसत्त्वानां गोचरास्तान्महायानसूत्रान्तान् धारयन्ति पठन्ति स्वाध्यायन्ति परेषां च विस्तरेण वाचयित्वा प्रकाशयन्ति । अहं चेमान् धर्मान् स्वबुद्ध्या बुद्ध्वैवं च पुनरहं कारुण्यहेतोस्तवोपदिशामि ' त्वया वा पुनस्तथा भावयितव्यं यथा त्वमत्र गम्भीरेषु धर्मेषु[37 a] प्रत्यक्षो भविष्यसि । एवं ते ज्ञानदर्शनं भविष्यति यथा मम । एतर्हि[2] न पुनरेव ददाति पठितमात्रेणाहमिमानेवंरूपान्धर्मान् गम्भीरगम्भीरानुपदिशामि न साक्षात्क्रियया ॥ लाभसत्कारहेतोरात्मानं विक्रीणाति । तत्प्रत्ययात्सर्वत्र्यध्वगतानामर्हतां सम्यक्संबुद्धानां बोधिसत्त्वानामार्यपुद्गलानां च पुरतः सापराधिको भवति । महागुरुकामापत्तिमापद्यते । विसंवादयति देवमनुष्यान्महायानेन । श्रावकयानमेवास्य न भव-

1) Hitherto in Dhātupāṭha only: but cf. *paṃsana* p. 10 note 4.

2) *mamait°* without punctuation MS.



ति ' प्रागेव महायानस्यावतारविशेषाधिगमः । प्रागेवानुत्तरा सम्यक्संबोधिः ॥ तद्यथा कश्चित्पुरुषो महाटवीं प्रस्थितः क्षुत्तर्षप्रपीडितः स तत्र महाफलवृक्षे प्रतिष्ठितः । आहारार्थं स उदारफलवृक्षमपहाय गन्धसंपन्नं रससंपन्नमनास्वाद्य विषवृक्षमभिरुह्य विषफलानि भुञ्जीत भुक्त्वा च कालं कुर्यात् । तदुपमांस्तान्पुद्गलान्वदामि । ये दुर्लभं मनुष्यलाभं लब्ध्वा कल्याणमित्रं संनिश्रित्य महायानमवतर्तुकामा लाभसत्कारयशोहेतोरात्मानमुपदर्शयन्ति परान्पंसयन्ति[1] एवंरूपां महागुरुकामापत्तिमापद्यन्ते यया गुरुकयापत्त्या सर्वविज्ञानां परमजुगुप्सिता भवन्ति । अपायगामिनस्तथारूपाश्च पुद्गला न सेवनीयाः सर्वक्षत्रियब्राह्मणविट्शूद्राणां । यश्च तान् सेवते स सातिसारो[2] भवति सर्वविज्ञानां ' इयं कुलपुत्र बोधिसत्त्वस्य षष्ठी मूलापत्तिः ॥

पुनरपरं कुलपुत्र भविष्यन्त्यनागते ऽध्वनि क्षत्रियाणां पुरोहितचण्डाला अमात्यचण्डाला भटचण्डाला मूर्खाः पण्डितमानिनो महाधना महाभोगाः । बहुविधेषु दानमयपुण्यक्रियावस्तु[37 b]षु संदृश्यन्ते ते त्यागमदमत्ता मानमदर्पेण क्षत्रियं विभेदयन्ति ' श्रमणान् क्षत्रियैः । ते क्षत्रियान्निश्रित्य श्रमणान् दण्डापयन्ति[3] ' अर्थं[4] दण्डेन मुषन्ति ' तेनोपद्रवेण ते भिक्षवः पौद्गलिकं वा सांघिकं वा चातुर्दिशसांघिकं वा स्तौपिकं वा श्रमणैरपहृत्य तेषां प्राहृतं प्रदाप्यन्ते । ते पुनश्चण्डालाः क्षत्रियस्योपनामयिष्यन्ति । ते उभयतो[5]ऽपि मूलापत्तिमापद्यन्ते ' ये क्षत्रियचण्डालाः श्रमणैः सार्धं प्रदुष्यन्ति तथारूपं च ते धर्मं प्रज्ञपयिष्यन्ति । अधर्मं वा धर्ममपहाय ' सूत्रविनयशिक्षा अनपेक्ष्य कालोपदेशमहाप्रदेशानपहाय । महाकरुणामैत्रीप्रज्ञापारमितशिक्षोपायकौशल्यशिक्षाः याश्चापरेषु सूत्रेषु शिक्षा उपदिष्टास्ता अपहाय । तथारूपां धर्मयुक्तिं भिक्षूणां विहेठनार्थपूर्वकं क्रियाकारं प्रज्ञपयन्ति । यैः क्रियाकारैर्भिक्षूणां विहेठना

1) *paraṃ* MS.: for *paṃs* cf. supra 62, 3.

2) See Divy. Ind.

3) This form (not in lexx.) recurs in a metrical passage below, 39 b.

4) *artha* MS.

5) ***purohita-caṇḍālādyā**, **bhedanāt saṅghikādi-dravyāpaharaṇāc ca.*** marg.

भवति । रिञ्चन्ति शमथविपश्यनानुयोगमनस्कारं । तेऽवध्यापन्ना व्यापादबहुला भवन्ति । तेन च हेतुना भिक्षूणामप्युपशान्ताः क्लेशा नोपशाम्यन्ति न तनूभवन्ति । तत्काले पुनस्ते भिक्षव आशयविपन्ना भवन्ति शीलविपन्नाश्च भवन्ति । आचारविपन्ना भवन्ति दृष्टिविपन्ना भवन्ति तद्धेतोः शैथिलिका भवन्ति । बाहुलिका भवन्ति । अश्रमणाः श्रमणप्रतिज्ञाः । अब्रह्मचारिणो ब्रह्मचारिप्रतिज्ञाः शङ्कस्वरसमाचाराः प्रष्टव्यधर्मदेशकाः । ते [1]भूयस्या मात्रया सपरिवारस्य क्षत्रियस्य सत्कृता भवन्ति मानिताः पूजिता भवन्ति । ते च प्रहाणाभियुक्तानां भिक्षूणां गृहस्थेष्ववर्णं निश्चारयन्ति । स च क्षत्रियः सपरिवारः प्रहाणाभियुक्तानां भिक्षूणाम[38 a]न्तिके प्रदुष्यति अवध्यायति । यस्तत्र प्रहाणिकानां भिक्षूणामुपभोगपरिभोगस्तं स्वाध्यायाभिरतानां भिक्षूणां निर्यातयन्ति । ते [2]उभयतो मूलापत्तिमापद्यन्ते । तत्कस्य हेतोः ॥ ध्यायी भिक्षुः सुक्षेत्रं । नाध्ययनवैयावृत्त्या[3]श्रिता नाध्ययनाभियुक्ताः ॥ समाधिधारणीक्षान्तिभूमिषु भाजनीभूता दक्षिणीयाः पात्रभूताः । आलोककरा लोकस्य मार्गोपदेशकाः । कर्मक्षेत्रक्लेशक्षेत्रात्सत्त्वानुत्तारयन्ति । निर्वाणगमने च मार्गे प्रतिष्ठापयन्ति । इमाः कुलपुत्राष्टौ मूलापत्तय इति ॥

आसां निःसरणमिहैव सूत्रेऽभिहितं । यदि ते बोधिसत्त्वा आकाशगर्भस्य बोधिसत्त्वस्य नाम श्रुत्वा दर्शनमस्याकाङ्क्षेरन् । अपायप्रपतनभयात् मूलापत्तीर्देशयितुकामा । यदि ते आकाशगर्भं बोधिसत्त्वं नमस्कुर्युः नाम चास्य परिकीर्त्तयेयुस्तेषां स कुलपुत्रो यथा भाग्यतया स्वरूपेणाग्रतस्तिष्ठति ब्राह्मणरूपेण यावद्दारिकारूपेण पुरतः स्थास्यति । तस्यादिकर्मिकस्य बोधिसत्त्वस्य यथा समुत्थितास्ता आपत्तीः प्रतिदेशयति[4] । गम्भीरं चा-

1) *purohitādyā* marg.

2) In the margin (cf. gloss on similar passage supra 63, 16.) we find the explanation: *abrahmacāribhikshavo 'vārṇavādāt paribhogacyāvanāc ca.*

3) °*prtya* MS., as before.

4) The transcript following a later hand in the margin has a double causal form °*desāpayati*: cf. *daṇḍāpayati* [37 b, 39 b]. Compare Whitney's 'bastard causals' ('Roots' p. 238, *med.*).



स्योपायकौशल्यं महायाने चर्यामुपदर्शयति । यावदवैवर्त्तिकभूमौ च प्रतिष्ठापयति ॥ पे ॥ यदि तेषां संमुखं दर्शनं न ददाति । यस्तमभियाचति । तेनादिकर्मिकेण बोधिसत्त्वेन सापराधेन पश्चिमे यामे उत्थायासनात्प्राङ्मुखेन स्थित्वा धूपं धूपयितव्यं । अरुणो देवपुत्र आयाचितव्यः । एवं च वक्तव्यं । अरुण अरुण महाकृप महाभाग महोदितस्त्वं जम्बुद्वीपे मां करुणयाच्छादयस्व । शीघ्रमाकशगर्भं महाकारुणिकं मम वचनेन बोधय । [38 b] मम स्वप्नान्तरे तमुपायमुपदर्शय येनाहमुपायेनापत्तिं प्रतिदेशयामि । आर्ये महायाने उपायप्रज्ञां प्रतिलप्स्यामीति ॥ तेन तत्कालं शय्यायां निद्रापयितव्यं सहोद्गते[1]ऽरुणे इह जम्बुद्वीपे आकाशगर्भस्य बोधिसत्त्वस्येह समागमो भवति स्वरूपेण च । तस्यादिकर्मिकस्य बोधिसत्त्वस्य स्वप्नान्तरे पुरतः स्थित्वा तां मूलापत्तिं देशयति महायानोपायेन । तथारूपं च तस्योपायज्ञानं संदर्शयति । येनोपायकौशल्येन स आदिकर्मिको बोधिसत्त्वस्तत्रैव बोधिचित्तासंप्रमोषं नाम समाधिं प्रतिलभते सुदृढव्यवस्थितश्च भवति महायान इत्यादि ॥

अथ वा योऽत्र सूत्रेऽध्येषणमन्त्रः पूर्वमुक्तः । तेनायं विधिः कार्यः । एवं स्यात् । अरण्ये उपवने ऽभ्यवकाशे वागरुं वा तगरं[2] वा कालानुसारि वा धूपयितव्यं । प्राञ्जलिना च भूत्वा समन्ततो दिग्विदिक्षु च पञ्चमण्डलकेन वन्दित्वा इमे मन्त्रपदाः प्रवर्तयितव्याः । तद्यथा । सुमृश२[3] । कारुणिक । चरतु२ । विचर । सञ्चर । कारुणिक । मुरर मुरर वेगधारि [4]नमुचमे भुञ्जयत[5] कारुणिक चिन्तामणि[6] पूरय कारुणिक सर्वाशां मे स्थापय । आज्ञाधारी

1) *Saha* apparently with loc.; but possibly a compound; compare Pāṇini's *sahapūrvāhṇaṃ*.

2) *tagarum.* MS.

3) སུ་སྨྲི་ཤ (apparently) Tib.: but the reading has been corrected and is indistinct.

4) *na* added in marg.; not. in Tib.

5) ཧྲུ་ཧྲུ་ཛཾ་ཤ་ཏ Tib.

6) Cf. Wassiljev, supra cit., p. 59 note 2.

स्फुगु[1] ' २ ' रतिविवेक गु ' दृष्टिविवेक गु ' पूरय कारुणिक पूरयतु ममाशां ' सर्व-
था[2] चाशोकगति स्वाहा ॥ विधिः पूर्ववत्। सर्वव्याधिदुःखसर्वभयसर्वोपकरणविघातप्र-
तिघाते सर्वाभीष्टसिद्धये च कार्यः ॥ यदि क्षत्रियादयोऽपि बोधिसत्त्वाः कथमेषामापत्तिनियमो
ऽन्येषां चाधिक्यं। अथ तेन साम्वरिकाः। कथमेषामापत्तिव्यवस्था ' कथं वा तद्दोषा-
5 त्साम्वरिका अपि गृह्यन्ते। नैष दोषः। ये[39 a]षां यत्र बहुलं संभवः ते तत्राकोटिताः स्व-
नामग्रहणादर्शनाद्भयोत्पादनार्थं। परस्परतस्तु सर्वैः सर्वा आपत्तयः परिहर्तव्याः ॥ येन
वा प्रकृतिमहासावद्यतयाऽसमादानोऽप्यभव्यो भवत्युच्छिन्नकुशमूलश्च सुतरां तेन साम्व-
रिका इत्यलमनया चिन्तया ॥

उपायकौशल्यसूत्रेऽपि मूलापत्तिरुक्ता। किं वापि कुलपुत्र बोधिसत्त्वः प्रातिमोक्ष-
10 शिक्षायां शिक्षमाणः कल्पशतसहस्रमपि मूलफलभक्षः स्यात्। सर्वसत्त्वानां च सूक्तदुरु-
क्तानि क्षमेत्। श्रावकप्रत्येकबुद्धभूमिप्रतिसंयुक्तैश्च मनसिकारैर्विहरेदियं बोधिसत्त्वस्य
गुरुका मूलापत्तिः। तद्यथा कुलपुत्र श्रावकयानीयो मूलापत्तिमापन्नः सो ऽभव्यस्तैरेव
स्कन्धैः परिनिर्वातुम्। एवमेव कुलपुत्रो ऽप्रतिदेश्यैतामापत्तिमनिःसृज्य तान् श्रावकप्र-
त्येकबुद्धमनसिकारानभव्यो बुद्धभूमौ परिनिर्वातुमिति ॥

15 आसां च मूलापत्तीनां सुखग्रहणधारणार्थमेकीयमतानां च संग्रहकारिका उच्यन्ते ॥

रत्नत्रयस्वहरणादापत्पाराजिका मता।
सद्धर्मस्य प्रतिक्षेपाद्द्वितीया मुनिनोदिता ॥
दुःशीलस्यापि वा भिक्षोः काषायस्तैन्यताडनात्।
चारके वा विनिक्षेपादपप्रव्राजनेन च ॥

1) The MS. (with which the Tib. agrees) reads here and below (twice) *gu* clearly. This however is probably a misunderstanding of the old form of the figure 7 (seven repetitions of the charm).

2) སཏ་ཐ་ཙི' Tib. The Sk. is indistinct, it apparently reads *sapathañcā*.



पञ्चानन्तर्यकरणान्मिथ्यादृष्टिग्रहेण वा[1]।
ग्रामादिभेदनाद्वापि मूलापत्तिर्जिनोदिता ॥
शून्यतायाश्च कथनात्सत्त्वेषु कृतबुद्धिषु।
बुद्धत्वप्रस्थितानां वा संबोधेर्विनिवर्तनात् ॥
5 प्रातिमोक्षं परित्याज्य महायाने नियोजनात्।
शिष्ययानं न रागादिप्रहाणायेति वा ग्रहात् ॥
परेषां ग्रहणाद्वापि पुनः स्वगुणकाशनात्।
परपंसनतो ला[39 b]भसत्कारश्लोकहेतुना ॥
गम्भीरक्षान्तिकोऽस्मीति मिथ्यैव कथनात्पुनः।
10 दण्डापयेद्वा श्रमणान् दद्याद्वा शरणत्रयात् ॥
गृह्णीयाद्दीयमानं वा शमथं त्याजनात्पुनः।
प्रतिसंलीनभोगं च स्वाध्यायिषु निवेदनात् ॥
मूला आपत्तयो ह्येता महानरकहेतवः।
आर्यस्याकाशगर्भस्य स्वप्ने देश्याः पुरःस्थितैः ॥
15 बोधिचित्तपरित्यागाद्याचकायाप्रदानतः।
तीव्रमात्सर्यलोभाभ्यां क्रोधाद्वा सत्त्वताडनात् ॥
प्रसाद्यमानो यत्नेन सत्त्वेषु न तितिक्षते।
क्लेशात्परानुवृत्त्या वा सद्धर्माभासवर्णनाद् ' इति ॥

आर्यक्षितिगर्भसूत्रे ऽप्युक्तं। यो महाब्रह्मन् ममोद्दिश्य प्रव्रजितो दुःशीलपापसमाचा-
20 रो भिक्षुरनभूतः कशम्बकजातो[2] अश्रमणः श्रमणप्रतिज्ञः अब्रह्मचारी ब्रह्मचारिप्रतिज्ञः।
ध्वस्तः पतितः पराजितो विविधैः क्लेशैः ' अथ च पुनः स दुःशीलपापसमाचारो भिक्षु-

1) See p. 60, note 1.

2) Pali. *kasambu* 'rubbish', with the whole passage compare M. Vyutp. cclxxvii. 16, 18—19.

रप्यपि सर्वदेवानां यावत्सर्वमनुष्याणां यावत्पुण्यनिधीनां दर्शयिता भवति कल्याण-
मित्रं । किं चापि स अपात्रीभूतः तेन च पुनः शिरस्तुण्डमुण्डेन काषायवस्त्रप्रावरणेर्या-
पथेन दर्शनहेतुनापि बहूनां सत्त्वानां विविधकुशलमूलोपस्तम्भनकरः सुगतिमार्गदर्शको
भवति । तस्माद्यो ममोद्दिश्य प्रव्रजितः शीलवान् दुःशीलो वा तस्य नानुजानामि चक्रव-
5 र्त्तिराज्ञामपि यन्ममोद्दिश्यप्रव्रजितस्य सहधर्मेणापि काये दण्डप्रहारं वा दातुं चारके
वा प्रक्षेप्तुं ' अङ्गमङ्गं विकर्त्तनं वा कर्तुं जीविताद्वा व्यपरोपणं कर्तुं [40 a] । किं पुन-
रधर्मेण ॥

किं चापि मृतः कथ्यते ऽस्मिन् धर्मविनये । अथ च पुनः स पुद्गलो गोरोचनकस्तू-
रिकासदृश इति । अत्रैवाह । ये ममोद्दिश्य प्रव्रजितान् यानभूतान् पात्रभूतान्वा विहेठ-
10 यिष्यन्ति ते सर्वेषां त्र्यध्वगतानां बुद्धानामतीव सापराधा भवन्ति । समुच्छिन्नकुशलमूला
दग्धसन्ताना अवीचिपरायणा भवन्तीति ।

अत्रैवाह । सर्वबुद्धैरधिष्ठितोऽयं मोक्षध्वजो यदुत रक्तकाषायवस्त्रमिति । अस्मि-
न्नेव चोक्तं । तेन खलु पुनः समयेन बहूनि श्रावकनियुतशतसहस्राणि बहूनि च बोधि-
सत्त्वनियुतशतसहस्राणि भगवतोऽन्तिके एवंरूपं पूर्वकृतं कर्मावरणं प्रतिदेशयन्ति । वयम-
15 पि भदन्त भगवन् बहूनां पूर्वकाणां तथागतानां प्रवचने पात्रभूतान् पात्रभूतांश्च बुद्धानां भग-
वतां श्रावकयानीयान् पुद्गलाञ्जुगुप्सितवन्तः पंसितवन्तो रोषितवन्तो ऽवर्णायशःक-
थाश्च निश्चारितवन्तः । तेन वयं कर्मावरणेन त्रिष्वपायेषु विविधां तीव्रां प्रचण्डां दुःखां
वेदनां प्रत्यनुभूतवन्तः ॥ पेयालं ॥ वयं तत्कर्मावरणशेषमेतर्हि भगवतो ऽन्तिके प्रतिदे-
शयिष्यामः । केचिद्वदन्ति । वयं भगवतः श्रावकान्वचनैस्तर्जितवन्तः परिभाषितवन्तः । के-
20 चिद्वदन्ति । वयं भगवतः श्रावकानपात्रभूतान्पात्रभूतांश्च प्रहरितवन्तः । केचिद्वदन्ति । वयं
चीवरान् हृतवन्तः । केचिद्वदन्ति । वयं भगवतः श्रावकाणामुपभोगपरिभोगानाच्छिन्नवन्तः ।
केचिद्वदन्ति । वयं भगवन्तमुद्दिश्य प्रव्रजितान् गृहस्थान्कारितवन्तः [40 b] तत अस्थानं
सादिताः । केचिद्वदन्ति । अस्माभिर्भगवन् बुद्धानां भगवतां श्रावका अपात्रभूताः पात्रभूताश्च
सापराधिकाश्चारके प्रक्षिप्तास्तेन वयं कर्मावरणेन बहून् कल्पांस्त्रिष्वपायेषु विविधां ती-



व्रां प्रचण्डां दुःखां वेदनां प्रत्यनुभूतवन्तः ॥ पे° ॥ तद्वयमेतर्हि कर्मावरणशेषं भगवतो
ऽन्तिके प्रतिदेशयामः । आयत्यां संवरमापद्येम । प्रतिगृह्णातु भगवानस्माकमनुकम्पामुपा-
दाय । उद्धरतु भगवानस्माननन्तपापेभ्य इति विस्तरः ॥

प्रव्रज्यान्तरायसूत्रे[1] ऽप्यनर्थ उक्तः । चतुर्भिर् महानामन् धर्मैः समन्वागतो गृही
अक्षणप्राप्तो भवति । जात्यन्धश्च जडश्चाजिह्वकश्च चण्डालश्च जातु[2] सुखितो भवत्यभ्या- 5
ख्यानबहुलश्च षण्डकश्च पण्डकश्च नित्यदासश्च । स्त्री च भवति श्वा च सूकरश्च गर्दभ-
श्चोष्ट्रश्चाशीविषश्च भवति तत्र तत्र जातौ ॥ कतमैश्चतुर्भिः । इह महानामन् गृही
पूर्वजिनकृताधिकाराणां सत्त्वानां नैष्क्रम्यचित्तस्य प्रव्रज्याचित्तस्यार्यमार्गचित्तस्यान्तरायं
करोति ' अनेन प्रथमेन ॥ पुनरपरं गृही धनलौल्येन पुत्रलौल्येन कर्मविपाकमश्र-
द्दधत् पुत्रस्य वा दुहितुर्वा भार्याया वा ज्ञातिसंघस्यैश्वर्यस्थाने वर्तमाने प्रव्रज्या- 10
न्तरायं करोति ' अनेन द्वितीयेनेति ॥ अन्यद्वयं ' सद्धर्मप्रतिक्षेपः श्रमणब्राह्मणेषु च प्र-
तिघः ॥

दश चाकुशलाः[3] कर्मपथाः अनर्थाः । सद्धर्मस्मृत्युपस्थानाद्विपाककटुका द्रष्टव्याः । ततः
किञ्चिन्मात्रं सूत्रं सूच्यते ' प्राणातिपातविपाकलवस्तावद् ' यथाह । तद्यथाग्निशिखाचरा
नाम पक्षिणो ये ऽग्निशिखामध्यगता [41 a] न दह्यन्ते संहृष्टतराश्च नारकेयाणां[4] कपालं 15
भित्त्वा रुधिरं पिबन्ति । कपालान्तरचरा नाम पक्षिणो ये मस्तकं भित्त्वा ज्वलितमस्तक-
लुङ्गान्[5]पिबन्ति ' जिह्वामिषभुजो नाम पक्षिणो ये जिह्वां विदार्याभितो ऽभितः प्रभक्षयन्ति ।
सापि जिह्वा भुक्ता पुनरपि संजायते पद्मदलकोमलतरा । एवमर्थानुरूपसंज्ञा दन्तोत्पाटका

---

1) Not in Feer's or Nanjio's lists.
2) Mhvs. I. 101. 111 and Senart *ad loc.*
3) Cf. Dh.-s. § 56.
4) On Buddhist hells in general see Feer in J. As. 1892 (VIII. 20) pp. 185 sqq.
5) Quoted by B.R. from the M. Vyutpatti, for the more usual *mastuluṅga* 'brains'.

नाम कण्ठनाड्यपकर्षका नाम । क्लोमकाशिनः । आमाशयादाः । प्लीहसंवर्तका[1] । अन्त्रविवरखादिनः । पृष्ठवंशचरा नाम । मर्मगुल्मका नाम पक्षिणो ये सर्वाणि मर्मविवराणि भित्त्वा मर्माणि कृन्तयित्वा[2] विवराणि प्रविश्य मज्जामण्डं पिबन्ति क्रन्दमानानां । सूचीच्छिद्रा नाम पक्षिणो ये सूचीसदृशतुण्डा रक्तं पिबन्ति । एवमस्थिविवराशिनः षट्त्वग्[3]भक्षिणः । नखनिकृन्तका मेदोदाः स्नायुविशेषकाः । केशोण्डुका नाम पक्षिणो ये केशमूलान्युत्पाटयन्ति ॥ स एवमवीचीप्रदेशस्त्रीणि योजनशतसहस्राणि पक्षिभिरवपन्नो नाम । तत्र तैरन्यैर्नारकेयैः सहानेकानि वर्षशतसहस्राणि भक्ष्यते संभवति च । स कथञ्चिदपि तस्मान्मुक्तः सर्वस्माद्दुःखजालपरिवृतः । श्वभ्रप्रपातो नाम द्वितीयः प्रदेशस्तत्र गच्छति । त्राणान्वेषी शरणान्वेषी परित्राणान्वेषी समन्तत एकादशभिरर्चिस्कन्धैरावृतो निःसहायः कर्मपाशबन्धनबद्धः समन्ततः शत्रुभिरावृतः कान्तारमनुप्रपन्नः सर्वस्मान्नरकपुञ्जादधिकतरं व्यसनमभिप्रपन्नस्तं श्वभ्रप्रपातं नाम प्रदेशमनुधावति । पतिते ऽतीव पादः प्रविलीयते । उत्क्षिप्तः पु[41 b]नरपि संभवति । सुकुमारतरः श्लक्ष्णतरः खराभिस्तीव्राभिर्वेदनाभिरभिभूतः । तस्यैवं भयविक्लववदनस्य करचरणसर्वाङ्गप्रत्यङ्गप्रविलीयमानस्य स प्रदेशः श्वभ्रप्रपातो नाम प्रादुर्भवति । स तस्मिन्देशे निपतति पतितः श्वभ्रे प्रपतति त्रीणि योजनसहस्राणि । पुनरपि कर्मकृतेन वायुनोत्क्षिप्यते । स प्रपतमानः कंकवायसगृध्रोलूकैर्भक्ष्यते । यावत्तस्यैवमुत्क्षिप्यमानस्य च प्रपततश्चानेकानि[4] वर्षशतसहस्राणि गच्छन्ति । कथञ्चिदपि तस्मान्मुक्तः परिभ्रामितश्चक्राङ्कं विवरं नाम प्रदेशमनुधावति । तस्मिंश्च प्रदेशे सहस्राराणि चक्राणि प्रादुर्भवन्ति वज्रनाभीनि तीक्ष्णज्वालानि शीघ्रभ्रमाणि तस्य सहगमनादेव ता-

1) MS. *pliha vamvartt*°; [*saṃ*]*va*° a sec. manu.

2) The MS. appears rather to read *krittay*°. The form in the text is quoted by Whitney from Lāṭyāyana.

3) Six skins according to Caraka and others, apud Jolly, Trans. Int. Congr. Or. Lond. (1892) vol. I. p. 457.

4) °*kāni ca* MS.



नि चक्राणि शरीरं प्राप्य भ्रमन्ति ॥ पे ॥[1] प्रत्येकं सर्वाङ्गानि प्रमथ्नन्तो दहन्ति पादतले चास्यं शङ्कुभिर्भिद्येते । एवं मक्कोटकपर्वते । माक्कोटकैः प्राणिजातिभिः सान्तर्बहिःपरमाणुशः प्रभक्ष्यते । भुक्तो भुक्तः पुनरपि संजायते सुकुमारतरः । सुकुमारतया भूयोऽप्यधिकतरां वेदनामनुभवति । भुक्तभुक्तस्य प्रभूततरमेवास्य बह्वांसं प्रादुर्भवति । तस्य प्राणातिपातकृ[2]तोपचितस्य तत्फलं भवति ॥

अदत्तादानविपाकमाह । स एष दुष्कृतकर्मान्तचारी आलातचक्रनिर्माणगन्धर्वनगरमृगतृष्णिकासदृशं महदर्थजातं पश्यति रत्नवस्त्रधनधान्यनिकरभूतं । तस्यैवं लोभाभिभूतस्य कर्मणा मोहितस्यैवं भवति । ममेदमिति । स एवं मोहितः पापकारी प्रज्वलिताङ्गा[3]रकर्षूर्लङ्घयित्वा तद्द्रविणमनुधावति । स कर्मकृतैर्यमपुरुषैर्गृह्यते [42 a] शस्त्रजालमध्यगतः सर्वाङ्गप्रत्यङ्गशः पाट्यते विशस्यते दह्यते ऽस्थ्यवशेषः क्रियते । न चास्यानादिकालप्रवृत्तः स लोभस्तामप्यवस्थां गतस्य परिहीयत इति ॥

काममिथ्याचारमधिकृत्याह । एष स पापकर्ता तस्माच्छस्त्रसङ्कटान्मुक्तः कथमप्यङ्गारकर्षूर्लङ्घयित्वा कर्मणा भ्रामितः प्रदेशमन्यं प्रपद्यते । वितथदर्शनं नाम तत्र कर्मकृतां स्त्रियं पश्यति या तेन पूर्वं नष्टस्मृतिना दृष्टा । दृष्ट्वा चानादिकालाभ्यस्तो रागाग्निरुत्पद्यते । स तेन धावति येन ता स्त्रियः । ताश्चायोमय्यो नार्यः[5] कर्मकृताः । ताभिरसौ गृह्यते । गृहीत्वा चौष्ठात्प्रभृति तथा भुज्यते यथास्य सर्षपफलमात्रप्रमाणमपि नावशिष्टं । तस्मिञ् शरीरे भवति । पुनरपि संभवति । पुनरपि भुज्यते । स कटुकां खरां वेदनामनुभवंस्तस्माद्रागाग्नेर्न निवर्तते । येन ता स्त्रियस्तेन भूयः सः संधावति । न चास्य तत्पीडा त-

1) The marg. adds as a note here: *punar jaya*[*n*]*te punar bhramanti.*

2) Compare Divyāv. 301 21 sqq.

3) In the sense of 'fire' hitherto in lexx. only.

4) So MS.

5) Feer l. c. p. 202. Pañca-gati (in J.P.T.S. 1884) p. 155, v. 31.

धा बाधते यथा रागाग्निः। अथ ता स्त्रियो भूयो वज्रमयायोमयप्रज्वलितगात्रास्तं मनुष्यमादाय
ज्वालामालाकुलसर्वशरीरास्तं नारकेयं[1] सिक्तामुष्टिवद्भिन्दन्ति । पुनरपि संभवतीति पूर्व-
वत् ॥ पे ॥

स्त्रियो मूलमपायस्य धननाशस्य सर्वथा ।
5 स्त्रीविधेया नरा ये तु कुतस्तेषां भवेत्सुखम् ॥ पे ॥[2]
यावत् । स्त्री विनाशो विनाशानामिह लोके परत्र च ।
तस्मात्स्त्रियो विवर्ज्याः स्युर्यदीच्छेत्सुखमात्मन इति ॥

मृषावादमधिकृत्याह । स तैर्यमपुरुषैर्गृह्यते गृहीत्वा च तन्मुखं विदारयन्ति तस्माज्जि-
ह्वामपकर्षयन्ति । सा च जिह्वा कर्मवशात्पञ्चयोजनशतप्रमाणा भवति । तस्य मृषावाद-
10 स्य[ब]लेन[42 b]तस्याश्च सहनिर्गमनकाले ते यमपुरुषा भूमावानाहयन्ति[3] प्रदीप्तायोमय्यां ।
कर्मकृतं च हलसहस्रं प्रादुर्भवति प्रदीप्ताग्रसंयुक्तं बलवद्भिर्बलीवर्दैस्तदस्यान्तर्गतं जिह्वायां
वहति । तत्र पूयरुधिरकृमिश्राविण्यो नद्यः प्रवहन्ति ॥ पे ॥ सा च जिह्वा तथा सुकुमा-
रा यथा देवानामक्षि[4] ॥ यावत्स वेदनातस्तनति[5] क्रन्दति विक्रोशति न चास्य तद्दुःखं क-
श्चिदपनयतीति विस्तरः। तस्यैवं प्र[चण्ड][6]म्वेदनामनुभवतो ऽनेकानि वर्षशतसहस्राणि सा
15 च जिह्वा कृष्यते । सा कथंचित्तस्य नारकस्य मुखे प्रविशति । स भयविह्वलवदनो येन वा
तेन वा निःपलायते ऽङ्गारकर्षूषु[7] दह्यमानो निमज्जन् । तस्यैवं दुःखार्त्तस्याशरणस्यापरा-

1) So MS. ? correct to °*kīyam*.

2) *Ramādi-strīdoshā vācyāḥ* marg.

3) °*nehay*°. MS.

4) *akshiḥ* MS.

5) *tan* is a rare Vedic root, elsewhere of the 4th (-ya) conj.; cf. however *stanati*.

6) The partially lost word is represented by the Tib. དྲག་པོ (50.a,3). Cf. p. 69.1.

7) °*shūsu* MS.



यणस्य पुनरपि यमपुरुषाः[1] प्रादुर्भवन्ति मुद्गरासिपाणयः । ते तं पुरुषं मस्तकात्प्रभृति या-
वत्पादौ चूर्णयन्तीत्यादि ॥

पैशुन्यविपाकस्तु यथैव मृषावादस्य त्रीणि योजनशतानि जिह्वेति विशेषस्तु । तां य-
मपुरुषा निस्त्रिंशानादाय प्रदीप्तधारान् जिह्वां निकृन्तन्ति । जम्बुकैश्चान्यस्मिन् प्रदेशे भ-
क्ष्यते । परमकटुकां वेदनां प्रतिवेदयते स क्रन्दति विक्रोशत्यव्यक्ताक्षरं जिह्वाविरहित 5
इत्यादि ॥

पारुष्यविपाकमाह । ते तां जिह्वामास्यं विदार्य गृह्णन्ति । गृहीत्वा निशितधारैः[2] शस्त्रै-
श्छित्त्वा तस्य भूय एव खादनीयार्थेन मुखे प्रक्षिपन्ति । स च जिघत्सार्दितः क्षुत्क्षामवदनः
स्वरुधिरलालापरिस्रुतां तामेव स्वजिह्वां भक्षयति । सा च जिह्वा छिन्ना पुनरपि संजायते
कर्मवशात् । अथ स भूमौ वेदनार्त्तः परि[43 a]वर्तते विचेष्टते क्रन्दते । तस्यैवं वेदना- 10
र्त्तस्य परिवृत्तनयनतारकस्य दुष्खार्त्तस्य दीनस्यासहायस्यैकाकिनः स्वकृतमुपभुञ्जा-
नस्य यमपुरुषा अनुशासनीगाथां भाषन्ते ॥

जिह्वाधनोर्विनिर्मुक्तस्तीक्ष्णो वाग्विशिखस्त्वया ।
पारुष्यमिति यद्दृष्टं तस्यैतत्फलमागतम् ॥ इति विस्तरः ॥

संभिन्नप्रलाप[3]विपाकमाह ॥ तस्य तत्प्रज्वलितं ताम्रद्रवलोहितं जिह्वां दहति । जिह्वां 15
दग्ध्वा कण्ठं दहति । कण्ठं दग्ध्वा हृदयं दहति हृदयं दग्ध्वान्त्राणि दहति । तान्यपि
दग्ध्वा पक्काशयं दहति । पक्काशयमपि दग्ध्वाधोभागेन निर्गच्छति ॥ यमपुरुषा गाथा-
माहुः ।

1) Cf. Feer, l. c. p. 205.

2) *niçitairddhā*° MS.

3) Tib. ཚིག་བཀྱལ་བ (51.b.3) Pali *samphappalāpa* cf. Dh.-saṃgr. § 56 and R. Morris in *Academy* 25 Feb. 1888.

पूर्वोत्तराबद्धपदं निरर्थकमसंगतम् ।
अबद्धं यत्त्वया प्रोक्तं तस्यैतत्फलमागतं ॥
यानसत्यवती नित्यं न चाध्ययनतत्परा ।
न सा जिह्वा बुधैर्दृष्टा केवलं मांसखण्डिका ' इति विस्तरः ॥

अभिध्या[1]विपाकमाह । अथ पश्यति रिक्तं तुच्छमसारकं कर्मकृतं बहुद्रविणं परपरिगृहीतं तस्य कर्मचोदितव्यामोहितस्यैवं भवति । ममेदं स्यादिति । ततः स नारकस्तेनैव धावति येन तद्द्रव्यं । तस्याभिध्याख्यमानसस्याकुशलस्यासेवितभावितबहुलीकृतस्य तत्फलं यदसौ नरके विपरीतं पश्यति । तस्यैवं पश्यतो ऽभिध्याबहुलस्य हस्ते शस्त्रं प्रादुर्भवति स तेन धावति । तेषामप्यन्येषां नारकाणां हस्ते शस्त्राणि प्रादुर्भवन्ति । स तैः सह शस्त्रेण युध्यते यावत्तथा कर्त्यते यथा सर्षप[2]फलमात्रमपि न भवति मांसमस्य शरीरे तथास्थिकङ्कालावशेषः क्रियते ॥ पे ॥ परेषां सम्प- -[3][43 b]मम स्यादिति चिन्तितं । तस्याभिध्यासमुत्थस्य विषस्य फलमागतमिति ॥

व्यापादफलमाह । कर्ममयाः सिंहव्याघ्रसर्पाः क्रोधाभिभूताः पुरतस्तिष्ठन्ति । एतेभ्यो भयभीतो येन वा तेन वा निःपलायते ' स कथं शक्नोति पलायितुमशुभस्य कर्मणः । स तैर्गृह्यते । गृहीत्वा च पूर्वं तावन्मस्तकाद्दुह्यते यावत्पार्श्वतः सर्पैर्विषदंष्ट्रैः संदश्य संदश्य भक्ष्यते । व्याघ्रैरपि पृष्ठतो भक्ष्यते । पादावपि वह्निना दा[4][ह्येते]स यमपुरुषैर्दूरादिषुभिर्विध्यत इति विस्तरः ॥

1) Hitherto in lexx. only: but *abhidhyālu* 'covetous' occurs in Divy. 302. 24 (supra cit.), for which see the form below, *abhidhyākhya*.

2) *çarshapa*° MS.

3) Three aksharas lost. From the Tib. འབྱོར་པ (52.a.2) supply *sampad* or the like.

4) Obliterated in MS., but supplied from Tib. (52.a.4) རྐང་པ་ནི་མེས་བསྲེགས



मिथ्यादृष्टिफलं पनुरपरिमितं । पाठस्तु संक्षिप्यते । शस्त्रवर्षतोमरवज्रवर्षाशनिपाषाणवर्षं हन्यते ' एकादशभिरर्चिस्कन्धैः क्षुत्पिपासाग्निना च मुखनिर्गतेन निरन्तरं दह्यत इति ॥ काममूलाश्च सर्वानर्था इति तेभ्य एवोद्वेजितव्यं । यथात्रैवाह । अस्त्यग्निकुण्डो नाम नरकः । तत्र कतरेण कर्मणा सत्त्वा उपपद्यन्ते । येनाश्रमणेन श्रमणप्रतिज्ञेन मातृग्रामस्य नृत्तगीतस्याभरणानां वा शब्दं श्रुत्वायोनिशेन मनस्कारेणाक्षिप्तबुद्धिना तच्छ्रुत्वा हसितलडितक्रीडितान्यशुचि[1] मुक्तं ॥ पे ॥ तत्र ते नारका अयोवर्षेण सर्वाङ्गप्रत्यङ्गशश्चूर्ण्यन्ते ऽङ्गारवर्षेण च पच्यन्ते दह्यन्त इत्यादि । एवं पौराणकामास्वादनस्मरणात्पदुमो[2] नाम नरकः पठ्यते स्वप्नान्तभूतस्मरणाच्च । तत्र ते नारकाः कुम्भिषु[3] पच्यन्ते । ते द्रोणिष्वयोमयैर्मुषलैर्हन्यन्त इति विस्तरः ॥

एवमप्सरसः प्रार्थनया ब्रह्मचर्यपरिणामनान्महापदुमो[4] नाम नरक उक्तः । तत्र क्षार[5]नदीतरङ्गिणी नाम प्रवहति । तस्यां नद्यां यान्यस्थीनि ते पाषाणाः । यच्छे[44 a]वालं ते केशाः । यः पङ्कस्तन्मांसं । या आपः तत्क्वथितं ताम्रं । ये मत्स्यास्ते नारका इत्यादि ॥ एवं पुरुषस्य पुरुषेण सह मैथुनविप्रतिपत्तेः अप्रमेया अकारणा विशेषाः पठ्यन्ते । एवं शिशुभिः सह विप्रतिपत्तेः क्षारनद्यामुह्यमानान्दारकान्पश्यति ' ते तं विलपन्ति ' स तां नदीमवगाहते । तेषु बालकेषु तीव्रस्नेहप्रतिबन्धशोकदुःखवेगात् । एवं गोवडवाजैडकादिषु प्रकृतिसावद्यः काममिथ्याचारः खरतरविपाकः पठ्यते । तासामेव गोवडवादीनां तप्तायोमयीनां अकुशलनिर्मितानां योनिमार्गेण स तिर्यक्कामसेवी प्रविशति ' स तासा-

1) *Çukram* marg.

2) A quasi-Pali form; cf. Suttanipāta p. 124.8. Other authorities (Feer, J. As. 8. XX. p. 216) make Paduma a cold hell.

3) So MS. Correct *kumbheshu* or °*īshu*? The Brahmans have a *Kumbhipāka*-hell.

4) Cf. Dh.-s. § 122.

5) Name of a *sāgara* in Dh.-s. § 126.

मुदरे प्रदीप्ताङ्गारनिकरपरिपूर्णे स्विद्यते पच्यते बहूनि वर्षशतसहस्राणीति विस्तरेण द्रष्टव्यम्॥

एवमन्यनाशितास्वपि भिक्षुणीषु विप्रतिपन्नानां महानरकपातनाः पठ्यन्ते। एवं स्वस्त्रीष्वप्ययोनिमार्गेण गच्छतः' एवं प्रसह्यानीतास्वपि परस्त्रीषु लब्धासु च कन्यासु।
5 एवमुपवासस्थासु एवं गुरूणां पत्नीषु ज्ञातिशब्दमानितासु च विप्रतिपत्तेः तीव्राश्चापरिमाणाश्च महानरकपातनाः पठ्यन्ते॥

सप्तमैथुनसंयुक्तसूत्रेऽप्याह[1]। इह ब्राह्मण एकत्यो ब्रह्मचारिणमात्मानं प्रतिजानीते' स नेहैव मातृग्रामेण सार्द्धं द्वयं समापद्यते ऽपि तु मातृग्रामं चक्षुषा रूपं निध्यायन् पश्यति। स तदा स्वादयति अध्यवस्यति अध्यवसाय तिष्ठति। अयमुच्यते ब्राह्मण ब्रह्मचारी
10 संयुक्तो मैथुनेन धर्मेण न विसंयुक्तः। अपरिशुद्धं ब्रह्मचर्यं चरति॥ एवं मातृग्रामेण सार्द्धं संक्रीडतः संकिलिकिलायमानस्य [44 b] आस्वादयतः अपरिशुद्धं ब्रह्मचर्यमुक्तम्। एवं मातृग्रामापस्थानमास्वादयतः। एवं तिरःकुड्यगतस्य[2] तिरोडुष्यगतस्य[3] वा मातृग्रामस्य नृत्तगीतादिशब्दमास्वादयतो मैथुनसंयोगमित्युक्तम्। एवं पञ्चकामगुणसमर्पितं परमवलोक्यास्वादयतः॥ एवं देवादिस्थानेषु ब्रह्मचर्यपरिणामनात्संयुक्तो मैथुनेन धर्मेण न विसं-
15 युक्त इति॥

यतश्चैते कामा एवं स्मरणप्रार्थनाविषयमपि गता एवमनर्थकरास्तेनैव कामापवादकसूत्रे[4]ऽभिहितम्। निवारय भिक्षो चित्तं कामेभ्यः। सभयश्चैष मार्गः सप्रतिभयः सकण्टकः सगहनः उन्मार्गः कुमार्गो वेदनापथः' असत्पुरुषसंसेवितः। नैष मार्गः सत्पुरुषसंसेवितः' न त्वमेवं चिन्तयसि' कस्मात् अल्पास्वादाः कामा उक्ता भगवता। बहुदुःखबहूप-

1) Not in Nanjio or K. F.

2) For the form cf. Vyutp. ap. B.R.: for the meaning the tale of Pyramus.

3) For *dūshya* (here = پردہ ?) cf. Divy. p. 614, note 14.

4) Not in Nanjio or KF.



द्रवा बहूपायासा। आदीनवोऽत्र भूयान्। रोगो भिक्षवः कामा गण्डः शल्यमघमघमूलमामिषवडिसं मृत्युरनित्याः कामास्तुच्छाः मृषामोषधर्मिणः स्वप्नोपमाः कामाः। किमप्येते बालोल्लापनाः॥ पे॥ यथा मृगाणां बन्धनाय कूटं द्विजानां बन्धनाय जालं। मत्स्यानां बन्धनाय कुपिनं[1]' मर्कटानां बन्धनाय लेयः[2] पतङ्गानां बन्धनायाग्निस्कन्धः[3]। एवं कामाः॥
पे॥ कामपर्येषणां चरतो दीर्घरात्रं सिंहानां मुखे परिवर्तितस्यान्तो न प्रज्ञायते। याव- 5
द्गोघातकानां गवासनानां मुखे परिवर्तितस्यान्तो न प्रज्ञायते। यावन्मण्डूकानां सतां सर्पाणां मुखे परिवर्तितस्यान्तो न प्रज्ञायते। दीर्घरात्रं कामान् प्रतिसेवमानानां चोरा इति कृत्वा गृहीतानां शिरश्छिन्नानामन्तो न प्रज्ञायते। पा[45 a]रदारिकाः पारिपन्थिका ग्रामघातका जनपदघातका यावद्ग्रन्थिमोचका इति कृत्वा गृहीतानां शिरश्छिन्नानामन्तो न प्रज्ञायते।
दुःखं तीव्रं खरं कटुकमनुभूतं रुधिरं प्रस्यन्दितं प्रघरितं यच्चतुर्षु महासमुद्रेषूदकात्प्रभूत- 10
तरं॥ पे॥ कायो ह्ययं बह्वादीनवः। अस्थिसंघातः स्नायुसंबद्धो मांसेनानुलिप्तः चर्मणा पर्यवनद्धः छव्या प्रतिच्छन्नः छिद्रविच्छिद्रः[4] कृमिसंघनिषेवितः सत्वानामनर्थकः क्लेशकर्मणां वस्तु॥ अस्मिन्काये विविधा आबाधा उत्पद्यन्ते। तद्यथा चक्षूरोगः श्रोत्ररोगो यावदर्शांसि पिटको भगन्दरः॥ पे॥ कायिकाः सन्तापाः कायिकं दुःखं। कायस्य जीर्णता भग्नता कुब्जता। खालित्यं पालित्यं वलिप्रचुरता। इन्द्रियाणां परिपाकः परिभेदः 15

1) The form is new: the meaning 'net' assigned to the by-form *kupinī* in Çabdak. is confirmed by the context, and by the Tib. རོལ

2) Tib. རྙོད 'snare'. Of the form in the text (which may also be read *neyaḥ*) I find no trace in lexx.

3) Tib. (53 b. 6) ཕྱེམ་ལེབ་སྲོང་བའི་མེ་འི་དུད་པོ 'smoke of fire . . for moths', but *pataṅga* (as B.R. show) specially connotes the meaning of a moth that burns itself (πυραύστης) so that some sort of naked flame must be meant: cf. Divy. 444.5 (inf.) and note at p. 709.

4) Not in lexx: but cf. Pali *vicchiddaka*.

संस्काराणां पुराणीभावो जर्जरीभावः। यावन्नार्हस्यैवमुद्धरन्तं प्रघरन्तं जुगुप्सनीयं कायं प्रतिषेवितुं ॥ पे ॥ का तव भिक्षो कामाशान्तिः। कश्च त्वां प्रलोभयति। कथं च त्वं प्राहितो मूर्छितो ऽध्यवसितो ऽध्यवसानमापन्नः। यदाहं परिनिर्वृतो भवामि ' सद्धर्मश्चान्तर्हितो भवति ' त्वं च कामान्प्रतिसेव्य विनिपातगतो भविष्यसि। कदा जरामरणादात्मानं परिमोचयिष्यसि ॥ अलं भिक्षो निवारय चित्तं कामेभ्यः। अकालः कामपर्येषणायाः ' कालोऽयं धर्मपर्येषणाया इति ॥

उग्रदत्तपरिपृच्छायामप्याह[1]। तेन काममिथ्याचारात्प्रतिविरतेन भवितव्यं स्वदारसंतुष्टेन परदारानभिलाषिणारक्तनेत्रप्रेक्षिणा निर्विषमनसा ' एकान्तदुःखाः कामा ' इत्यभीक्ष्णं मनसिकारप्रयुक्तेन। यदाप्यस्य स्वदारेषु का[45 b]मवितर्क उत्पद्येत ' तदापि तेन स्वदारेष्वशुभानुदर्शिना उत्त्रस्तमनसा ' क्लेशवशतया कामाः प्रतिसेवितव्याः ' न त्वध्यवसानविनिबद्धेन नित्यमनित्यानात्माशुचिसंज्ञिना। एवं चानेन स्मृतिरुपस्थाप्या। तथाहं करिष्यामि यथा संकल्पैरपि कामान्न परिभोक्ष्ये ' कः पुनर्वादो द्वीन्द्रियसमापत्त्या वानङ्गविज्ञप्त्या वेति ॥

पुनरत्रैवाह ' बोधिसत्त्वेन स्वभार्याया अन्तिके तिस्रः संज्ञा उत्पादयितव्याः। कतमास्तिस्रः। रतिक्रीडासहायिकैषा नैषा परलोकसहायिका। अन्नपानसहायिकैषा नैषा कर्मविपाकानुभवनसहायिका। सुखसहायिकैषा नैषा दुःखसहायिका ॥ यावदपरास्तिस्रः। शीलान्तरायसंज्ञा ध्यानान्तरायसंज्ञा प्रज्ञान्तरायसंज्ञा ॥ अपरास्तिस्रः। चोरसंज्ञा बधकसंज्ञा नरकपालसंज्ञा इति ॥

चन्द्रोत्तरादारिकापरिपृच्छायामप्युक्तं[2]। अथ चन्द्रोत्तरा दारिका समनन्तरं[3] प्रधावन्तं तं

1) Cf. f. 24*a*, supra and *Ugraparipr*° at 8*a*.

2) A Candrottarādārikā-vyākaraṇa is given in Nanjio, 441 (tr. A.D. 591) K.F. p. 258.

3) °*tara*° MS.



महान्तं जनकायं दृष्ट्वा तस्यां वेलायां विहायसान्तरीक्षे तालमात्रमभ्युद्गम्य स्थित्वा च तं महान्तं जनकायं गाथाभिरध्यभाषत ॥

[1] कायं ममेतद्यमिमं मनोज्ञं सुवर्णवर्णं ज्वलनप्रकाशम्।
न रक्तचित्तस्य हि मानुषस्य प्रजायते शोभनकं शरीरम् ॥
ये त्वग्निकर्षूपमसंप्रदीप्तान् त्यजन्ति कामान्विषयेष्वगृद्धाः।
षडिन्द्रियैः संवरसंवृताश्च ये ब्रह्मचर्यं च चरन्ति शुद्धम् ॥
दृष्ट्वा च दारान् हि परस्य ये वै कुर्वन्ति माताभगिनीति संज्ञां।
प्रासादिकास्ते हि सुदर्शनीया भवन्ति नित्यं परमं मनोज्ञाः ॥
स्फुटामिमां वेत्थ[2] पुरीं समन्ताद्ध यो रोमकूपान्मम चातिगन्धः।
न रागचित्तेन मयार्जितोऽयम्[46 a]फलं तु दानस्य दमस्य चेदम् ॥
न मे समुत्पद्यति रागचित्तं मा वीतरागासु जनीष्व रागं।
साक्षी ममायं पुरतो मुनीन्द्रः सत्यं यथा वेद्मि न जातु मिथ्या ॥
यूयं च पूर्वं पितरो ममास[3] ' अहं च युष्माकमभूज्जनित्री।
भ्राता स्वसा चापि पिता बभूव को रागचित्तं जनयेज्जनन्यां ॥
प्रघातिताः प्राक् च ममाथ सर्वे ' अहं विशस्ता च पुरा भवद्भिः।
सर्वे अमित्रा वधकाः परस्य[4] ' कथं तु वा जायति रागचित्तम् ॥
न रूपवन्तो हि भवन्ति रागात् ' न रक्तचित्ताः सुगतिं व्रजन्ति।
न निर्वृतिं यान्ति च रक्तचित्ता रागो हि तस्मात्परिवर्जनीयः ॥

1) Metre: *Ākhyānakī*.

2) MS. apparently *vethe*.

3) There is a fracture in the MS.; but apparently the reading is the form in the text. In the previous line the MS. reads *visastā*.

4) °*rasparaṃ* or °*yaraṃ* MS.

कामस्य हेतोर्निरयं पतन्ति ' प्रेतास्तिरश्चोऽथ[1] भवन्ति रागात् ।
कुम्भाण्डयक्षा असुराः पिशाचा भवन्ति ये रागपरीत्तचित्ताः ॥
काणाश्च खञ्जाश्च विजिह्वकाश्च ' विरूपकाश्चैव भवन्ति रागात् ।
भवन्ति नानाविधदोषभाजाश्चरन्ति ये कामचरीं जघन्याम् ॥
यच्चक्रवर्तित्वमवाप्नुवन्ति ' भवन्ति शक्रास्त्रिदशेश्वराश्च ।
ब्रह्माण ईशावशवर्त्तिनश्च तद्ब्रह्मचर्यं विपुलं चरित्वा ॥
जात्यन्धभावा वधिरा विसंज्ञा । श्वशूकरोष्ट्राः खरवानराश्च ।
हस्त्यश्वगोव्याघ्रपतङ्गमक्षाः[2] भवन्ति नित्यं खलु कामलोलाः ।
क्षितीश्वराश्चैव भवन्त्युदग्राः सुश्रेष्ठिनो वै गृहपत्यमात्याः ।
सुखसौमनस्येन च यान्ति वृद्धिं ये ब्रह्मचर्यं विपुलं चरन्ति ॥
कभल्लितापानथ धूमगारान्[3] बन्धांस्तथा ताडनतर्ज्जनांश्च ।
छेदं शिरः कर्णकरान्तिनासाः[4] । पादस्य चार्च्छन्ति हि कामदासा । इति ॥
॥ [5] उदयनवत्सराजपरिपृच्छायां च विवर्णिताः कामाः ॥ ॥
[6] दृष्ट्वा व्रणं धावति मक्षिका यथा[7] ।
दृष्ट्वाशुचिं धावति गर्दभो यथा ।
श्वानश्च शूना [46 b] इव मांसकारणात् ।
तथैव धावन्त्यबुधाः स्त्रिये रताः ॥

---

1) So the MS. for *tiryañco* (not metrically possible); should we read the fem. ***tiraçcyo?***

2) *°kshikāḥ* (contra metrum) MS.

3) *Dhūparāgān* corrected in a much later hand to *dhūmagārān* MS. དུ་བས་བདུག་ Tib. Perhaps some torture by suffocation is intended. On *kabhalli* (?) see Addenda.

4) *°sā*, MS.

5) Translated into Chinese before A.D. 316; Nanjio, 38. K.F. 217.

6) Metre: Upajāti. *Vanaṃ* MS.

7) *°makshikeva* MS.



अविद्यापिधिता बालास्तमःस्कन्धने आवृताः[1] ।
स्त्रीषु सक्तास्तथा मूढा अमेध्य इव वायसाः ॥
मारस्य गोचरो ह्येष प्रस्थिता येन दुर्गतिः ।
आस्वादसंज्ञिनो गृद्धा मीढस्थाने यथा क्रिमिः ॥
मीढकुम्भो यथा चित्रो यत्र यत्रैव दृश्यते ।
पूर्णो मूत्रपुरीषेण दृतिर्वा वातपूरिता ॥
सिङ्घाणककफलालाः श्लेष्माणि[2] क्लिन्नमस्तकाः ।
दौर्गन्ध्यं स्रवते कायाद्बालानां[3] तद्यथा मधु ॥
अस्थिपूर्णं मुखद्वारं मांसचर्मादिभिश्चितं ।
गण्डभूतो ह्ययं कायः कुत्सितो ह्यामगन्धिकः ॥
नानाप्राणिभिः संपूर्णो मुखगण्डो यथा भवेत् ।
एवमेव ह्ययं कायो विष्ठाद्यशुचिभाजनम् ॥
अन्त्रान्त्राकुलं[4] ह्युदरं सयकृत्पुप्फुषाकुलं ।
वृक्कौ विलोहितं पित्तं मस्तलुङ्गास्थिमज्जकम् ॥
[5] अशीतिं क्रिमिकुलसहस्राणि यानि तिष्ठन्ति अन्तरे ।
अथ बाला न पश्यन्ति मोहजालेन आवृताः ॥

---

1) *°tamask°* MS.

2) *shmāṇi* MS.

3) *bālā* is given in lexx. as the name of the jasmine and several other flowers.

4) Thus I have emended the MS. reading: *antrāṇy antraguṇam hy°*. The Tib. (56.a.3) has simply; ལྟོ་ནི་གཉེ་མས་གང་བ་སྟེ 'The belly is full of the twisted gut'. In the next line, *vṛikkā* MS. *Vilohita* for ***lohita*** (ཁྲག).

5) This word spoils the metre, but I preserve it as the Tib. has བརྒྱད་ཁྲི «8 lakhs».

नवव्रणमुखैः प्रस्रवन्त्यशुचिं पूतिगन्धिकम्।
बाला निमित्तं गृह्णन्ति वचने दर्शनेऽपि च॥
उक्ताः पश्चान्न जानन्ति यो देशः सर्वकुत्सितः।
उच्चारगोचरा बालाः खेटसिङ्घाणभोजिनः॥
जुगुप्सनीये रज्यन्ते व्रणं दृष्ट्वेव मक्षिकाः।
कक्षास्वाघरते[1] स्वेदो गन्धो वायति कुत्सितः॥
कुर्वन्ति दुष्कृतं कर्म येन गच्छन्ति दुर्गतिम्।
हीनान्कामान्निषेवन्तो हीनान्धर्मान्निषेव्य च॥
गत्वा अवीचिं दुष्प्रज्ञाः दुःखां विन्दन्ति वेदनां।
उच्चार इव दुर्गन्धाः स्त्रियो बुद्धैः प्रकीर्तिताः॥
तस्माद्धीनस्य हीनाभिः स्त्रीभिर्भवति सङ्गतिः।
उच्चारभस्त्रां यो गृह्यबालावासं निगच्छति॥
यादृशं कुरुते कर्म तादृशं लभते फलम्॥
तथात्रै[47 a]वाह।

तदेवंरूपैर्दुःखपर्येषितैर्भोगैः स्वस्त्रीविकार्थमुपसंहृतैर्न प्रभवन्ति श्रमणब्राह्मणेभ्यो दानं दातुं कृपणवनीपकयाचकेभ्योऽवशीकृताः स्त्रीभिः स्त्रीनिर्जिताः स्त्रीनिगृहीताः स्त्रीदासाः। तेनैव स्त्रीप्रेम्णा तस्या एव पोषणाय न शक्नुवन्ति दानं दातुं शीलं च समादातुं' स तत्र रक्तः समानः स्त्रीपरिभाषितानि सहते तर्जनावलोकननिर्भर्त्सनामपि[2] सहते। स मातृग्रामेण तर्जितः पुरुषः संसीदति विषीदति मुखं चास्या अवलोकयति' कामहेतोः कामनिदानं च वशगता भवति' अयं महाराज कामलोलुपस्य पुरुषस्योच्चारसुखपरमस्या-शुचौ रतस्यासंप्रजन्याचारिणो दोषः॥ पे॥

1) A new conjugational form. Tib. འཛེག
2) °*bhatsa*° MS.



श्रुत्वेदृशं तु संवेगं न तेषां भवति[1] निर्वृतिः।
भूयः कुर्वन्ति संसर्गं स्त्रीभिः सार्द्धं प्रमोदिताः॥
दुःखकामान्निषेवन्ते भाषन्ते च जुगुप्सिताः॥
धर्मं श्रुत्वार्थसंमूढाः भाषन्ते च सुभाषितं।
स्त्रीगतं चास्य तच्चित्तं बिडालस्येव मूषिके॥
मुहूर्तं भवति[1] संवेगः श्रुत्वाथ जिनभाषितं।
पुनः कुप्यति रागोऽस्य विषहालाहलं यथा॥
सूकरस्येव उच्चासो मुहूर्तमनुवर्त्तते।
दृष्ट्वा वै अथ उच्चारं गृद्धतां जनयत्यसौ॥
एवं सुखार्थिनो बालाः प्रहाय जिनशासनं।
हीनान्कामान्निषेवन्ते येन गच्छन्ति दुर्गतिम्॥
रक्ताः प्रमत्ताः कामेषु कृत्वा कर्म सुपापकम्।
शीलवन्तां विसंवाद्य पश्चाद्गच्छन्ति दुर्गतिम्॥
यस्येदृशं धर्मनयं विदित्वा।
स्त्रीषु प्रसादः पुरुषस्य नो भवेत्[2]।
विशोधितः स्वर्गपथोऽस्य नित्यम्।
न दुर्लभा तस्य वराग्रबोधिः॥
लब्धा क्षणं हि स प्रज्ञो धर्मं श्रुत्वा च ईदृशम्।
सर्वान्कामान्विवर्ज्येह प्रव्रज्यां निष्क्रमेद्बुध' इति॥

प्रशान्तवि[47 b]निश्चयप्रातिहार्यसूत्रेऽप्यपरो[3] ऽनर्थ उक्तः॥ यः कश्चिन्मञ्जुश्रीः कु-

1) Scan as a dissyllable or correct to *bhoti*.
2) A monosyllable; compare the similar contractions above, 82. 1, 83. 1. 6.
3) See p. 16.2 above.

लपत्रो वा कुलदुहिता वा जाम्बूद्वीपकान्सर्वसत्त्वाञ्जीविताद्व्यपरोप्य सर्वस्वं हरेत् ' यो वा ऽन्यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता बोधिसत्त्वस्यैककुशलचित्तस्यान्तरायं कुर्यादन्तशस्तिर्यग्योनिगतस्याप्येकालोपदानसहगतस्य कुशलमूलस्यान्तरायं कुर्यादयं ततो ऽसंख्येयतरं पापं प्रसवति। तत्कस्य हेतोः। बुद्धोत्पादसंजनकानां सकुशलमूलानामन्तरायः स्थितो भवति। यः कश्चिन्मञ्जुश्रीः परकुलेषु बोधिसत्त्वस्येर्ष्यामात्सर्यं कुर्यात्तस्य तस्मिन्समये ततोनिदानं त्रीणि भयानि प्रतिकाङ्क्षितव्यानि। कतमानि त्रीणि। नरकोपपत्तिभयं जात्यन्धभयं प्रत्यन्तजन्मोपपत्तिभयं चेति(1)॥

पुनराह॥

यस्तस्य कुर्यात्पुरुषो ऽप्रियं वा भूतं ह्यभूतं च वदेदवर्णं।
परुषं वदेत्क्रुद्धमनापि यस्तं क्षोभं च कुर्यात्पुनरस्य यो ऽपि॥
आत्मभावेन महता नरकेषु स दुर्मतिः।
उत्पद्यते विपन्नात्मा दुःखां स(2) वेत्ति वेदनाम्॥
योजनानां शतं पञ्च जायते ऽस्य समुच्छ्रयः।
कोटीपरिवृतः शश्वद् भक्ष्यते च शुना भृशम्॥
पञ्चमूर्द्धसहस्राणि भवत्यस्यापवादिनः।
जिह्वानां च शताः(3) पञ्च भवन्त्येकैकमूर्द्धनि॥
एकैकस्यां च जिह्वायां शताः पञ्च ज्वलन्मुखाः।
लाङ्गलानां वहन्त्यस्य वाचं भाषित्व पापिकाम्।

1) Cf. Dh.-s. § 134 and M. Vyutp. 120: *janmo°* must accordingly be corrected, probably to *jano°* or *janapado°*. Tib. ཡུལ་མཐའ

2) °*so* MS.

3) *çata*, masc: pl. ('selten und immer metrisch'-Böhtl.[2]) I find no instances quoted with the noun in gen. pl.



प्रतापने(1) च पच्यन्ते तीव्रदुःखानलाकुले।
उत्पीडां बोधिसत्त्वानां ये कुर्वन्ति असङ्गताः॥
तिर्यग्योनिः सनरका न तेषां भोति दुर्लभा।
कल्पकोटिसहस्राणि शतानि नियुतानि च॥
ततः च्युता घोरविषा भोन्ति सर्पाः सुदारुणाः।
क्षुत्पिपा[48 a]साभिभूताश्च कुर्वते कर्म दारुणम्॥
लब्ध्वापि भोजनपानं तृप्तिं नैवाधिगच्छति।
ततश्च्युतो मनुष्येषु स(2)— यद्युपपद्यते॥
जात्यन्धो भोति दुर्मेधा दुष्टचेता असंवृतः।
आर्यानाराधिकां(3) वाचमुक्त्वा दुर्भाषितं नरः॥
मनुष्येभ्यश्च्युतश्चापि पुनर्गच्छति दुर्गतिम्।
कल्पकोटिसहस्रेषु जातबुद्धं न पश्यति॥

पुनरत्रैवाह। यावन्ति मञ्जुश्रीर्बोधिसत्त्वो बोधिसत्त्वस्यान्तिके प्रतिघचित्तान्युत्पादयत्यवमन्यनाचित्तानि वा ' तावतः कल्पान् सन्नाहः सन्नद्धव्यो वस्तव्यं मया महानरकेष्विति ' न मञ्जुश्रीर्बोधिसत्त्वो ऽन्येन कर्मणा शक्यो विनिपातयितुमन्यत्र बोधिसत्त्वापवादादेव। तद्यथा मञ्जुश्रीर्वज्रमणिरत्नं नान्येन काष्ठेन लोष्ठेन वा शक्यं भेत्तुमन्यत्र वज्राद् ' एवमेव मञ्जुश्रीर्बोधिसत्त्वो ऽन्येन कर्मणा न शक्यो विनिपातयितुमन्यत्र बोधिसत्त्वापवादादेवेति॥ ॥

1) Name of a hell: cf. Feer, J. As. 1892 p. 195.

2) A syllable is wanting; qu. supply a word meaning 'sickness' (Tib. ནད)?

3) The exact form is not certain owing to a fracture in the MS., but the general sense, failing in honour to whom honour is due, is clear; cf. the Tib. འཕགས་པ་མཆེས་པར་མི་བྱེད་པ (57 b. 6).

॥ आर्यश्रद्धाबलाधानावतारमुद्रासूत्रे[1]ऽप्याह ॥ ॥ यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वान्धकारेषु बन्धने क्रुद्धः प्रवेशयेत्। यश्चान्यः कुलपुत्रो वा कुलदुहिता वा बोधिसत्त्वे क्रुद्धः पराङ्मुखं तिष्ठेत् ' नैनं दुरात्मानं पश्यामीत्ययं ततो ऽसंख्येयतरं पापं प्रसवति ॥ अत्रैवोक्तं। यः कश्चिन्मञ्जुश्रीः सर्वजाम्बूद्वीपकानां सत्त्वानां सर्वस्वं हरेद्यश्चान्यो यादृशं तादृशं बोधिसत्त्वं गर्हेदयं ततो ऽसंख्येयतरं पापं प्रसवति ॥ अत्रैवोक्तं। यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा गङ्गानदीवालिकासमान्स्तूपान्विनिपातयेद्दहेत वा। यश्चान्यः कुलपुत्रो वा कुलदुहिता वा महा[48 b]यानाधिमुक्तस्य बोधिसत्त्वस्य व्यापादखिलक्रोधचित्तमुत्पाद्य क्रोशयेत्परिभाषयेदयं ततो ऽसंख्येयतरं पापं प्रसवति। तत्कस्माद्धेतोः। बोधिसत्त्वनिर्याता हि बुद्धा भगवन्तो बुद्धनिर्याताश्च स्तूपाः सर्वसुखोपधानानि च सर्वदेवनिकायाश्च। बोधिसत्त्वमसत्कृत्य सर्वबुद्धा असत्कृता भवन्ति। बोधिसत्त्वं सत्कृत्य सर्वबुद्धाः सत्कृता भवन्ति। सर्वबुद्धानुत्तरया पूजया पूजयितुकामेन बोधिसत्त्वाः पूजयितव्याः ॥

एतत्पूजाविपाकश्च प्रशान्तविनिश्चयप्रातिहार्यसूत्रे[2]ऽभिहितः ॥

यस्त्वेषां कुरुते रक्षां धार्मिकीं धर्मवादिनां।
हित्वा सुदुर्गतीः[3] सर्वाः शक्रो भवति देवराट् ॥
ब्रह्मापि यामस्तुषितो वशवर्त्ती[4] पुनः पुनः।
मनुष्येषूपपन्नश्च चक्रवर्त्ती स जायते ॥

1) Nanjio, 90: KF. 260. M. Vyutp. LXV. 73.

2) V. p. 16.2 supra.

3) *sudurgati* seems not to occur, but the Tib. (58.b.3) gives it the same meaning as *durgati*, viz. 'disaster' with the special sense of 'damnation (tohell)'. *Hitvā* of course from *hā*.

4) Lalita-vistara 465 ad fin.



श्रेष्ठी गृहपतिश्चापि भवत्याढ्यो महाधनः।
प्रज्ञास्मृतिभ्यां संयुक्तः सुखितो निरुपद्रव। इति ॥

अथ कतमं बोधिसत्त्वमधिकृत्येयं कारापकारचिन्ता। पृथग्जनमेव ॥

यथोक्तं श्रद्धाबलाधानावतारमुद्रासूत्रे। यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा सर्वलोकधातुरजोपमानां सत्त्वानां दिवसे दिवसे दिव्यं शतरसमाहारं दद्याद्दिव्यानि च वस्त्राण्येवं ददद्गङ्गानदीवालिकासमान्कल्पसमुद्रान्दानं दद्यात् ' यश्चान्यः कुलपुत्रो वा कुलदुहिता वा एकस्योपासकस्यानन्यशास्तुर्दशकुशलकर्मपथसमन्वागतस्यैकदिवसमेकमाहारं दद्याद्बुद्धस्यापि भगवतः शिक्षायां शिक्षित इति समारोपं कृत्वा ' अयं ततो ऽसंख्येयतरं पुण्यं प्रसवति ॥ यः क[49 a]श्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा सर्वलोकधातुरजोपमानां दशकुशलकर्मपथसमन्वागतानां उपासकानां दिवसे दिवसे दिव्यं शतरसमाहारं दद्याद्दिव्यानि च वस्त्राण्येवं ददद्गङ्गानदीवालिकासमान्कल्पान्दद्यात् ' यश्चान्यः कलपुत्रो वा कुलदुहिता वा एकस्य भिक्षोरेकदिवसमाहारं दद्याद् ' अयं ततो ऽसंख्येयतरं पुण्यं प्रसवतीति ॥

नियतानियतावतारमुद्रासूत्रे[1]ऽप्याह। सचेन्मञ्जुश्रीर्दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वा उत्पाटिताक्षा भवेयुः परिकल्पमुपादाय ' अथ कश्चिदेव कुलपुत्रो वा कुलदुहिता वा तेषां सर्वसत्त्वानां मैत्रचित्तस्तान्यक्षीणि जनयेत् परिकल्पमुपादाय। यो वान्यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तं बोधिसत्त्वं प्रसन्नचित्तः पश्येद् ' अयं ततोऽसंख्येयतरं पुण्यं प्रसवति ॥ यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा दशसु दिक्षु सर्वसत्त्वान्बन्धनागारप्रविविष्टान् बन्धनागारान्मोचयित्वा चक्रवर्तिसुखे स्थापयेद्ब्रह्मत्वसुखे वा ' यो वान्यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तस्य प्रसन्नचित्तो दर्शनाभिलाषी भवेद्वर्णं चास्योदाहरेद् ' अयं ततोऽसंख्येयतरं पुण्यं प्रसवतीति ॥

1) See p. 7.1, above.

तथा क्षितिगर्भसूत्रेऽप्याह[1]। यः पुनर्भदन्त भगवन् क्षत्रियकल्याणो वामात्यकल्याणो
वा भटकल्याणो वा श्रमणकल्याणो वा ब्राह्मणकल्याणो वा परं रक्षत्यात्मानं रक्षति प-
रलोकं रक्षति ' भगवच्छासने पात्रभूतमपात्रभूतं वा यावन्मुण्डं काषायखण्ड[49b]प्रावृतं
परिरक्षति श्रोष्यति पूजयिष्यति श्रावककथां एवं प्रत्येकबुद्धकथां श्रोष्यति पूजयिष्यति।
महायानकथां च महायानसंप्रस्थितान् पुद्गलान् शीलवतो गुणाढ्यान् युक्तमुक्तप्रतिभानान्[2]
तैः सार्द्धं रमति क्रीडति परिपृच्छति परिप्रश्नयति[3] तेषां श्रोतव्यं कर्तव्यं मन्यते ॥ पे ॥
कियत्तं[4] भगवन् पापं क्षपयिष्यति ॥ भगवानाह। तद्यथापि नाम कुलपुत्र कश्चित्पुरुष उ-
त्पद्यते ' यः सर्वं जम्बूद्वीपं सप्तरत्नपरिपूर्णं कृत्वा तिष्ठतां बुद्धानां भगवतां दानं दद्यात्तथैव
मध्याह्नसमये तथैव सायाह्नसमये दानं दद्यादनेन पर्यायेण वर्षशतसहस्रमेवंरूपं दानं दद्यात् '
तत्किं मन्यसे कुलपुत्रापि नु स पुरुषो बहु पुण्यं प्रसवेत् ॥ आह। बहु भदन्त भगवन्स पु-
रुषः पुण्यस्कन्धं प्रसवेदप्रमेयमसंख्येयं ' न तस्य पुण्यस्कन्धस्य केनचिच्छक्यं प्रमाणमुद्ग्र-
हीतुं अन्यत्र[5] तथागतेन ॥ भगवानाह। यस्तु कुलपुत्र क्षत्रियकल्याणो वा यावद्यथा पू-
र्वोक्तं। पे। स बहुतरं पुण्यं प्रसवति। यावद्विपुलतरमप्रमाणतरमसंख्येयतरं पुण्यस्कन्धं
प्रसवति। यो मम पश्चिमायां पञ्चशत्यां[6] वर्तमानायां सद्धर्मनेत्रीं रक्षति स रक्षत्यात्मानं '
रक्षति परांश्च रक्षति परलोकं रक्षति मम शासनं श्रावकान् पात्रभूतानपात्रभूतान्वा याव-

1) See p. 13.7.

2) *muktamuktapr*° MS.; but see Divy. 329.3 et al.

3) Pali *paripañhati*: 'consider' (Ch.). No compounds of the Sk. denom. *praçnayati* have hitherto been registered.

4) Here the MS. (not the Transcript) inserts a form *saketukam* not, apparently, reproduced in the Tib. (59.b.5).

5) The instrum. as in Pali, instead of the abl. of class. Sk.

6) *pāñcāsatyām* MS; cf. Vajracchedikā VI., and Prof. Max Müller's note to his translation (S.B.E. vol. 49. pt. 2 p. 115). The correction of 'fifty' to 'five hundred' is supported by the Tib. here and below [50.a.].



न्मुण्डान् काषायवस्त्रप्रावृतानपि रक्षति। न विहेठयति। यावत्स्वकं राष्ट्रं परराष्ट्रं च व-
र्धयति ' अपायान् क्षपयति ' सुरालयं च प्रापयति चिरं चायुः पालयति ' स्वक्लेशांश्च परक्ले-
शांश्च क्षापयति[1] ' संबोधिमार्गे षट्पारमिता[50 a]श्चोपस्तम्भयति। सर्वापायाञ्जहाति। न
चिरं संसारे संसरति। नित्यं कल्याणमित्रैर्बुद्धैश्च भगवद्भिर्बोधिसत्वैश्च महासत्वैश्च सार्द्धं
समवधानगतो भवति ' सततं कल्याणमित्राविरहितो न चिरेण यथाभिप्रायेषु बुद्धक्षेत्रे-
ष्वनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥ अथ तावदेव सर्वदेवेन्द्राः सपरिवारा ' यावत्पि-
शाचेन्द्राः सपरिवारा उत्थायासनाद् येन भगवान् तेनाञ्जलिं प्रणम्यैवमाहुः। ये ते भदन्त
भगवन् एतर्ह्यनागते ऽध्वनि यावत्पश्चिमायां पञ्चशत्यां[2] क्षत्रियकल्याणा भवन्ति यावद्गृह-
पतिकल्याणाः। पे। एवं सद्धर्मरक्षका एवं त्रिरत्नवंशाव्यालोपयितारः। पे। वयमपि सर्वे स-
परिवारास्तं क्षत्रियकल्याणं यावद्गृहपतिकल्याणं दशभिराकारै रक्षिष्यामः परिपालयि-
ष्यामो वर्धयिष्यामः ॥ कतमैर्दशभिः। आयुश्चास्य वर्धयिष्यामः आयुरन्तरायं च धर्मेण नि-
वारयिष्यामः। आरोग्यं च परिवारं च धनस्कन्धं च उपभोगपरिभोगं चैश्वर्यं च यशः क-
ल्याणमित्राणि प्रज्ञासम्पदं च वर्धापयिष्यामः। एभिर्दशभिरिति विस्तरः ॥

एवमभूमिप्रविष्टेष्वेवायं विपाकविस्तरो द्रष्टव्यः ॥

अवलोकनासूत्रेऽपि[3]।

संबोधौ चित्तमुत्पाद्य हितार्थं सर्वप्राणिनां।
यः स्तूपं लोकनाथस्य करोतीह प्रदक्षिणं ॥

1) V. p. p. 59. 12 supra.

2) *pañcās*° MS. See note 6 above.

3) These stanzas occur (with considerable variants) in the second of the sūtras called Ava*lokita* in the Mahāvastu. See Senart's text II. 362. 17—18 and 369. 2—3. To this reference I was led by Prof. S. d'Oldenburg, who referred me to his art. in JRAS. for 1893 p. 340, where another quotation from this sūtra in the present work (Ch. 17) is noted. Compare also the work of the same Tib. name in K.F. 259.

इत्याद्यनुशंसविस्तरमुक्त्वाह।

यस्त्वेषां बुद्धपुत्राणां नरः कुर्वीत अप्रियं।

देवान्मनुष्यान्वर्जित्वा नरकं तस्य गोचरं॥

इति विस्तरः पूर्ववत्॥ न चात्र विशेषहेतुः कश्चिदुपदर्शयितुं शक्यत इत्यलं विक-
5 ल्पेन॥

कर्मावरणविशुद्धिसूत्रे[1] ऽप्यावरणशब्देना[2]न[50 b]र्थ उक्तः। आवरणं मञ्जुश्रीरुच्यते राग
आवरणं द्वेष आवरणं मोह आवरणं दानमावरणं शीलक्षान्तिवीर्यध्यानप्रज्ञा आवरणं।
पे। तत्कस्य हेतोः बालपृथग्जना मञ्जुश्रीर्दानं ददाना मत्सरिणामन्तिके ऽप्रसादं कुर्व-
न्ति। ते तेनाप्रसादेन प्रतिघचित्तमुत्पादयन्ति। प्रतिघखिलदोषेण महानरकेषूपपद्यन्ते।
10 शीलं रक्षन्तो दुःशीलान् कुत्सयन्ति परिभाषन्ति। ते तेषामवर्णं च भाषन्ति। ते तेषां दोषं
श्रुत्वा बहुजनस्याप्रसादं कुर्वन्ति। ते तेनाप्रसादेन दुर्गतिगामिनो भवन्ति। ते क्षान्तिं भाव-
यन्तः क्षान्तिमदेनात्मानमुत्कर्षयन्ति प्रमाद्यन्ति, वयं क्षान्तिवादिनः, इमे पुनरन्ये व्यापन्न-
चित्ताः। तेषां क्षान्तिमदनमत्तानां प्रमादमूलकानि दुःखान्युत्पद्यन्ते। ते वीर्यमारभमाणा
आत्मानमुत्कर्षयन्ति [3]परान् पंसयन्ति।[3] कुसीदा इमे भिक्षवो विहरन्त्यनभियुक्ताः श्रद्धादेयं
15 परिभुञ्जानाः, नैतेऽर्हन्ति पानीयस्थालकमपि। ते तेन वीर्यारम्भेणात्मानमुत्कर्षयन्ति परं
च पंसयन्ति, तानहं बालानिति वदामि। ते ध्यानं समापद्यमानास्तत्र ध्यानसमापत्तौ स्पृ-
हामुत्पादयन्ति। तेषामेवं भवति। वयं समाधिविहारिण, इमे ऽन्ये भिक्षवो विक्षिप्तचित्ता
विहरन्ति, कुतस्ते बुद्धा भविष्यन्तीति विस्तरः॥

सर्वधर्माप्रवृत्तिनिर्देशे[4] ऽप्याह। बोधिसत्व आपत्त्या चोदयति, दूरीभवति बोधिः, क-

---

1) Nanjio 1094 tr. before A.D. 431. K.F. 262.

2) Five *āvaraṇas* are mentioned in the Tevijja-sutta (Dīgha-n. I. xiii. 30). Cf. Rhys Davids in S.B.E. vol. XI, p. 182.

3) These words in margin a sec. manu.

4) Nanjio 163. 164 (tr. before A.D. 417) 1015; K.F. 256; M. Vyutp. LXV. 37, where as in our text the title is °dharmāpra° (not °āpr. as Nanjio & Feer). Cp. f. 4.b (p. 6.16) above, where the ā is to be restored.



र्मावरणं च परिगृह्णाति। ईर्यया[1] चोदयति, दूरीभवति बोधिः। ईर्यापथेन चोदयति दूरीभ-
वति बोधिः। सचेद्बोधिसत्वस्यान्तिके हीनसंज्ञामुत्पादयति आत्मनि चोदारसंज्ञां क्षिणोत्या-
त्मानं [51 a] कर्मावरणं च गृह्णाति। इह बोधिसत्वेन बोधिसत्वमववदतानुशासता वा
शास्तृसंज्ञामुपस्थाप्याववदितव्यो ऽनुशासितव्यः। बोधिसत्वेन बोधिसत्वस्यान्तिके न प-
रिभवचित्तमुत्पादयितव्यं। सचेदस्यापरित्यक्ता बोधिः। न देवपुत्र बोधिसत्वः क्वचिदेव कु- 5
शलमूलानि समुच्छिनत्ति, यथाद्वितीयबोधिसत्वमागम्येति। अनुत्पादितबोधिचित्ते ऽपि
तावद्बोधिर्भव्ये सत्वे ऽवमन्यना प्रतिषिद्धा। किं पुनरुदितबोधिचित्ते॥

यथोक्तं शूरङ्गमसमाधिसूत्रे।[2] तत्र दृढमते कतमदनुत्पादितबोधिचित्तव्याकरणं॥ इह
दृढमते स पुद्गलः पाञ्चगतिके[3] संसारे उपपन्नो भवति। यदि वा निरयेषु यदि वा तिर्यग्यो-
नौ यदि वा यमलोके यदि वा देवेषु यदि वा मनुष्येषु, स च पुद्गलस्तीक्ष्णेन्द्रियो भवति। 10
उदाराधिमुक्तिकः, तमेनं तथागतः प्रजानाति। अयं पुरुषपुद्गलो यावद्भिः कल्पको-
टीनियुतशतसहस्रैरनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयिष्यति॥ पे॥ इयद्भिश्चासंख्ये-
यकल्पशतसहस्रैर्बोधिमभिसंभोत्स्यते॥ पे॥ इदं दृढमते उच्यते। बोधिसत्वस्यानुत्पा-
दितबोधिचित्तव्याकरणं। अथ खल्वायुष्मान्महाकाश्यपो भगवन्तमेतदवोचत्। अद्याग्रे-
णास्माभिर्भगवन्सर्वसत्वानामन्तिके शास्तृसंज्ञोत्पादयितव्या। तत्कस्य हेतोः, न ह्यस्मा- 15
कमेतज्ज्ञानं प्रवर्त्तते, कतमस्य बोधिसत्वस्य बोधिपरिपाचकानीन्द्रियाणि संविद्यन्ते।
कतमस्य न संविद्यन्ते। ततो वयं भगवन्नजानानास्तथारूपेषु हीनसंज्ञामुत्पादयेम। तेन

---

1) Beneath this word is added a sec. manu *caryā*. This word appears to find its counterpart in the Tib. སྤྱོད་ལམ་, which however occurs in the *next* clause, where *īryāpathena* occurs in our text.

2) Supr. p. 8.19.

3) B & R. cite 'Vjutp. 90. (?)

वयं क्षपयेम ॥[1] भगवानाह। साधु साधु काश्यप सुभाषिता ते इयं वाक्। इदं च मया काश्यपार्थवशं स[51 b]म्पश्यमानेन युष्माकमेवं धर्मो देशितो ' मा भिक्षवः पुद्गलेन पुद्गलं प्रविचेतव्यं। यच्छीघ्रं[2] क्षणयति हि भिक्षवः पुद्गलः पुद्गलं प्रविचिन्वन्। अहं वा पुद्गलं प्रमिणुयां यो वा स्यान्मादृशः। एतेन काश्यप निर्देशेन बोधिसत्वेन वा श्रावकेण वा सर्वसत्वानामन्तिके शास्तृसंज्ञोत्पादयितव्या। मात्र कश्चिद्बोधिसत्वयानिकः पुद्गलो भवेत्तेन तत्रात्मा रक्षितव्य इति। यस्य तु नियतमेव बोधिप्राप्तिचिह्नमस्ति तत्र सुतरामवमन्यना रक्षितव्या ॥

यथोक्तमार्यसद्धर्मपुण्डरीकसूत्रे[3]।

इष्टामयान्[4]मृत्तिकसंचितान्वा प्रीता[5]श्च कुर्वन्ति जिनस्य स्तूपान्।
उद्दिश्य वा पांशुकराशयो पि अटवीषु दुर्गेषु च कारयन्ति ॥
सिक्तामया वा पुन कूट कृत्वा ये केचिदुद्दिश्य जिनान[6] स्तूपान्।
कुमारकाः क्रीडिषु तत्र तत्र।
ते सर्वि[7] बोधाय अभूषि लाभिनः ॥

1) Passive with active inflection (Whitney § 774) here possibly due to Pali or Prakrit influence.

2) The reading of the MS. (broken here) appears to be *yat sīdhvaṃ* or *yat sīgham*. The latter I have supposed to stand for *yat çīghram*.

3) MS. W (see p. 47, note 5 above) f. 22. a. 2. Kern, tr. p. 50.

4) The metre is generally *Ākhyānakī*: but with two irregularities common in Buddhistic poetry (1) the addition of a syllable at the end (making the metre in fact into *Vaṃçastha*). (2) the resolution of the initial long into two short syllables. Compare the frequent anapaestic beginning in English 'blank verse'.

5) *prītaḥ prak*° A.

6) So W., *jinān* corrupted from *jinānă* (cf. infra) A.

7) *cāpi* A; but see below.



यावत्[1] ॥

ये चित्रभित्तीषु करोन्ति विग्रहं[2]।
परिपूर्णगात्रांश्शतपुण्यलक्षणान्।
लिखेत्स्वयं चापि लिखापयेद्वा।
ते सर्वि बोधाय अभूषि लाभिनः ॥
ये चापि केचित्तर्हि शिक्षमाणाः।
क्रीडारतिं चापि विनोदयन्तः[3] ॥
नखेन काष्ठेन कृतासि[4] विग्रहान्।
भित्तीषु पुरुषाश्च कुमारका वा ॥
सर्वे च ते बोधि अभूषि लाभिनः ॥ पे° ॥
वादापिता झल्लरियोऽपि येही।
जलमण्डका[5] वाप्यथ मण्डका वा।
सुगतानमुद्दिश्यथ पूजनार्थं गीतं च गीतं मधुरं मनोज्ञं।
सर्वे च ते बुद्ध[6] अभूषि लोके ॥
कृत्वा च यां बहुविधधातुपूजां[7]।
किमल्पकम्पी सुगतान धातुषु।
एकं पि वादापिय वाद्यभाण्डम्।
पुष्पेण चैकेन हि पूजयित्वा।

1) = *peyyālam*, three stanzas being omitted.
2) °*hān*, W.
3) °*yanti* A.
4) °*tāçi*, W.
5) See Kern, p. 51 note 2.
6) *ca buddhā abhūshi* A.
7) *bahuvidharatna*-A; *bahu*-scanned as a monosyllable.

अनुपूर्व द्रक्ष्यन्ति[1] हि बुद्धकोट्यः ।
यैश्चा[52 a]ञ्जलिस्तत्र कृतापि स्तूपे ।
परिपूर्ण एकातलशक्तिका वा ।
ओनामितं शीर्ष भवेन्मुहूर्त्तं ।
ओनामितं[2] काय तथैकवारं ।
नमोऽस्तु बुद्धाय कृतैकवारं ।[3]
ये ह्यो तदा धातुधरेषु तेषु ।
विक्षिप्तचित्तैरपि यैकवारं ।[3]
ते सर्वि प्राप्ता इममग्रबोधिम् ।
सुगतान तेषां तद तस्मि काले ।
परिनिर्वृतानामथ तिष्ठतां वा ।
ये धर्मनामापि शृणू[4]षु सत्त्वास् ।
ते सर्वि बोधाय अभूषि लाभिन ' इति ॥

महाकरुणासूत्रे[5]ऽप्युक्तं ॥

तद्यथा वाडिशिकेन महत्युदकसरसि मत्स्याकर्षणार्थं सामिषं वडिशं प्रक्षिप्तं भवेत्समनन्तरप्रक्षिप्तं च मत्स्येन निगीर्णं भवेत् । किं चापि स मत्स्य उदकसरसि भ्रमत्यथ च पुनर्बद्ध एव स वक्तव्यो दृढेन सूत्रेण स्थलगतदण्डसुनिबद्धेन । यत्स वाडिशिक आगत्य तेन सूत्रलाघवेन जानाति ' गृहीतो मत्स्य इति । तमेनं सूत्राद्गृहीत्वा स्थलगतं क-

1) *tĕ* W.

2) Here both MSS. read *avan°*: in W. *ănam°* is corrected (a sec. manu) to *avan°*.

3) *vācā* A.

4) *çruṇotsu* (?) W. The form *kriḍishu* above (92. 12) is somewhat similar.

5) No doubt the Mahākaruṇā-puṇḍarīka-sūtra. Compare Nanjio 117, (where the Chinese title is similarly abbreviated) 180 (tr. before AD. 431); K.F. 239; M. Vyutp. LXV. 23.



रोति यथाकामकरणाय परिभोगाय । एवमेव ये सत्त्वा बुद्धेषु भगवत्सु चित्तं प्रसाद्य कुशलमूलमवरोपयन्ति ' अन्तश एकचित्तप्रसादमपि । किं चापि ते सत्त्वा दुष्कृतेन कर्मावरणेनाक्षणेषूपपन्ना भवन्त्यथ च बुद्धा भगवन्तस्तान्सत्त्वान् बौद्धेन ज्ञानेन संग्रहवस्तुसूत्रेण[1] गृहीत्वा संसारोदकसरस उद्धृत्य निर्वाणस्थले स्थापयन्तीति ॥

तस्मादेषु शास्तृसंज्ञा कार्या ' वन्दमानाश्च मनसा वन्दितव्याः । भवति हि नवकोऽपि बोधिचित्तबलाद्वन्द्यो ' यथा मेघेन[2] द्रमिडेन महाबोधिसत्त्वेनापि सता नवक आर्यसुधनः सर्वशरीरेण प्रणिपत्य वन्दितः । नियतार्थं चेदं । यथाध्याशयसंचोदनादिषु सर्वबोधिसत्त्वयानिकपुद्गलनमस्कारो ऽनुज्ञातव्यः '[3]सर्वशब्देनात्मनोऽपि ग्रहणात्[3] । कथमेकत्र वन्द्य[52 b]वन्दकत्वं न विरुध्यते ' परस्परं वन्द्यत्वे नैवालम्बनात् । अत एवानास्वादनादपुण्यभावः । किं च बुद्धानामप्येवमिष्यते । मा भूदनवस्था । एकस्य चान्यूनतेति ॥

आर्यसर्वधर्मवैपुल्यसंग्रहसूत्रेऽप्यनर्थ उक्तः । सूक्ष्मं हि मञ्जुश्रीः सद्धर्मप्रतिक्षेपकर्मावरणं ' यो हि कश्चिन्मञ्जुश्रीस्तथागतभाषितधर्मे कस्मिंश्चिच्छोभनसंज्ञां करोति । क्वचिदशोभनसंज्ञां स सद्धर्मं प्रतिक्षिपति । तेन सद्धर्मं प्रतिक्षिपता तथागतो ऽभ्याख्यातो भवति । धर्मः प्रतिक्षिप्तो भवति ' संघो ऽपवादितो भवति । य एवं वदतीदं युक्तमिदमयुक्तमिति स सद्धर्मं प्रतिक्षिपति । न मया पृथक्कश्चिद्धर्मः श्रावकयानसंप्रयुक्तः प्रत्येकबुद्धयानसंप्रयुक्तो महायानसंप्रयुक्तो देशितः । तत्ते मोहपुरुषा इमं मम धर्मं नानाकरिष्यन्ति । इदं श्रावकाणां देशितमिदं प्रत्येकबुद्धानामिदं बोधिसत्त्वानामिति । स नानात्वसंज्ञया सद्धर्मं प्रतिक्षिपति । इयं बोधिसत्त्वस्य शिक्षा । इयं बोधिसत्त्वस्याशिक्षेति सद्धर्मं प्रतिक्षिपति । धर्मभाणकस्यास्ति प्रतिभानं नास्ति प्रतिभानमिति सद्धर्मं प्रतिक्षिपति । धर्मं धर्मतया क-

1) Cf. Dh.-s. § 19 and p. 39.

2) This refers to the passage of the Gaṇḍavyūha already cited at 36. 14. above. See note there.

3) This clause is added a sec. manu.

थयति[1] सद्धर्मं प्रतिक्षिपति । अपगते बुद्धोत्पादे नास्ति धारणीप्रतिलम्भ इति धर्मं प्रतिक्षि-
पति । नास्ति धर्मभाणकस्य धारणीप्रलम्भ इति धर्मं प्रतिक्षिपति । धर्मभाणकस्य चर्यां
दूषयति धर्मं प्रतिक्षिपति । धर्मभाणको न प्रतिपत्तिसंपन्न इति धर्मं प्रतिक्षिपति । प्रमा-
देनैनं चोदयति सद्धर्मं प्रतिक्षिपति । ईर्यापथेन चोदयति सद्धर्मं प्रतिक्षिपति । अन्तरचर्यया[2]
5 शीलविपत्त्या चोदयति धर्मं प्रतिक्षिपति । प्रति[53 a]भानेन[3] संपादयतीति धर्मं प्रतिक्षिप-
ति । आलोको ऽस्य धर्माणां न सुविदित इति धर्मं प्रतिक्षिपति । मन्त्रेण मन्त्रमबुध्यमानः
प्रतिवदतीति धर्मं प्रतिक्षिपति । अन्तरसंज्ञया तथागतशासनं नावगाहत इति धर्मं प्रति-
क्षिपति । सूत्रेण सूत्रं विरोधयतीति धर्मं प्रतिक्षिपति । गाथया गाथां विरोधयतीति धर्मं
प्रतिक्षिपति । अन्तरसंज्ञया काञ्चिदधिमुक्तं करोति काञ्चिन्न करोतीति धर्मं प्रतिक्षिपति ।
10 धर्मभाणकस्यार्थान्यकथामभिनामयतीति धर्मं प्रतिक्षिपति । विचक्षुः कर्मास्य करोति धर्मं
प्रतिक्षिपति । संलापयन् वदतीति धर्मं प्रतिक्षिपति । इहास्यास्ति चर्या इहास्य नास्ति
चर्येति धर्मं प्रतिक्षिपति । इदं सूक्तमिदमसूक्तमिति धर्मं प्रतिक्षिपति । अनेन नास्ति चर्ये-
ति धर्मं प्रतिक्षिपति । अनेन बुद्धवचनसमय उक्तो नानेन बुद्धवचनसमय उक्त इति धर्मं
प्रतिक्षिपति इति हि मञ्जुश्रीर्यावत्किंचिद्विलोपयति तावद्धर्मं प्रतिक्षिपति । धर्मभाणक-
15 स्येदं रूपमिति चिन्तयति वदति भिक्षुर्वा भिक्षुणी वा उपासको वा उपासिका वा । सर्वः
स सद्धर्मं प्रतिक्षिपतीत्यादि ॥

अत्रैव चोक्तं । यस्य कस्यचित्कुलपुत्र तथागतस्य परिनिर्वृतस्य धर्मः प्रतिभाति य-
थाधिमुक्तानां सत्त्वानां देशयितुं । तस्यां च पर्षदि यद्येकसत्त्वस्यापि एकरोमहर्षो भवेदेका-
श्रुपातो वा सर्वः स तथागतानुभावेन । तत्र मोहपुरुषा अबोधिसत्त्वा बोधिसत्त्वप्रतिज्ञा बो-
20 धिसत्त्वदूषका धर्मस्तैन्यकुहका एवं वक्ष्यन्ति धर्मोपदेशकेभ्यः । किमेते । न बुध्यन्त इति ॥

1) A marginal gloss, apparently on this word, adds: *tuccham sarvapravacanam sarvadharma-çūnyatvāt.*

2) *aksharapāṭhako 'yam nārthapālaka iti*: marg.

3) *viparītārthakatvāt saiva*: marg.



पे ॥ ये बोधिसत्त्वेष्ववमन्यनां कुर्वन्ति । नाहं तेषां पर्यन्तकृतं निरयं[1] [53 b] संवदामि । त-
त्कस्य हेतोः । यो बोधिसत्त्वो धर्मभाणकमपवदति बुद्धं स विगर्हति धर्मं स प्रतिक्षिपति
संघं स जुगुप्सति । बुद्धे सोऽगौरवो यो धर्मभाणके ऽगौरवः । बुद्धं स न द्रष्टुकामो यो धर्म-
भाणकमद्रष्टुकामः । बुद्धस्य सो ऽवर्णं भाषते यो धर्मभाणकस्यावर्णं भाषते । बुद्धस्तेन प-
रित्यक्तो भवति यः प्रथमचित्तोत्पादिकेऽपि बोधिसत्त्वे प्रतिघचित्तं करोतीति ॥ पे ॥ 5
योऽप्ययं मैत्रेय षट्पारमितासमुदागमो बोधिसत्त्वानां संबोधाय तं ते मोहपुरुषा एवं वक्ष्य-
न्ति । प्रज्ञापारमितायामेव बोधिसत्त्वेन शिक्षितव्यं । किं शेषाभिः पारमिताभिः ।
ते ऽन्यां पारमितां दूषयितव्यां मन्यन्ते । तत् किं मन्यसे ऽजित दुष्प्रज्ञः स का-
शिराजाभूद् येन कपोतार्थं श्येनाय स्वमांसानि दत्तानि[2] । मैत्रेय आह । नो हीदं भगवन् ।
भगवानाह । यानि मया मैत्रेय बोधिसत्त्वचर्यां चरता षट्पारमिताप्रतिसंयुक्तानि कुशलमू- 10
लान्युपचितानि अपकृतं नु तैः कुशलमूलैः ॥ मैत्रेय आह । नो हीदं भगवन् ॥ भगवानाह ।
त्वं तावदजित षष्टिं कल्पान्दानपारमितायां षष्टिं कल्पान् शीलपारमितायां षष्टिं क-
ल्पान् क्षान्तिपारमितायां षष्टिं कल्पान्वीर्यपारमितायां षष्टिं कल्पान्ध्यानपारमितायां
षष्टिं कल्पान्प्रज्ञापारमितायां समुदागतः । तत्ते मोहपुरुषा एवं वक्ष्यन्ति । एकनयेनैव
बोधिर्यदुत शून्यतानयेनेति । ते चर्यासु परिशुद्धा भविष्यन्तीत्यादि[3] ॥ 15

इति शिक्षासमुच्चये चतुर्थः परिच्छेदः ॥

V.

## शीलपारमितायामनर्थवर्जनं पञ्चमः परिच्छेदः ॥

उक्तः संक्षेपतो ऽनर्थः । तस्य विवर्जनं यथाध्याशयसंचोदनसूत्रे[4] । एवंविधानर्थश्रवणभ-
यभी[रुकैः] [54 a] आदिकर्मिकबोधिसत्त्वैः समादानानि यथा गृहीतानि तथा कार्यं । एवं 20

1) *rayavā* (?) MS.

2) A tale of the Çibi-king. Feer, Avad.-ç. p. 127; Takakusu, I-tsing, p. 226; Kshemendra, Avad. k. l. II. 109.

3) *neti vācyam* margin (early hand).

4) See p. 15 note 2, and add ref. to Nanjio 23 (25).

हि तैरुक्तं ' एते वयं भगवन्नद्याग्रेण तथागतस्य पुरतः ' एवं समादानं कुर्मः । सचेद्वयं भगवन्नद्याग्रेण बोधिसत्वयानिकं पुद्गलं गृहिणं वा प्रव्रजितं वापत्त्या चोदयिष्यामो भूतेन वाभूतेन वा विसंवादितो ऽस्माभिस्तथागतो ऽर्हन्सम्यक्संबुद्धो भवेत् । सचेद्वयं भगवन्नद्याग्रेण बोधिसत्वयानिकं पुद्गलमवमन्येमावर्णं चास्य भाषेम विसंवादितोऽस्माभिस्तथागतो भवे-
5 दर्हन्सम्यक्संबुद्धः । सचेद्वयं भगवन्नद्याग्रेण बोधिसत्वयानिकं पुद्गलं गृहिणं वा प्रव्रजितं वा पञ्चभिः कामगुणैः क्रीडन्तं परिचारयन्तं दृष्ट्वाप्रसादं कुर्याम विलेखं वा चित्तस्योत्पादयेमागौरवं वोत्पादयेम न च तत्र शास्तृसंज्ञामुत्पादयेम ' विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेण मित्रकुलभिक्षादकुलनिदानं बोधिसत्वयानिकानां पुद्गलानां कायपीडां चित्तपीडां वा कुर्याम विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेण बो-
10 धिसत्वयानिकं पुद्गलं दृष्ट्वा एकेनाप्यमनोज्ञवचनेनाभाषेम विसंवादितो ऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेण त्रिस्कृत्वो रात्रेः त्रिस्कृत्वो दिवसस्य बोधिसत्वयानिकं पुद्गलं न नमस्येम विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेणास्य व्रतसमादानस्य कृतशो राज्यप्रतिलम्भं वा धनप्रतिलम्भं वा कायजीवितं वा न परित्यजेम [54 b] विसंवादितो ऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेण श्रावकयानिकं
15 वा प्रत्येकबुद्धयानिकं वा पुद्गलमवमन्येम ' वयं विशिष्टतरा नैते इति विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नीचचित्ताश्चण्डालसदृशचित्ता न विहरेम विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेणात्मानमुत्कर्षयेम परं वा पंसयेम विसंवादितो ऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेण व्यापादविग्रहभयाद्योजनं वा योजनशतं वा न पलायेम ईरिताः समाना विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं
20 भगवन्नद्याग्रेण शीलवन्तमात्मानं प्रतिजानीम बहुश्रुतं वा धुतगुणिनं वान्यतरान्यतरेण वा गुणेनात्मानमुद्भावयेम विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नद्याग्रेण प्रतिच्छन्नकल्याणा विवृतपापा न विहरेम विसंवादितोऽस्माभिस्तथागतो भवेदर्हन्सम्यक्संबुद्धः ॥ पे ॥ तत्र भगवान् मैत्रेयं बोधिसत्वं महासत्वमामन्त्रयते स्म । कर्मावरणं मैत्रेय



क्षपयितुकामेन कुलपुत्रेण वा कुलदुहित्रा वा एवं समादानं कर्तव्यं यथा एभिः कुलपुत्रैः कृतमिति ॥

सर्वधर्माप्रवृत्तिनिर्देशे ऽप्याह[1] ॥

तृष्कृत्व रात्रिं दिवसं तथैव ।
स[2] बोधिसत्वान्प्रणमेत मूर्ध्ना । 5
तेषां न किंचित्स्खलितं गवेषेत् ।
चरेत चर्यां हि सदा यथेष्टम् ॥
पश्येद्यदा कामगुणै रमन्तं[3] ।
न तस्य किंचित्स्खलितं गवेषेत् ।
गुणैरनन्तां वर बोधिचर्यां । 10
एषो ऽपि कालेन हितां स्पृशेत[4] ॥
युक्त्यानुपूर्व्या क्रिययानुपूर्व्या ।
भवेज्जिनो नैव हि एकवाचा[5] ।
बहु[6]कल्पकोट्यो नियुतानि चैष ।
सन्नाहसंप्रस्थित[7]ना[55 a]न्यभावी ॥ 15

अत्रैवाह । ये कुलपुत्रैवंरूपेण कर्मावरणेनानर्थिकाः ' तैर्न द्वितीयस्य बोधिसत्वस्य सर्वचर्यासु विप्रतिपत्तव्यं । सर्वाः क्रियास्तस्य विमोक्तव्याः ' एवं चित्तमुत्पादयितव्यं । नाहं परचित्तं जाने दुर्विज्ञेया सत्वचर्या ' इदं च खलु कुलपुत्रार्थवशं संपश्यंस्तथागत एवं

---

1) Pp. 6. 16, 90. 19 supra.
2) MS. *sambodhi°*; but the long syllable is not required by the metre.
3) *bodhisatvaṃ* marg.
4) *spṛçishyate* MS.
5) *vācayā* MS. with *caryayā* in margin.
6) *bahu* as a monosyllable; cf. supra.
7) The Tib. (66. b. 5 where read གོ་ཆ་ for གེ་ཆ་) confirms this rather strange phrase, 'setting forth [clad in spiritual] armour'. Cf. Dh.-s. 108. 93 15.

धर्मं देशयति ' न पुद्गलेन पुद्गलः प्रमातव्यः॥ अहं वा पुद्गलं प्रमिणुयां यो वा स्यान्मादृशः॥ यः कुलपुत्रात्मानं रक्षितुकामस्तेन न कस्यचिच्चर्या विवेचयितव्या। न परेषां विकुट्टना[1] कर्तव्या ' अयमीदृशोऽयमीदृश इति। बुद्धधर्माभियुक्तेन भवितव्यं रात्रिं दिवं धर्मपलिगुद्ध[2]मानसेनेति॥

5 तथा क्षितिगर्भसूत्रेऽपि[3] कथितं। अथ तावदेव बहूनि शतसहस्राणि विद्वांसः सत्वा उत्थायासनाद्येन भगवांस्तेनाञ्जलिं प्रणाम्यैवमाहुः। वयं भदन्त भगवतः पुरत एवं प्रणिधानं कुर्मः यावच्चिरं वयं भदन्त भगवन्संसारे संसरेम[4] तावन्मात्र प्रतिलब्धक्षान्तिकामा राजस्थानं प्रतिलभेम ' मामात्यस्थानं ' मा नगरज्येष्ठस्थानं ' मा ग्रामज्येष्ठस्थानं। मा निगमज्येष्ठस्थानं ' मा पुरोहितज्येष्ठस्थानं मा भटज्येष्ठस्थानं ' यावन्मा सार्थवाहज्येष्ठस्थानं ' 10 मोपाध्यायज्येष्ठस्थानं ' मा श्रमणज्येष्ठस्थानं ' मा गृहपतिज्येष्ठस्थानं ' मा कुटुम्बिज्येष्ठस्थानं यावत्सर्वशो वयं मा सत्वानामधिपतिस्थानं प्रतिलभेम यावन्न क्षान्तिप्रतिलब्धाः स्याम[5] ' यतो निदानं[6] वयमेवंरूपमतिगाढं कर्म बुद्धानां शासनमाक्षिपेम। इति विस्तरः॥

चन्द्रप्रदीपसूत्रेऽप्यनर्थविवर्जनमुक्तम्।

नास्ति पापमकर्तव्यं कुमारा[7] तेषु भेष्यति।
15 मा तेहि संस्त[55 b]वं सार्धं कुर्याः त्वं कालि पश्चिमे॥
आलपे संलपेय्यासि कुर्यासी तेष गौरवं।
अनालीनः[8] सत्करेय्यास्यग्रबोधयि कारणात्॥

1) Not in lexx. The Tib. equiv. འཕྱས་ (67 a. 1) confirms the meaning 'censure' hitherto attested for √kuṭṭ by the Dhātup. only.

2) A curious Prakritic form (cf. infra p. 105). Compare *parigredha* in M. Vyutp. cx.

3) Supra p. 13. 7.

4) °*mas* MS.

5) *mo* MS.

6) Cf. *tato nidānam* Vajracch. § 8.

7) *rājakumārāṇāṃ*, marg.

8) *anolīnaḥ* MS. *Anālīnaḥ* = «not desponding». Tib. (67. b 1) ཞུམ་པ་མེད་ Cf. *saṃlīna*. *āsi agra*° MS.



वर्षाग्रं परिपृच्छित्वा यस्ते वृद्धतरो भवेत्।
कुर्यासि गौरवं तत्र शिरसा पादवन्दनैः॥
न तेषां स्खलितं पश्येद् बोधिमण्डं विपश्यतां।
प्रतिघातं न जनयेत् मैत्रचित्तः सदा भवेत्॥
5 यद्येषां स्खलितं पश्येद्दोषांस्तेषां न कीर्तयेत्।
यादृशं काहिति[1] कर्म तादृशं लप्स्यते फलं॥
स्मितेन मुखचन्द्रेण वृद्धेषु नवकेषु च।
पूर्वाभाषी भवेन्नित्यं हतमानश्च सर्वतः॥
चीवरैः पिण्डपातैश्च कुर्यात्तेषामनुग्रहं।
10 एवं चित्तं प्रदध्यास्त्वं सर्वे भेष्यन्ति नायका ' इति॥

यस्य च बोधिचित्तोत्पादिके गौरवं प्रसादश्च नोत्पद्येते ' तेन[2] स्वदुर्गतिप्रपातभयरक्षार्थं दृष्टादृष्टप्रामोद्यानुभवनार्थं स्वचित्तकलुषप्रसादनार्थं चित्तकल्यताचित्तकर्मण्यताप्रतिलाभार्थं च यथार्यगण्डव्यूहे बोधिचित्तोत्पादिकगुणा भगवदार्यमैत्रेयेणाचार्यसुधनमधिकृत्योद्भावितास्तथा भावयितव्याः॥

15 एष[3] दृष्ट्व जरव्याधिपीडितान् प्राणिनो दुःखशतैरुपद्रुतान्।
जन्ममृत्युभयशोकतापितान्[4] तेष[5] अर्थि चरते कृपाशयः॥
दुःखयन्त्रपरिपीडितं जगत् दृष्ट्व[6] पञ्चगतिचक्रमण्डले।
ज्ञानवज्रमयमेष ते दृढं दुःखयन्त्रगतिचक्रभेदनं॥

1) MS. °*hiti*. The marg. adds *kurmas te*, which looks like an emendation by some reader who did not understand the form in the text. Cf. Childers s. v. *karoti*.

2) The slightly involved syntax is summarized by a note in the margin: *tena prasādād [i-]guṇā bhāvyā iti yogaḥ*.

3) Metre: Rathoddhatā.

4) *tāpinaṃ* H (v. p. 34, n. 4) fol. 252. b. 5.

5) *teshu* H.

6) *drshta* H.

रागदोषतृणखाणु(1)कण्टकं दृष्टिसंगबल्ककक्ष(2)संकुलम् ।
सत्त्वक्षेत्रपरिशोधनार्थिकः प्रज्ञलाङ्गलदृढं गवेषते ॥
मोहविद्य(3)गहनाशयं जगत् प्रज्ञचक्षुहतनष्टदेशिकं ।
तस्य क्षेम दिश[56 a]देशिकः(4) प्रभुः सार्थवाह जगतो भविष्यति ॥
क्षान्तिधर्मत्रिविमोक्षवाहनो(5) ज्ञानखड्गरिपुक्लेशधर्षकः ।
शूरभूत(6) अभयस्य दायको देशको हि जगतो भविष्यति ॥
धर्मनाव समुदानयत्ययं ज्ञानसागरपथे सुशिक्षितः ।
शान्तिरत्नवरद्वीपनायकः कर्णधार(7) त्रिभवार्णवे(8) अयम् ॥
ज्ञानरश्मिप्रणिधानमण्डलः सर्वसत्त्वभुवनावभासकः(9) ।
धर्मधातुगगने समुद्गतो(10) बुद्धसूर्य समुदेश्यते अयम् ॥
मैत्रिचन्दनसमाधिशीतलः सर्वसत्त्वसमचित्तसुप्रभः ।
शुक्ल(11)धर्मपरिपूर्णमण्डलो बुद्धचन्द्र समुदेश्यते अयम् ॥
आशये दृढतले प्रतिष्ठितो बोधिचर्य अनुपूर्व उद्गतः ।
सर्वधर्मरतनाकरो ह्ययं ज्ञानसारवरो भविष्यति ॥
बोधिचित्तभुजगेन्द्र(12)संभवो धर्मधातुगगने समुद्गतः ।

---

1) B², who cites M. Vyutp. only for this form connects it with *sthāṇu*. Cf. Pali.
2) *kam eṣa* H.
3) A curious form, *metri gratia*, for °*hāvidyā*°; cf. Dh.-s. p. 49 § 67.
4) °*darçanapr*° H.
5) Dh.-s. § 73.
6) °*putta* H.
7) °*ru* A.
8) Cf. Childers s. v. *bhavo*.
9) °*sanaḥ* H.
10) °*dhātugagamahāprabho* H.
11) *paksha* marg. — a gloss suggested by the metaphor of the moon
12) *nāgarājaprabhavā meghā varshanti*, marg.



धर्ममेघयुगपत्प्रवर्षणः(1) सर्वशुक्लफलशस्यवर्धनः ॥
शुद्धि(2) वर्त्ति त्रिमलत्त(3)मोऽप्ययं(4) मैत्रिस्नेहस्मृतिभाजनं दृढम् ।
बोधिचित्तविमलाग्निसुप्रभम् धर्मदीप समुज्ज्वालयिष्यति(5) ॥
बोधिचित्तकललः कृपार्बुदो मैत्रपेशिरचलाशयो घनः ।
बोधि अङ्गमनुपूर्वसंभवो बुद्धगर्भ अयु(6) संप्रवर्धते ॥
पुण्यगर्भमभिवर्द्धयिष्यति प्रज्ञ(7)गर्भमभिशोधयिष्यति ।
ज्ञानगर्भ समुदेश्यते अयं यादृशः प्रणिधिगर्भसंभवः ॥
ईदृशाः करुणमैत्रधर्मिताः सत्त्वमोचन मतो(8) हिताशयां ।
दुर्लभा जगि सदेवमानुषे यादृशो अयु विशुद्धमानसः ॥
ईदृशाशयसुमूलसंस्थितो ईदृशो दृढप्रयोगवर्द्धितः ।
ईदृशस्त्रिभवच्छादनप्रभो ज्ञानवृक्षफलदः सुदुर्लभः ॥
एष सर्वगुणसंभवार्थिकः सर्वधर्मपरिपृ[56 b]च्छनार्थिकः ।
सर्वसंशयविदारणार्थिकः सर्वमित्र भजते अतन्द्रितः(10) ॥

---

1) °*ṇe* H.
2) °*ddha* H.
3) The *t* is doubled *metri gratia* apparently. *Mala* = Tib. དྲི་ (68. a. 7). Cf. Jäschke p. 262.
4) °*ttamohaṃ* H.
5) *ujjv* as a short syllable is strange even in a Gāthā-passage: but the reading is confirmed by the Tib. མར་མེ་ ... འབར་བྱེད་ In H. the text has been. altered; it appears now to read: *dharmadvīpa-maitra ya janayishyati.*
6) *ayaṃ* says the marginal glossator, more reasonably than Rāj. Mitra, pref. to Lalitav. p. 31 ('*ayu* for *eshaḥ*').
7) *jñānag*° H.
8) *icchāpūrvam bhāshakaḥ satvamocanasya* marg.
9) *kalyāṇamitrāṇi bhajate* marg. (recent hand).
10) *trishṇā* H.

एष मारकलिक्लेशसूदनो एष दृष्टिमलक्लेश[1]शोधनः ।
एष सर्वजगमोक्षणोद्यतो एष ते सद विशेष पण्डितः ॥
एष दुर्गति विशोधयिष्यति स्वर्गमार्गमुपदर्शयिष्यति ।
मोक्षमार्गमुपनेष्यते जगद्दु यादृशे गुणपथे प्रतिष्ठितः ॥
एष सर्वतदुःखमोचको ।
एष सर्वगतिसौख्यदायकः ।
एष सर्वभयपाशछेदको[2] ।
भेष्यते भवगती[3]निसूदन ' इति ॥

एवमनया भावनयानर्थविवर्जनं सुकरं भवति । तथाध्याशयसंचोदनसूत्रेऽप्यनर्थविवर्जनमुक्तं । चतुर्भिर्मैत्रेय धर्मैः समन्वागतो बोधिसत्वयानिकः पुद्गलः पश्चिमायां पञ्चशत्यां [4]सद्धर्मविप्रलोपे वर्तमाने ऽक्षतोऽनुपहतः स्वस्तिना[5] परिमोक्ष्यते ॥ कतमैश्चतुर्भिः । आत्मस्खलितप्रत्यवेक्षणतया । परेषां बोधिसत्वयानिकानां पुद्गलानामापत्त्यचोदनतया । मित्रकुलभिक्षादकुलानवलोकनतया । अमनस्कवचनप्रतिविरमणतया । एभिर्मैत्रेय चतुर्भिरिति पूर्ववत् ॥ अपरैश्चतुर्भिः ' कतमैः । अल्पश्रुतसत्वपरिवर्जनतया । पर्षदनुपादानतया । प्रान्तशय्यासननिषेवणतया च । आत्मदमशमथयोगमनुयुक्ततया[6] च । एभिश्चतुर्भिरिति विस्तरः ॥

पुनरत्रैवाह । आदिकार्मिकेण मैत्रेय बोधिसत्वेन प्रज्ञाबलाधानप्राप्तेन लाभसत्कारपरिवर्जितेन लाभसत्कारदोषदर्शिना भवितव्यं ॥ पे ॥ संगणिकारामपरिवर्जितेन संग-

1) *bhaya* A.

2) °*dano* H.

3) *bhāvatini* H.

4) See p. 88, note 6.

5) This form found hitherto in Sk. lex. only (cf. Zachariae, Die ind. Wörterb., p. 24, n. 9). For Pali cf. Childers s. v. *sotthi* sub fin.

6) Correct to °*yogānuy*° ?



णिकारामदोषदर्शिना भवितव्यं । भाष्यारामपरिवर्जितेन भाष्यारामदोषदर्शि[57 a]ना भवितव्यं । निद्रारामवर्जितेन निद्रारामदोषदर्शिना भवितव्यं । कर्मारामवर्जितेन कर्मारामदोषदर्शिना भवितव्यं । प्रपञ्चारामवर्जितेन प्रपञ्चारामदोषदर्शिना भवितव्यं ॥ पे ॥ इह मैत्रेय बोधिसत्वेन महासत्वेन रागसंजननो लाभसत्कारः प्रत्यवेक्षितव्यः ' स्मृतिविध्वंसनकरो लाभसत्कारः प्रत्यवेक्षितव्यः । लाभालाभतया उन्नामावनामकरो लाभसत्कारः प्रत्यवेक्षितव्यः । मोहोत्पादनो लाभसत्कारः प्रत्यवेक्षितव्यः । कुलमात्सर्याध्यवसानो लाभसत्कारः प्रत्यवेक्षितव्यः । आत्मार्थनिष्पादनतया शाठ्योत्पादनो लाभसत्कारः प्रत्यवेक्षितव्यः । चतुरार्यवंश[1]परिवर्जनतया आह्रीक्या[2]नपत्राप्य[2]संजननो लाभसत्कारः प्रत्यवेक्षितव्यः । एवं सर्वबुद्धाननुज्ञातो लाभसत्कारः प्रत्यवेक्षितव्यः । मानमदोत्पादनो लाभसत्कारः प्रत्यवेक्षितव्यः । गुरूणामवमाननो लाभसत्कारः । मारपक्षो लाभसत्कारः । एकान्तप्रमादमूलः कुशलमूलापहरणो लाभसत्कारः । विद्युच्चक्राशनिसदृशो लाभसत्कारः । बहुपलिगोधपलिगुद्धो[3] मित्रकुलभिक्षादकुलावलोकनो दौर्मनस्यसंजननः ' बुद्धिविभ्रमणो लाभसत्कारः प्रियवस्तुपरिणामनतया शोकभाजनो लाभसत्कारः । चतुःस्मृत्युपस्थान[4]संमोषणः शुक्लधर्मदुर्बलीकरणः चतुःसम्यक्प्रहाण[5]परिहाणकरणो लाभसत्कारः । ऋद्ध्यभिज्ञापरिहाणकरणः ' पूर्वं सत्कारपश्चादसत्कारकरणः ' अमित्रसत्करणमित्रप्रहाणो लाभसत्कारः । पराभिसंधानतया गणिकासदृशः ' ध्याना[57 b]प्रमाणपरिवर्जनः ' नरकतिर्यग्योनियमलोकप्रपातनो लाभसत्कारः । देवदत्तोद्रकसमाचारो लाभसत्कारः प्रत्यवेक्षितव्यः ॥

1) The Tib. (69 b. 1) renders this word here and below (57 b.) by རིགས, the ordinary word for caste or family.

2) These two forms have hitherto been attested by the M. Vyutp. (civ. 50, 51) only.

3) Supra p. 100, note 2.

4) Dh.-s. 44.

5) Ibid. 45.

इमे एवंरूपा मैत्रेय लाभसत्कारे आदीनवा ये बोधिसत्वेन प्रत्यवेक्षितव्याः। प्रत्यवेक्ष्य चाल्पेच्छतायां रन्तव्यं न परितप्तव्यं। तत्कस्य हेतोः। अल्पेच्छस्य हि मैत्रेय इम एवंरूपा दोषा न भवन्ति न चास्यान्तराया भवन्ति बुद्धधर्माणां। अनिर्विण्णश्च भवति गृहिप्रव्रजितेभ्यः। अनुरक्षणीयश्च भवति देवमनुष्याणां परिशुद्धाशयस्थितः। असंत्रस्तश्च भवति सर्वदुर्गतिनिपातेभ्यः। अनभिभूतश्च भवति तर्जनाविगतः। असंहार्यश्च भवति मारविषयविमुक्तः। अधर्षणीयश्च भवति सर्वव्यसनैः। अभिलषणीयश्च भवति देवमनुष्याणां ध्यानाभ्यासाशयस्थितः। स्पष्टश्च भवति मायाशाठ्यप्रहीणो ऽप्रमत्तश्च भवति पञ्चकामगुणदोषदर्शी यथावादी तथाकारी भवत्यार्यवंशे स्थितः। अभिलषितश्च भवति विद्वद्भिः सब्रह्मचारिभिः। इमां मैत्रेय एवंरूपामनुशंसां विदित्वा पण्डितेन बोधिसत्वेनाध्याशयेनाल्पेच्छतायां रन्तव्यं। अल्पेच्छता आसेवितव्या सर्वलाभसत्कारप्रहाणायेति ॥

संगणिकामधिकृत्याह। विजह्य(1) रागं विजह्य दोषं

न तिष्ठते संगणिकासु योगी।
भवत्यसौ तत्प्रवणास्तन्निम्नः(2)।
एतेन दोषेण रतिं न कुर्यात्'
औद्धत्य हास्यं च तथा वितर्का।
भवन्त्यमी संगणिकासु सर्वे ॥
संकीर्णचारी हि भवत्यसंवृतः।
करोति यः संगणिकामसाराम् ॥
लोकस्य मन्त्रेषु रमन्ति बाला।
हीयन्ति चेहाग्रकथासु बालाः।

1) This form is not quoted: but cf. Sk. & Pali *jahita* and Pali *jahitvā*.

2) The scansion *tānnimnaḥ* is curious. For a similar juxtaposition of *nimna* and *pravaṇa* (cf. Pali *tappoṇo*) see M. Vyutp. XXX. 3, 4. As to the metre compare p. 43, note 2.



प्रदोष वर्धेन्ति वितर्क उत्सदा।
एतेन दोषेण न तत्र राजते ॥(1)
न वर्धते चापि श्रुतेन भिक्षुः।
अयुक्तमन्त्रेषु रतिं जनित्वा।
तस्मात् [58 a] परित्यज्य अयुक्तमन्त्रान्।
धर्मे रतिं विन्दथ(2) नित्यकालम् ॥
सहस्रशो ऽष्टानि मया स्वकानि।
त्यक्तानि बोधिं प्रतिकाङ्क्ष तर्हि।
न चास्मि तृप्तः शृणुमान धर्मं।
ते खेदमेष्यन्ति शृणोन्त(3) धर्मम् ॥
सर्वेण सर्वं परिवर्जनीया।
अयुक्तमन्त्राश्च अशिष्टमन्त्राः।
धर्मे वरे तत्र रतिं जनेथ(2)।
यो दुर्लभः कल्पशतैरनेकैः ॥
वने वसन्तेन गुणार्थिकेन।
परस्य दोषा न हि वीक्षितव्याः।
अहं विशिष्टो अहमेव श्रेष्ठो।
न एव चित्तं समुपादनीयम् ॥(4)

1) The MS. appears to read *na tatra rajāte.* But as the Tib. has མི་ཆགས་སོ་ it seems best to read either as above suggested (with extra syllable as in the previous hemistich and often in this poetry); or else *na tatra jāte,* a form which might stand in a gāthā for *jāyate.*

2) Compare p. 61, note 1.

3) So I propose for the unmetrical *çṛṇumāna* repeated here in the MS.

4) For °utpād° through an intermediate form (cf. Pali) °uppād°; or from °ā-dā?

मदो ऽयं सर्वप्रमादमूलो।

न हीनभिक्षू अवमन्यितव्याः।

अनुपूर्व एषो इह शासनस्य।

नैकेन जन्मेन लभेत बोधिम्॥

5 अत्रैव भाष्यारामम्धिकृत्याह।

अगौरवो भोति[1] श्रुतेन मत्तो।

विवादमन्त्रेषु निविष्ट भोति।

मुषितश्रुतिश्चापि असंप्रजन्यो।[2]

भाष्ये रमन्तस्य इमे हि दोषाः॥

10 अध्यात्मचिन्तात्त सुदूर भोती।

चित्तं न कायश्च प्रसन्न भोति।

उन्नामनामानि बहूनि[3] गच्छती।

भाष्ये रमन्तस्य इमे हि दोषाः॥

सद्धर्मचित्तात्तु प्रणष्टु बालः।

15 सुकर्कशो भोति असिग्धचित्तः।

विपश्यनायाः शमथाच्च दूरे।

भाष्ये रमन्तस्य इमे हि दोषाः॥

अगौरवो भोति सदा गुरूणां।

---

1) *bhavati* MS.

2) Tib. བརྗེད་པར་འགྱུར་ཞིང་ཤེས་བཞིན་མེད་པར་འགྱུར་ (70 b. 6). *mushita-çruti* must be taken (if indeed the reading is correct) as formed on the analogy of *mushitasmṛti* a form occurring both in classical and Buddh. Sanskrit. With *asaṃprajanya*, also a new form, cp. Pali *sampajañña*.

3) Margin: *a . . utkarshāpakarshavitarkabahulaḥ*. The Tib. however appears to understand the passage as referring to pride (ཁེངས་པ་) and its reverse.



पलिगोधमन्त्रेषु[1] रतिं जनित्वा।

असारस्थायी परिहीणप्रज्ञो।

भाष्ये रमन्तस्य इमे हि दोषाः॥

अमानितो देवगुणैः स भोति।

5 नाप्यस्य तस्मिन्[2] स्पृह संजनन्ति।

प्रतिसंविदातो[3] भवती विहीनो।

भाष्ये रमन्तस्य इमे हि दोषाः॥

परिभाष्यते चापि स पण्डितेभिः।

ये कचिदस्ती पृथकायसाक्षी।

10 निरर्थकं जीवितु तस्य भोती।

भाष्ये रमन्तस्य इमे हि दोषाः॥

स शोचते कालु करोतु[4] बालः।

प्रतिपत्ति हीनोऽस्मि किमद्य कुर्या।

सुदुष्षितो भोति अलब्धगाधो।[5]

15 भाष्ये रमन्तस्य [58 b] इमे हि दोषाः॥

चलाचलो भोति तृणं यथेरितं।

विचिकित्सते एवमसौ न संशयः।

न तस्य जातू दृढ बुद्धि भोती।

भाष्ये रमन्तस्य इमे हि दोषाः॥

---

1) Cf. supra p. 100, note 2. The glossator adds *grāmajāla* (does he mean *indrajāla*?).

2) *Bahubhāshitṛi* marg.

3) Hitherto found in the form °*saṃvid* only: but cf. Pali *paṭisambhidā*.

4) *kālaṃ kurvan* marg.

5) *evaṃ me bhavishyatīti pratishṭhā* marg. This usage of *gādha* is best explained, perhaps, by the meaning 'Verlangen' (*lipsāyām*) quoted in B. R. from Lexx. only. The Tib. (71 a. 3) renders the word simply གཏིང་ 'bottom, depth'.

नटो यथा तिष्ठति रङ्गमध्ये ।
अन्यान शूराण[1] गुणान्प्रभाषते ।
स्वयं च भोती प्रतिपत्तिहीनो ।
भाष्ये रमन्तस्य इमे हि दोषाः ॥
शठश्च सो भोति लघुर्निराशः ।
पुनः पुनश्चारभते विवादम् ।
सो दूरतो आर्यधर्मस्य[2] भोती ।
भाष्ये रमन्तस्य इमे हि दोषाः ॥
संहृष्यते सत्कृत अल्पस्थामः ।
प्रकम्पते विप्रकृतो अज्ञानी ।
कपिर्यथा चञ्चलचित्त भोती ।
भाष्ये रमन्तस्य इमे हि दोषाः ॥ पे ॥
रमित्व भाष्यस्मि चिरं पि कालं ।
न विन्दते प्रीतिमिहात्मसौख्यं ।
वरं हि एकस्य पदस्य चिन्तना ।
प्रीतिं पदे यत्र लभेदनन्ताम् ॥
नेक्षुत्वचे सारमिहास्ति किञ्चिन्-'
मध्येऽस्ति तत्सार सुप्रेमणीयः ।
भुक्त्वा त्वचं नेह पुनः सशक्यं[3] ।
लब्धुं नरेणेक्षुरसं प्रधानम् ॥

1) *anyeshāṃ Bhīmādiçūrāṇāṃ* marg.
2) The metre would require a correction to *-dhrama-* (*ădhr* being allowed in this verse) or *-dhama-*, both of which occur in the Açoka inscriptions.
3) *sa-* is merely intensive; cf. *sacet.* The Pali *sasakkam*, acc. to Ch., is adverbial only.



यथा त्वचं तद्वदवेहि भाष्यं ।
यथा रसस्तद्वदिहार्थचिन्ता ।
तस्माद्धि भाष्ये तु रतिं विहाय ।
चिन्तेथ अर्थं सद अप्रमत्ताः ॥
निद्रारामममधिकृत्याह ।
महच्च सो वर्धति मोहजालं ।
विचिकित्सको[1] भोति स दृष्टिप्राप्तः ॥
दृष्टीकृतान्यस्य बहूनि[2] भोन्ती ।
यस्मान मिद्धे ऽभिरतिं प्रयाति ॥
प्रज्ञा च तेषां भवती सुदुर्बला ।
परिहीयते[3] बुद्धि न तस्य भोति ।
ज्ञानाच्च सो हीयति नित्यकालं ।
यस्मान मिद्धेऽभिरतिं प्रयाति ॥
कुसीद अज्ञो अलसो अप्रज्ञो ऽमनुष्य अवतार[4] लभेन्ति तस्य ।
विहेठयन्ते च वने वसन्तं यस्मान मिद्धे ऽभिरतिं प्रयाति ॥
कुशलेन चित्तेन सदा अनर्थिको ।
धर्मे च छन्दो न हि भोति तस्य ।
अधर्मकायश्च स भोति भूयो यस्मान मिद्धे ऽभिरतिं प्रयाति ॥
सद्धर्मछन्देन विहीनमूढः परिहीयते सर्वगुणेहि बा[59 a]लः ।
शुक्लं च घातेति तमोऽधिगच्छती ।

1) *prajñāmāndyāt* marg.
2) *vighātīni* marg.
3) *prajñātaḥ* marg.
4) Scan *otāra*; cf. Pali.

यस्मान मिद्धेऽभिरतिं प्रयाति ॥
अविशारदो भोति प्रलीनचित्तः ।
प्रामोद्य तस्यो भवती न नित्यं ।
निद्रयापग्रस्तः शिथिलाङ्ग भोती ।
यस्मान मिद्धेऽभिरतिं प्रयाति ॥
आत्मा तु ज्ञात्वा च कुसीदप्राप्तः ईर्ष्यायते वीर्यबलैरुपेतान् ।
वीर्यान्वितानां च अवर्ण भाषते यस्मान मिद्धेऽभिरतिं प्रयाति ॥ पे ॥
यत्सर्वदुष्खस्य तमस्य नाशनं ।
अपायपरिवर्जनताय मूलं ।
सर्वेहि बुद्धेर्हि सदा प्रशस्तं ।
तं वीर्यमार्य सततं भजस्व ॥

कर्मारामम‌धिकृत्याह ॥

सुदुर्वचो भोति गुरूभि चोदितः ।
प्रदक्षिणं गृह्णति नानुशासनं ।
विपन्नशीलश्च स भोति क्षिप्रं ।
दोषा अमी कर्मरते भवन्ति ॥
उत्कण्ठितो[1] भोति स नित्यकालं ।
गृहस्थकर्माणि सदा विचिन्तयन् ।
ध्यानप्रहाणैश्च न तस्य कृत्यं ।
दोषा अमी कर्मरते भवति ॥
तीव्रश्च संजायति तस्य रागो ।
रसारसेषु ग्रसितः स मूर्च्छितः ।

1) *çeshakarmakaraṇe* marg.



न तुष्यतेऽसावितरेतरेण ।
दोषा अमी कर्मरते भवन्ति ॥
महत्या[1] च भोती परिषाय तुष्टो ।
स दुष्खितो भोति तया विहीनः ।
संकीर्ण भोती सयथेह[2] गर्दभो ।
दोषा अमी कर्मरते भवन्ति ॥ पे ॥
दिवा च रात्रौ च अनन्यचित्तो ।
भक्ते च चोडे[3] च भवत्यभीक्ष्णं ।
स्वनर्थिको भोति गुणैः स सर्वदा ।
दोषा अमी कर्मरते भवन्ति ॥
कृत्यान्यसौ पृच्छति लौकिकानि ।
अयुक्तमन्त्रैश्च रतिं प्रयाति ।
युक्तैश्च मन्त्रैः स न विन्दते रतिं ।
दोषा अमी कर्मरते भवन्ति ॥ पे ॥

अथ खलु मैत्रेयो बोधिसत्वो महासत्वो भगवन्तमेतदवोचत् । सुपरीत्तप्रज्ञास्ते भगवन् बोधिसत्वा भविष्यन्ति विहीनप्रज्ञा ये ऽग्रधर्मान् वर्जयित्वा हीनानि कर्माण्यारप्स्यन्ते ॥ एवमुक्ते भगवान्मैत्रेयं बोधिसत्वं महासत्वमेतदवोचत् । एवमेतन्मैत्रेय । एवमेतद्यथा वदसि [59 b] सुपरीत्तप्रज्ञास्ते बोधिसत्वा भविष्यन्ति ये ऽग्रधर्मान्परिवर्जयित्वा हीनानि कर्माण्यारप्स्यन्ते । अपि त्वारोचयामि ते मैत्रेय प्रतिवेदयामि ते । न ते बोधिसत्वास्तथागत-

1) Apparently to be scanned as dissyllable, if the reading be correct.

2) *Sayathā* is the form (cf. *saced*) postulated by Trenckner (apud Childers 473) as the original of Pali *seyyathā*; though of course *sa* may be here simply the pronoun.

3) Evidently a proverbial phrase for 'food and raiment'. Cf. Saddh.-P. cited by B. R. s. v. *coḍa*.

शासने प्रव्रजिता येषां नास्ति योगो नास्ति ध्यानं नास्ति प्रहाणं नास्त्यध्ययनं नास्ति
बाहुश्रुत्यपर्येष्टिः। अपि तु मैत्रेय ध्यानप्रहाणप्रभावितं तथागतशासनं ज्ञानसंस्कृतं ज्ञा-
नसमाहितं अभियोगप्रभावितं। न गृहिकर्मान्तवैयापृत्य[1]प्रभावितं। अयुक्तयोगानामेतत्कर्म
संसाराभिरतानां यदुत वैयापृत्यं [1]लौकिककृत्यपलिगोधः। न तत्र बोधिसत्वेन स्पृहो-
5 त्पादयितव्या। सचेन्मैत्रेय वैयापृत्या[1]भिरतो बोधिसत्वः सप्तरत्नमयैः स्तूपैरिमं त्रिसाहस्र-
महासाहस्रं लोकधातुं पूरयेत्। नाहं तेनाराधितो भवेयं न मानितो नापि सत्कृतः॥
पे॥ तत्र जम्बूद्वीपः पूरितः स्याद्वैयापृत्यकरैर्बोधिसत्वैः। सर्वैस्तैरेकस्योद्देशस्वाध्याया-
भियुक्तस्य बोधिसत्वस्योपस्थानपरिचर्या करणीया। जम्बूद्वीपप्रमाणैश्चोद्देशस्वाध्यायाभि-
युक्तैर्बोधिसत्वैरेकस्य प्रतिसंलयनाभियुक्तस्य बोधिसत्वस्योपस्थानपरिचर्या कर्तव्या॥
10 पे॥ तत्कस्य हेतोः। दुष्करमेतत्कर्म यदुत प्रज्ञाकर्म। उत्तरं निरुत्तरं सर्वत्रैलोक्यप्र-
तिविशिष्टमभ्युद्गतं तस्मात्तर्हि मैत्रेय बोधिसत्वेन योगार्थिकेन वीर्यमारब्धुकामेन प्रज्ञा-
यामभियोक्तव्यमिति॥

प्रपञ्चाराममधिकृत्याह '

अष्टाक्षणा[2] तस्य न भोन्ति दूरे।
15 क्षणासंपदा[3] तस्य न भोति श्रेष्ठा।
एते अनर्था स्य भवन्ति नित्यं।
दोषा अमी तस्य प्रपञ्चचारिणः॥ पे॥
दोषानिमान्सम्यगवेत्य पण्डितः सर्वान्प्रपञ्चान्परिवर्जयीत।
सुलभा अनर्था हि प्रप[60 a]ञ्चचारिणः।
20 तस्मात्प्रपञ्चेन न संवसेत॥

1) I retain here (cf. contra 50. 15, 55. 6) the MS. reading, finding some authority (Maṅkha ap. Zachariae, Beitr. ind. lex. p. 82) for the form.
2) Supra p. 2. 1, 4; cf. M. Vyutp. cxx. 1.
3) Dh.-s. § 134.



यायाच्छतं योजनकं परं वरं।
यत्र प्रपञ्चो स्तिय[1] विग्रहो वा।
न तत्र वासं न निकेतु कुर्यान्मुहूर्त्तमात्रं स्तिय[1] यत्र क्लेशः॥
नार्थार्थिकाः प्रव्रजिता गुणार्थिका।
5 मा विग्रहं कुर्वथ दुस्तचित्ताः।
न वोऽस्ति क्षेत्रं न कृषिर्वणिज्या।
स्युर्यस्य अर्थाय प्रपञ्च एते॥
न पुत्र धीता न च वोऽस्ति भार्या।
न चास्य मित्रं न च बन्धुवर्गः।
10 दास्यो न दासा न च ईश्वरत्वं।
मा विग्रहं कुर्वथ प्रव्रजित्वा॥
काषायवस्त्राणि गृहीत्व श्रद्धया।
शान्तप्रशान्तैर्हि निषेवितानि।
शान्तप्रशान्ता उपशान्त भोथ।
15 प्रपञ्च वर्जित्व जनेथ क्षान्तिम्॥
आशीविषांस्तथ रौद्रचित्तान्।
नरकाश्च तिर्यग्विषयो यमस्य।
प्रपञ्चचारस्य न भोन्ति दूरे।
तस्माद्धि क्षान्तौ जनयेत वीर्यम्॥ पे॥
20 इमेन योगेन लभेत शुद्धिं।
क्ष[प][2]यित्व कर्मावरणं अशेषं।
धर्षेति मारं सचलं सवाहनं यो धीरु तस्यैव जनेति क्षान्तिम्' इति॥

1) Apparently for *syāt* (Pali *siyā*; Açoka *siyā̆*).
2) *pa* added in margin; but the whole line seems corrupt as regards metre.

संक्षेपतस्तत्रानर्थविवर्जनमुक्तं । तस्मात्तर्हि मैत्रेय बोधिसत्वयानिकेन कुलपुत्रेण वा कुलदुहित्रा वा पश्चिमायां पञ्चशत्यां[1] सद्धर्मप्रलोपे वर्तमानेऽक्षतनानुपहतेन स्वस्तिना परिमोक्तुकामेन सर्वकर्मावरणानि क्षपयितुकामेनासंसर्गाभिरतेन भवितव्यमरण्यवनप्रान्तवासिनानभियुक्तसत्वपरिवर्जितेनात्मस्खलितगवेषिणा परस्खलितागवेषिणा तूष्णीभावाभिरतेन प्रज्ञापारमिताविहाराभिरतेनेति ॥

आर्यरत्नमेघेऽप्यनर्थवर्जनमुक्तं । तावत्पिण्डाय चरति यावदस्य कायस्य प्राप्तिर्भवति । अन्यत्र येषु स्थानेषु चण्डा वा कुक्कुरास्तरुणवत्सा वा गावः प्रकृतिदुःशीला वा तिर्यग्योनिगताः ' विहेठनाभिप्राया वा स्त्रीपुरुषदारकदारिका जुगुप्सि[60 b]तानि वा स्थानानि ' तानि सर्वेण सर्वं वर्जयतीति ॥

अनेनैतद्दर्शितं भवति यद्दृष्टेऽपि बाधाकर एवंविधे[2] ' तद्वर्जयत आपत्तिर्भवतीति ॥

अथ यदेवमाद्यनर्थवर्जनमुक्तं केनैतल्लभ्यते सर्वनिष्फलस्यन्दवर्जनात् । फलमत्र परार्थं[3] । तदर्थं यः स्यन्दो[4] न संवर्तते ' स निष्फलत्वाद्वर्जयितव्यः ॥

यथा चन्द्रप्रदीपसूत्रे कायसंवरमध्ये पठ्यते । न हस्तलोलुपो भवति न पादलोलुपः हस्तपादसंयत इति ॥

तथा दशधर्मकसूत्रेऽपि देशितं हस्तविक्षेपः पादविक्षेपोऽधावनं परिधावनं लङ्घनं प्लवनमिदमुच्यते कायदौष्ठुल्यमिति[5] ॥

---

1) *pañcās*° MS. I have again followed the Tib.; see p. 88, n. 6.

2) °*karam evaṃvidhaṃ*, MS.

3) *satvārthaḥ* corrected to *parārthaḥ*. The Tib. (73. b. 7) གཞན་གྱི་དོན་ confirms our reading.

4) *syanda* (*syandana* p. 119. 1) apparently = 'waste, streaming away'. The Tib. has སྦྱོང་བ་ 'cleaning away', 'removal'; compare the beginning of Chapter VI.

5) Hitherto in lexx. only; M. Vyutp. cix. 20. cited and corrected in Böhtl.[2] Nachtr. Cf. Pali *duṭṭhulla*.



आर्यधर्मसंगीतिसूत्रे तु यथा बोधिसत्वानां परार्थादन्यत्कर्म न कल्पते । तथा स्पष्टमेव परिदीपितं यत्किञ्चिद्भगवन् बोधिसत्वनां कायकर्म यत्किञ्चिद्वाक्कर्म यत्किञ्चिन्मनस्कर्म तत्सर्वं सत्वावेक्षितं प्रवर्तते महाकरुणाधिपतेयं[1] सत्वहिताधिष्ठाननिमित्तं सर्वसत्वहितसुखाध्याशयप्रवृत्तं ' स एवं हिताशयः एवं संज्ञोभवति ' सा मया प्रतिपत्तिः प्रतिपत्तव्याया सर्वसत्वानां हितावहा सुखावहा च ॥ पे ॥ आयतनेषु शून्यग्रामवत्प्रत्यवेक्षणा प्रतिपत्तिः । न चायतनपरित्यागं स्पृहयतीति ॥

आर्यगगनगञ्जसूत्रेऽप्युक्तं । तद्यथापि नाम छिद्रान्मारुतः प्रविशति ' एवमेव यतो यत एव चित्तस्य छिद्रं भवति ततस्तत एव मारोऽवतारं लभते ' तस्मात्सदाछिद्रचित्तेन बोधिसत्वेन भवितव्यं ' तत्रेयमछिद्रचित्तता यदिदं सर्वाकारज्ञतायाः शून्यतायाः परिपूरिरिति[2] ॥

का पुनरियं सर्वाकारवरोपेता शून्यता ' येयं बोधिसत्वचर्याया अपरित्यागेनाभ्यस्यमाना ' अभ्यस्ता वा ' सर्वभावशून्यता । एषा च रत्नचूडसूत्रे विस्तरेणाख्याता ॥

तथाक्षयमतिसूत्रेऽपि दर्शितं । पापका[61 a]नामकुशलानां धर्माणां प्रहाणाय छन्दं जनयतीत्यत्र[3] प्रस्तावे यानि चान्यानि पुनः कानिचिदन्यान्यपि चित्तविक्षेपकराणि यानि समाधिस्कन्धस्य विपक्षाय संवर्तन्ते ' अयमुच्यते समाधिविपक्षः । यावदिमे उच्यन्ते पाप[का] अकुशला धर्मा इति ॥

शिक्षासमुच्चये शीलपारमितायामनर्थविवर्जनं पञ्चमः परिच्छेदः ॥ ॥

---

1) A form new to Skt.; but see Ch. s. v. *ādhipateyya*.

2) Hitherto in lex. only. «Erfüllung» Mahāvyutp. 244. 71. Richtig Pali *pāripūrī*», Böhtl.[2] Nachtr.

3) M. Vyutp. xxxix. 2.

## VI.

## आत्मभावरक्षा षष्ठः परिच्छेदः

उक्तं निष्फलस्पन्दवर्जनं। कथमेतत्सिध्येदित्याह[1]। एतत्सिध्येत्सदा स्मृत्येति ॥

द्वादशेमाः स्मृतयो निष्फलस्पन्दवर्जनाय संवर्तन्ते। यदुत ' तथागताज्ञानतिक्रमानुपालनविपाकगौरवस्मृतिः। सर्वकायस्य निश्चलस्वभावताप्रतिष्ठितताऽनुस्मृतिः ' सति सत्त्वार्थे यदङ्गमनुपयोगि तद् दृढतरस्मृत्यपेक्षानिश्चलमाध्यक्छन्दपरायत्तीकृतं सर्वधीर[2]चेष्टास्मृतिः। न चास्य भयोत्सवादिसंबन्धसंभ्रमे[3] ऽङ्गमुक्त[4]स्मृतिः। ईर्यापथचतुष्काक्षेपनिरूपणास्मृतिः। अन्तरान्तरा चेर्यापथविकोपा[5]रक्षणार्थमीर्यापथसंपदवलोकनस्मृतिः। भाषणकाले चातिप्रसादौद्धत्यसंरम्भपक्षपातादिवशादतिमात्राप्रासादिकहस्तपादशिरोमुखविकारनियमनस्मृतिः। यः श्रोता वक्तव्यः स यावन्मात्रेण ध्वनिनार्थं जानाति ' तदनतिरेकेण स्वरेण भाषणस्मृतिरन्यत्र पराशङ्कादोष[6]संभवात्। अशिक्षितजनसमागमसङ्कटे स्वचित्ततच्चित्तप्रसादनादितात्पर्यस्मृतिः। चित्तमत्तद्विपस्य[7] शमथस्तम्भे नित्यबद्धस्मृतिः। मुहुर्मुहुश्च चित्तावस्थाप्रत्यवेक्षणास्मृतिः। महाजनसंपाते प्रायोऽन्यकार्यत्यागेनापि यथोक्तस्मृतिरक्षातात्पर्यस्मृतिरिति ॥

1) For our author's views on the importance of *smṛti*, compare Bodhicaryāvatāra Ch. V.

2) *tyāgadāne* marg.

3) See Bodhic. V. 42 for the same compound.

4) Tib. (74. b. 6) ལུས་བསྒྱུར་ «having moved the limbs, agitated the body» (?).

5) The compound is new. Tib. འཁྲུགས་པ་ 'disorder'.

6) *atyuccanīcatva* marg.

7) Cf. Bodhic. V 2, 3 for the metaphor.



एवमेताभिः स्मृतिभिर्निष्फलस्पन्दनवर्जनं सिध्यति। सा च स्मृतिस्तीव्रादराद्भवेत्। तत्रादरः कार्येषु स[61 b]र्वभावेनाभिमुख्यम् ' अवज्ञाप्रतिपक्षः। अयं चादरः शमथमाहात्म्यं ज्ञात्वा तात्पर्येण जायते। कस्तावदयं शमो नाम ' य आर्याक्षयमतिसूत्रे शमथ उक्तः ॥

तत्र कतमा शमथाक्षयता। या चित्तस्य शान्तिरुपशान्तिरविक्षेपकेन्द्रियसंयमः ' अनुद्धतता ' अनुन्नहनता अचपलता अचञ्चलता सौम्यता गुप्तता कर्मण्यता आजानेयता[1] एकाग्रता एकारामता[2] संगणिकावर्जनता विवेकरतिः कायविवेकश्चित्ताविभ्रमो ऽरण्यमुखमनसिकारताल्पेच्छता। यावदीर्यापथगुप्तिः कालज्ञता[3] समयज्ञता मात्रज्ञता मुक्तिज्ञता। सुभरता[4] सुपोषतेत्यादि ॥

किं पुनरस्य शमस्य माहात्म्यं यथाभूतज्ञानजननशक्तिः ' यस्मात्समाहितो[5] यथाभूतं प्रजानातीत्यवदन्मुनिः ॥

यथोक्तं धर्मसंगीतौ। समाहितमनसो यथाभूतदर्शनं भवति। यथाभूतदर्शिनो बोधिसत्त्वस्य सत्त्वेषु महाकरुणा प्रवर्तते। एवं चास्य भवति। इदं मया समाधिमुखं सर्वधर्मयथाभूतदर्शनं च सर्वसत्त्वानां निष्पादयितव्यं। स तया महाकरुणया संचोद्यमानो ऽधिशीलमधिचित्तमधिप्रज्ञं च शिक्षां परिपूर्या[6] चतुरां सम्यक्संबोधिमभिसंबुध्यते। तस्मान्मया शीलसुस्थितेनाप्रकम्प्येनाशिथिलेन भवितव्यमिति। इदं शमथमाहात्म्यमात्मनः परेषां चानन्तापायादिदुःखसमतिक्रमानन्तलौकिकलोकोत्तरसुखसंपत्प्रकर्षपारप्राप्त्यात्मकमवगम्य तदभिलाषेणातापो भावयितव्यः ' आदीप्तगृहान्तर्गतेनेव शीतलजलाभिलाषिणा ' तेन तीव्र आदरो भवति शिक्षासु ' तेनापि स्मृतिरुपतिष्ठति। उपस्थितस्मृतिर्निष्फलं वर्जयति।

1) See p. 26 note 3 and add ref. to Burnouf, Lotus p. 289 and Vaijayantī p. 111, 187. The present abstract form is new.

2) B. and R. refer to Çat. Br. 11. 5.7.1 (= Weber p. 867) only.

3) For this group cf. M. Vyutp. (126. 41—43).

4) Hitherto in M. Vyutp. (126. 28) only.

5) This paragraph is cited in the comm. to the Bodhicaryāvatāra, Ch. IX, (ed. de la Vallée-Poussin, p. 237), with variants: *asya çamathasya . . . tasyātmāhito* [for *tasmāt samāhito*?] and °*uktavān munir iti*. Compare *ibid.* p. 235. 15: *samāhita cittasya . . yathābhūtaparijñānam utpadyata iti.*

6) Cf. 117. 10 supr.

यश्च निष्फलं वर्जयति तस्यानर्था न संभव[62 a]न्ति। तस्मादात्मभावं रक्षितुकामेन स्मृतिमूलमन्विष्य[1] नित्यमुपस्थितस्मृतिना भवितव्यं॥

अत एवोग्रपरिपृच्छायां गृहिणं बोधिसत्त्वमधिकृत्योक्तं। तेन सुरामैरेयमद्यप्रमादस्थानात्प्रतिविरतेन भवितव्यममत्तेनानुन्मत्तेनाचपलेनाचञ्चलेनासंभ्रान्तेनामुखरेणानुन्नडे-
5 [2]नानुद्धतेनोपस्थितस्मृतिसंप्रजन्येनेति॥ अत्रैव च प्रव्रजितबोधिसत्त्वमधिकृत्योक्तं स्मृतिसंप्रजन्यस्याविक्षेप इति॥

तत्र स्मृतिः आर्यरत्नचूडसूत्रे ऽभिहिता। यया स्मृत्या सर्वक्लेशानां प्रादुर्भावो न भवति। यया स्मृत्या सर्वमारकर्मणामवतारं न ददाति। यया स्मृत्या उत्पथे वा कुमार्गे वा न पतति। यया स्मृत्या दौवारिकभूतया[3] सर्वेषामकुशलानां चित्तचैतसिकानां धर्माणामवका-
10 शं न ददातीयमुच्यते सम्यक्स्मृतिरिति॥

संप्रजन्यं तु प्रज्ञापारमितायामुक्तं। चरंश्चरामीति प्रजानाति' स्थितः स्थितो ऽस्मीति प्रजानाति' शयानः शयित इति प्रजानाति। निषण्णो निषण्णो ऽस्मीति प्रजानाति' यथा यथा चास्यः कायः स्थितो भवति तथा तथैव प्रजानाति॥ पे॥ सोऽतिक्रामन्वा प्रतिक्रामन्वा संप्रजानंश्चारी[4] भवति। आलोकिते विलोकिते संमिञ्जिते[5] प्रसारिते संघाटीपट्-
15 पात्रचीवरधारणे' अशिते पीते खादिते निद्राक्लमप्रतिविनोदने[6] आगते गते स्थिते निषण्णे सुप्ते जागरिते भाषिते तुष्णीभावे प्रतिसंलयने संप्रजानंश्चारी भवतीति॥

---

1) *ātmarakshāmūlakāraṇam smṛtir iti* marg.

2) *Unnaḍa* is new to Skt.; though Ch. quotes a Pali *unnaḷa* which the comm. explains by *mānanaḷam ukkhipitvā*. Thus *anunnaḍa* would differ little in meaning from *anuddhata* immediately following. The Tib. equivalent appears to be མི་རྙོད་པ་ (76 a. 2) 'not furious' (?).

3) Cf. Bodhic. V. 33.

4) The MS. has °*jānacārī* here and °*nancā*° just below.

5) Cf. Senart, Mhv. I. 418; and Divyāv. 473. 6.

6) 'Dispelling'. Noun-form new in Skt.; though Ch. gives *paṭivinodana*.



शीलं हि समाधिसंवर्तनीयं॥[1]

यथोक्तं चन्द्रप्रदीपसूत्रे। क्षिप्रं समाधिं लभते निरङ्गणं[2]। विशुद्धशीलेऽस्मिन्नानुशंस[3] इति॥ अतोऽवगम्यते ये केचित्समाधिहेतवः प्रयोगास्ते शीलान्तर्गता इति। तस्मात्समाध्यर्थि[62 b]ना स्मृतिसंप्रजन्यशीलेन भवितव्यं। तथा शीलार्थिनापि समाधौ यत्नः
5 कार्यः तत्रैव सूत्रे वचनात्।

ध्यानानुशंसेषु हि पठ्यते।

नासौ भोति अनाचारो आचारे सुप्रतिष्ठितः।
गोचरे चरते योगी विवर्जेति अगोचरं॥
निष्परिदाहविहारी[4] गुप्त इन्द्रियसंवृत' इति॥

10 एताभ्यां च शीलसमाधिभ्यामन्योन्यसंवर्धनकराभ्यां चित्तकर्मपरिनिष्पत्तिः[5] एतावती चेयं बोधिसत्त्वशिक्षा यदुत चित्तपरिकर्म' एतन्मूलत्वात् सर्वसत्त्वार्थानां॥

उक्तं ह्यार्यरत्नमेघे। चित्तपूर्वङ्गमाश्च सर्वधर्माः' चित्ते परिज्ञाते सर्वधर्माः परिज्ञाता भवन्ति। अपि तु

चित्तेन नीयते लोकः चित्तं चित्तं न पश्यति।
15 चित्तेन चीयते कर्म शुभं वा यदि वाशुभम्॥

चित्तं भ्रमते ऽलातवत्। चित्तं भ्रमते तुरङ्गवत्। चित्तं दहते दवाग्निवत्।

---

1) *samādhaye saṃvartate* marg.

2) Tib. ཉོན་མོངས་མེད་པ་ (76 b 2). See Rh. Davids in J. R. A. S. for 1898, and Lal.-v. apud Burnouf. Lot. 865.

3) °स्मिन आनु° MS. I have preserved the ā of the MS. (cf. Pali), though elsewhere it is written with ă.

4) *paridāha* is new as a noun in Skt.: but cf. Divyāv. 420. 6 and Pali usage.

5) Vajracch. p. 40. 8 sqq.

चित्तं हरते महाम्बुवत्॥ स एवं व्युपपरीक्षमाणा[1]श्चित्ते सूपस्थितस्मृतिर्विहरति न चित्तस्य वशं गच्छति। अपि तु चित्तमेवास्य वशं गच्छति। चित्तेनास्य वशीभूतेन सर्वधर्मा वशीभवन्तीति॥

तथार्यधर्मसङ्गीतिसूत्रेऽप्युक्तं। मतिविक्रमो बोधिसत्त्व आह। योऽयं धर्मो धर्म इत्युच्यते नायं धर्मो देशस्थो न प्रदेशस्थोऽन्यत्र स्वचित्ताधीनो धर्मः तस्मान्मया स्वचित्तं स्वाराधितं स्वधिष्ठितं सुसमारब्धं सुनिगृहीतं कर्तव्यं। तत्कस्य हेतोः। यत्र चित्तं तत्र गुणादोषाः' नास्ति निश्चित्ततायां[2] गुणदोषः' तत्र बोधिसत्त्वो दोषेभ्यश्चित्तं निवार्य गुणेषु प्रवर्तयति॥ तदुच्यते' चित्ताधीनो धर्मो धर्माधीना बोधिरिति॥ अयं भगवन् धर्म[3] समादानः सुखाभिसंबोधाय संवर्तत इति॥

आर्यगण्डव्यूहसूत्रे ऽपि वर्णितं। स्वचित्ताधिष्ठानं सर्वबोधिसत्त्वचर्या [63 a] स्वचित्ताधिष्ठानं सर्वसत्त्वपरिपाकविनयः॥ पे॥ तस्य मम कुलपुत्रैवं भवति। स्वचित्तमेवोपस्तम्भयितव्यं सर्वकुशलमूलैः। स्वचित्तमेवाभिष्यन्दयितव्यं धर्ममेघैः। स्वचित्तमेव परिशोधयितव्यमावरणीय धर्मेभ्यः। स्वचित्तमेव [दृ][4]ढीकर्तव्यं वीर्येणेत्यादि॥

तथात्रैव मायादेव्यदर्शनाकुलीभूते आर्यसुधने रत्ननेत्राया नगरदेवतायास्तद्दर्शनार्थमियमनुशासनी।[5] चित्तनगरपरिपालनकुशलेन[6] ते कुलपुत्र भवितव्यं सर्वसंसारविषयरत्य-

1) This compound is new; the Tib. བརྟག་པས་ agrees with the meaning 'examine', assigned to *upaparīksh* in Divy-Index.

2) The abstract form is new; but cf. the *niçcittasamādhi* of M. Vyutp. XXI. 34.

3) *dharma* MS.

4) Tib. བརྟན་པ་

5) The passage that follows is considerably abridged from the text as preserved in MS. H (see p. 34 note 4) ff. 226. a. 5 — 227. b. 7.

6) °*prayuktena*. H.



संक्रमनतया। चित्तनगरालंकारप्रयुक्तेन ते कुलपुत्र भवितव्यं दश[1]तथागतबलाध्यालम्बन[2]तया। चित्तनगरपरिशोधनप्रयुक्तेन ते कुलपुत्र भवितव्यमीर्ष्यामात्सर्यशाठ्यापनयनतया। चित्तनगरविवर्धनाभियुक्तेन ते कुलपुत्र भवितव्यं सर्वज्ञतासंभारमहावीर्यवेगविवर्धनतया। चित्तनगरदुर्योधनदुरासदताभिर्निर्हारप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वक्लेशमारकायिक[3]पापमित्रमारचक्रानवमर्दनतया[4]। चित्तनगरप्रविस्तरणप्रयुक्तेन ते कुलपुत्र भवितव्यं महामैत्रीसर्व[5]जगत्स्फुरणतया। चित्तनगरप्रतिच्छादनप्रयुक्तेन ते कुलपुत्र भवितव्यं विपुलधर्मच्छत्रसर्वाकुशलधर्मप्रतिपक्षाभिनिर्हरणतया। चित्तनगरविवरण[6]प्रयुक्तेन ते कुलपुत्र भवितव्यं आध्यात्मिकबाह्यवस्तु सर्वजगत्संप्रापणतया। चित्तनगरदृढस्थामाभिनिर्हारप्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वाकुशलधर्मस्वसन्तत्यवसनतया[7]। यावदेवं चित्तनगरविशु[8]द्ध्यभियुक्तेन कुलपुत्र बोधिसत्त्वेन शक्यं सर्वकुशलमूलसमार्जनमनुप्राप्तुं। तत्कस्य हेतोः। तथा हि तस्य बोधिसत्त्वस्यैवं चित्तनगर[63 b]परिशुद्धस्य सर्वावरणानि पुरतो न संतिष्ठन्ते।[9] बुद्धदर्शनावरणं वा धर्मश्रवणावरणं वेत्यादि।

तस्माद्व्यवस्थितमेवं। चित्तपरिकर्मैव बोधिसत्त्वशिक्षेति। तच्चाचपलचेतसः॥ शमाच्च न चलेच्चित्तं बाह्यचेष्टानिवर्तनात्॥ असंप्रजन्यपरतन्त्रस्य मुषितस्मृतेश्च चित्तं चलति समीहितादालम्बनादन्यत्र नीयमानत्वात्। यदा तु स्मृतिसंप्रजन्येन बाह्याश्चेष्टा निवर्ति-

1) Dh.-s. § 76.

2) *adhyālambana* (noun-form new) app. = 'reaching'; for the verb, cf. Saddh.-P. ap. B. & R., who however propose to correct the text.

3) Cf. *brahmakāyika* in Sk. & Pali.

4) -*mṛdyat*° H. Compare p. 32. 11 supra.

5) °*sarva*° om. A.

6) °*dvāraviv*° H; and the marg. of A. further explains: *vastubodhitaṃ jagat syāc citte vivṛte.*

7) °*asaṃbhavanatayā* H.

8) *pariçuddhy*° H.

9) *na tishṭhanti.* A.

ता भवन्ति तदा तद्वशत्वादेकस्मिन्नालम्बने निबद्धं यावदिष्यते तावत्तिष्ठति। ततश्च पूर्ववदनुशंसविस्तरः। अचलत्वेऽपि[1] च सत्त्वार्थक्षमो भवत्येव प्रसादकरत्वात्' कथं॥

सर्वत्राचपलमन्द[2]मितस्निग्धाभिभाषणात्।
आवर्जयेज्जनं भव्यमादेयश्चापि जायते॥

एतदेव च बोधिसत्त्वस्य कृत्यं यदुत सत्त्वावर्जनं। यथार्यधर्मसंगीतिसूत्रे' आर्यप्रियदर्शनेन बोधिसत्त्वेन परिदीपितं।[3] तथा तथा भगवन् बोधिसत्त्वेन प्रतिपत्तव्यं यत्सहदर्शनेनैव सत्त्वाः प्रसीदेयुः। तत्कस्माद्धेतोः। न भगवन् बोधिसत्त्वस्यान्यत्करणीयमस्त्यन्यत्र सत्त्वावर्जनात्। सत्त्वपरिपाक एवेयं भगवन् बोधिसत्त्वस्य धर्मसंगीतिरिति॥

एवं पुनरक्रियमाणे को दोष इत्याह।

अनादेयं तु तं लोकः परिभूय जिनाङ्कुरं।
भस्मच्छन्नो यथा वह्निः[4] पच्येत नरकादिषु॥

यथा प्रागुपदर्शितं॥

येन चास्य परिभव एवमनर्थो रत्नमेघे जिनेनोक्तस्तेन संक्षेपसंवरः। येनाप्रसादः सत्त्वानां तद्यत्नेन विवर्जयेदिति॥

यथाह। कतमे च ते बोधिसत्त्वसमुदाचाराः। यावदिह बोधिसत्त्वो नास्थाने विहरति नाकाले। नाकालभाणी भवति नाकालज्ञो भवति नादेशज्ञो भवति। यतो निदानमस्यान्तिके सत्त्वा अप्रसादं प्रतिवेदयेयुः' स सर्वसत्त्वानुरक्षया [64 a] ' आत्मनश्च बोधिसंभारपरिपूरणार्थं संपन्नेर्यापथो भवति मृदुभाणी मन्दभाणी ' असंसर्गबहुलः ' प्रविवेकाभिमुखः ' सुप्रसन्नमुख इति॥

---

1) *vinā smṛtisamprajanyatām* . . (older hand) partly obliterated; *idānīm* (newer hand) marg.

2) °*lo manda*° MS.

3) 'make clear, illustrate' like Pali *paridīpeti* — a usage new to Skt.

4) *channā* . . *vahniṃ* MS.



अत एव धर्मसंगीतिसूत्रे देशितं। यः सत्त्वान् रक्षति स शीलं रक्षतीति। अनया[1] कनीयेन मातृग्रामेण सह रहोवस्थादिषु लोकरक्षा च कृता स्यात्। एवं भोग्येषु जलस्थलेषु मूत्रपुरीषश्लेष्मपूयादीनां कुत्सितानां रहस्यरहसि चोत्सर्गं न कुर्याद्देवमनुष्यचित्तरक्षार्थं॥

सद्धर्मस्मृत्युपस्थाने च रह उत्सिष्टं[2] कृत्वा ऽनुत्सिष्टाहारेषददतः प्रेतगतिः पठ्यते॥

तथा बोधिसत्त्वप्रातिमोक्षेऽप्यप्रमादपरिहार उक्तः। न पुरतो दन्तकाष्ठं[3] खादितव्यं न पुरतः खेटे निक्षिप्तव्य इति। एष च गौरवलज्जाविधिः सर्वत्र द्रष्टव्यो न ब्रह्मचारिष्वेव। अत्र तु सूत्रे ब्रह्मचार्यधिकारः तेषु गुरुतरापत्तिभयसंदर्शनार्थं॥ यथात्रैवाह। नोच्चैर्भाषिणा भवितव्यमिति॥ न चायं विधिः प्रादेशिकः। तथा ब्रह्मपरिपृच्छायामप्युक्तं[4] न च वधसदृशेन बोधिसत्त्वेन भवितव्यमिति। तथा प्रातिमोक्षादपि लोकाप्रसादकरमन्वेष्य वर्जनीयं। तत्र तावद्॥

मुखपूरं[5] न भुञ्जीत सशब्दं प्रसृताननः।
[6]प्रलम्बपादं नासीत न बाहुं मर्दयेत्समम्॥

एवं स्वयमप्युत्प्रेक्ष्य दृष्ट्वा श्रुत्वा च लोकाप्रसादं रक्षेत। अप्रसादकरवचनवर्जनं तु न सुकरमिति स्मरणबोधनार्थमुपदर्श्यते।

---

1) *diçā* marg. With this paragraph compare Bodhic. V. 93 a.

2) So clearly the MS. for the usual *ucchishṭa*.

3) These precepts do not occur in the *Bhikkhu-pātimokkha* of the Pali; but compare precepts 78, 79 of the similar work preserved in Chinese (Beal, *Catena* p. 236). Cf. Bodhic. V. 91.

4) K.F. 253.

5) Cf. Pali *kucchipūram* 'bellyfull'. This stanza occurs at Bodhic. V. 92.

6) This precept which has no parallel in the Pratimokshas as known from Pali, or as yet translated from Chinese interestingly illustrates a familiar posture for kings and other *laymen* found in Buddhist art, e. g. in the Amaravati-sculptures (Fergusson, Tree and Serpent Worship p. 193 fin.).

आर्यसागरमतिसूत्रे देशितं। नावलीनवचनो भवति ' न व्यवकीर्णवचनः ' नावस्यन्दनवचनः ' नोज्ज्वालनवचनः ' न रागानुनीतवचनः ' न प्राकृतवचनः। नासंरक्षितवचनः ' न व्यापादसंधुक्षणवचनः ' न चञ्चलवचनः ' न चपलवचनः। न नटरङ्ग[64 b]वचनः ' न मुखसाद्यवरोपणवचनो भवतीति ॥

आर्यतथागतगुह्य[1]सूत्रेऽप्याह। न खलु पुनः कुलपुत्र बोधिसत्त्वस्य वाग्रक्ता वा दुष्टा वा मूढा वा क्लिष्टा वा ' [2]क्षुण्णव्याकरणा वा स्वपक्षोत्कर्षणवचना वा ' परपक्षनिग्रहवचना वा ' आत्मवर्णानुनयवचना वा ' परवर्णप्रतिघवचना वा ' प्रतिज्ञोत्तारणवचना वा। आभिमानिकव्याकरणवचना वेति ॥

आर्यदशभूमकसूत्रेऽप्युक्तं। येयं वागमनोज्ञा स्वसन्तानपरसन्तानविनाशनी[3] तथारूपां वाचं प्रहाय। येयं वाक् स्निग्धा मृद्वी मनोज्ञा मधुरा प्रियकरणी मनआपकरणी हितकरणी कर्णसुखा हृदयंगमा प्रेमणी[4] वर्णविष्पष्टा विज्ञेया श्रवणीया अनिश्रिता[5] बहुजनकान्ता बहुजनप्रिया बहुजनमनआपा विज्ञप्रशस्ता सर्वसत्त्वहितसुखावहा मनउत्प्लावकरी मनःप्रह्लादनकरी स्वपरसन्तानप्रमोदनकरी रागद्वेषमोहसर्वक्लेशाप्रशमनी तथारूपां वाचं निश्चारयति। यावदितिहासपूर्वकमपि वचनं परिहार्यं परिहरतीति ॥

आर्यगगनगञ्जसूत्रे तूक्तं। गुरुवचनानवमर्दनतया[6] ' परवचनानाच्छिन्दनतया चादेयवाक्यवचनो भवतीति ॥

---

1) Cf. p. 7 note 5.

2) The reading of MS. is apparently *kshūṇa*: Tib. བྲོགས་པ་ 'bruised, impeded'.

3) *nivāçanī* MS. but the Tib. མ་རུངས་པར་བྱེད་པ་ makes the correction certain (79. b. 7).

4) So MS.; qu. correct to *premaṇīyā* (Lal. v. 59.10)?

5) Apparently, like Pali *anissita* (acc. to Childers p. 217) 'independent'.

6) The Tib. equiv. is གཅོག་ from a root for which Jäschke gives the meaning 'break', both literally and metaphorically ('break a command').



धर्मसंगीतिसूत्रेऽप्युक्तं। गगनगञ्जो बोधिसत्त्व आह। न बोधिसत्त्वेनैषा वाग्भाषितव्या यथापरो व्यापद्येत ' न सा वाग्भाषितव्या यथापरं तापयेत्। न बोधिसत्त्वेन सा वाग्भाषितव्या यत्परो जानीयात्। न सा वाग्भाषितव्या यायार्था निरर्था। न बोधिसत्त्वेन सा वाग्भाषितव्या यया न विद्यामुत्पादयेत्। न सा वाग्भाषितव्या या सत्त्वानां न हृदयंगमा न पौरी न कर्णसुखा [65 a] न सा वाग्भाषितव्येति ॥

संक्षेपतस्तु पराप्रसादरक्षा आर्यसागरमतिसूत्रे देशिता। अपर एक धर्मो महायानसंग्रहाय संवर्तते स्वस्खलितप्रत्यवेक्षणतया सर्वसत्त्वानुरक्षेति ॥

एषा रक्षात्मभावस्य। यथापरैर्न नाश्येत। यथा न परान्न नाशयेत्। अस्य तु ग्रन्थविस्तरस्यायं पिण्डार्थो बोधिसत्त्वेन मनसा नित्यं धारयितव्यः ॥

सुनिश्चलं सुप्रसन्नं धीरं सादरगौरवं।
सलज्जं सभयं शान्तं पराराधनतत्परम् ॥
आत्मसत्त्ववशं नित्यमनवद्येषु वस्तुषु।
निर्माणमिव निर्मानं[1] धारयाम्येष मानसम् ' इति ॥

किमेतावती आत्मभावरक्षा। न हि। किं तर्हि भैषज्यवसनादिभिः सह। तत्र द्विविधं भैषज्यं। सततभैषज्यं ग्लानप्रत्ययभैषज्यं च।

तत्र सततभैषज्यमधिकृत्यार्यरत्नमेघेऽभिहितं। तस्मात्पिण्डपात्रादेकं प्रत्यंशं सब्रह्मचारिणां स्थापयति। द्वितीयं दुष्खितानां तृतीयं विनिपतितानां चतुर्थमात्मना परिभुङ्क्ते। परिभुञ्जानो न रक्तः परिभुङ्क्तेऽसक्तोऽगृद्धोऽनध्यवसितः। अन्यत्र यावदेव कायस्य स्थितये ' यापनायै। तथा परिभुङ्क्ते यथा नातिसंलिखितो[2] भवति। नातिगुरुकायः।

---

1) The play on words is obvious. For *nirmāṇa* (Tib. སྤྲུལ་པ་) compare *nirmāṇakāya* in Wassiljev 127 (137). These stanzas occur at Bodhic. V. 55, 57. with the reading *suniçcitam* in line 1.

2) *kṛça* marg.: compare the gloss in Childers s. v. *sallekhiyam*. Neumann (tr. Majjhiman. pref. p. XVI) objects to the connexion of *sallekha* etc., with √*likh*, but his own derivation (*ibid.* I p. 22) is not convincing.

तत्कस्य हेतोः। अतिसंलिखितो हि कुशलपक्षपराङ्मुखो भवति। अतिगुरुकायो मिद्धा-
वष्टब्धो भवति। तेन तं पिण्डपातं परिभुज्य कुशलपक्षाभिमुखेन भवितव्यमित्यादि ॥

आर्यरत्नराशावप्युक्तं। तेन ग्रामं वा नगरं वा निगमं वा पिण्डाय चरता धर्मसंनाहं
संनह्य पिण्डाय चर्तव्यं। तत्र कतमो धर्मसंनाहः। अमनआपानि रूपाणि दृष्ट्वा न प्रति-
5 हन्तव्यं। मनआपानि दृष्ट्वा नानुनेतव्यं। एवं मनआपामनआपेषु शब्दगन्धरसस्प्रष्टव्येषु
विज्ञप्तेषु नानु[65 b]नेतव्यं न प्रतिहन्तव्यं। इन्द्रियसुसंवृतेनानुत्क्षिप्तचक्षुषा [1]युगमात्रप्रे-
क्षिणा[1]। दान्ताजानेयचित्तेन पूर्वधर्ममनसिकारमनुत्सृजता नामिषप्रक्षिप्तया सन्तत्या पि-
ण्डाय चर्तव्यं सावदानचारिणा च भवितव्यं। यतश्च पिण्डपातो लभ्यते तत्रानुनयो न क-
र्तव्यः यतश्च न लभ्यते तत्र प्रतिघातो नोत्पादयितव्यः। दशकुलप्रवेशे न चैकादशा-
10 त्कुलाद्भिक्षा न लभ्यते। तथापि न परितप्तव्यं एवं च चित्तमुत्पादयितव्यम्। एवं बहु-
कृत्या[2] ह्येते श्रमण[3]ब्राह्मणगृहपतयो न तैरवश्यं मम दातव्यं। इदं तावदाश्चर्यं यन्मामेते
समन्वाहरन्ति। कः पुनर्वादो यद्भिक्षां दास्यन्ति। तेनैवमपरितपता पिण्डाय चर्तव्यं ॥ ये
चास्य सत्त्वाश्चक्षुष आभासमागच्छन्ति स्त्रीपुरुषदारकदारिकाः। अन्तशस्तिर्यग्योनिगता-
स्तत्र मैत्रीकरुणाचित्तमुत्पादयितव्यं। तथाहं करिष्यामि यथा ये मे सत्त्वाश्चक्षुषा आभा-
15 समागच्छन्ति पिण्डपातं वा दास्यन्ति तान्सुगतिगामिनः करिष्यामि। तादृशं योगमाप-
त्स्ये। तेन लूहं[4] वा प्रणीतं वा पिण्डपातं संगृह्य समन्ताच्चतुर्दिशं व्यवलोकयितव्यं। क

1) For both phrases cf. Lalit-v. p. 230 ad fin.

2) Hitherto only found in M. Vyutp. (127. 25); but cf. Pali *bahukicca*.

3) *çravaṇa* MS., a common confusion in MSS.: cf. B. & R. s. v.

4) Cf. Divy. 425.13 and Morris in J.P.T.S. for 1891, pp. 1, 2 and Trans. Or. Congr. (1892) I. 487. The context as well as the Tib. equiv. ཧྲང་ below, where the word occurs twice, shows that the meaning is 'scanty'; and neither 'bad' (Cowell, Böhtlingk) nor 'rough' (Morris). Morris's contention that *lūha* really = *ruksha* seems indeed to be disposed of by the passage at p. 131. 4., where the two occur together.



इह ग्रामनगरनिगमे दरिद्रः सत्त्वः। यस्यास्मात्पिण्डपातात्संविभागं करिष्यामि। यदि
दरिद्रं सत्त्वं पश्यति तेन तत्पिण्डपातात्संविभागः कर्तव्यः। अथ न कञ्चित्सत्त्वं दरिद्रं प-
श्यति। तेनैवं चित्तमुत्पादयितव्यं। सन्त्यनाभासगताः सत्त्वा ये मम चक्षुष आभासं नाग-
च्छन्ति। तेषामितः पिण्डपातादग्रं प्रत्यंशं निर्यातयामि। दत्तादानाः परिभुञ्जतां। तेन त-
त्पिण्डपातं गृहीत्वा तदरण्यायतनमभिरुह्य धौतपाणिना शोभनसमाचारेण श्रमणचारि- 5
त्रकल्प[66 a]समन्वागतेनाधिष्ठानाधिष्ठितेन पर्यङ्कं बद्ध्वा स पिण्डपातः परिभोक्तव्यः ॥
पे ॥ परिभुञ्जता चैवं मनसिकार उत्पादयितव्यः। सन्त्यस्मिन्काये ऽशीतिः क्रिमिकुल-
सहस्राणि। तान्यनेनैवौजसा सुखं फासुं[1] विहरन्तु। इदानीं चैषामामिषेण संग्रहं करिष्या-
मि। बोधिप्राप्तश्च पुनर्धर्मेण संग्रहं करिष्यामि। यदि पुनरस्य लूहं पिण्डपातं भवति ते-
नैवं चित्तमुत्पादयितव्यं। लूहाहारतया मे लघुः कायो भविष्यति प्रहाणक्षम उच्चारप्र- 10
स्रावनिष्यन्दश्च मे परीत्तो भविष्यति। श्रद्धादेयं च परीत्तं भविष्यति। कायलघुता चित्तल-
घुता च मे भविष्यति। अल्पम्लानमिद्धश्च मे भविष्यति[2]। यदा पुनरस्य प्रभूतः पिण्डपातो
भवति तत्रापि मात्राभोजिना[3] भवितव्यं उत्सर्जन[4]धर्मिणा च। ततः पिण्डपातादन्यतरायां
शिलाया[5]मवतीर्यैवं चित्तमुत्पादयितव्यं। ये केचिन्मृगपक्षिसंघा आमिषभोजनेनार्थिकास्ते
दत्तादानाः परिभुञ्जतामिति ॥ 15

पुनराह। तेन सर्वेण रससंज्ञा नोत्पादयितव्या ॥ पे ॥ चण्डालकुमारसदृशेन मया

1) The present passage tends to modify Childers's strictures (s. v. *phāsu*) on the obtuseness of the 'Northern' (Sanskrit-writing) Buddhists. Jacobi (Z.D.M.G. Bd. 34 p. 311) would derive the form from *pra* + *asu*, not from *spārha*, as Ch. Cf. also p. 32, note 1.

2) Here the Tib. adds (81. b. 5) དེ་བཞིན་དུ་སྦྱར་ཏེ་ (= *peyyālam*), as though an omission had been made from the text of the original sūtra.

3) Cf. *mattabhojana*, comm. on Dhammap. 204 (p. 355).

4) *utsṛjanadharmā* MS.

5) Perhaps here in the sense of 'door-post' quoted by B.R. from Lexx.

भवितव्यं । चित्तकायचौक्षेण ' न भोजनचौक्षेण । तत्कस्माद्धेतोः । कियत्प्रणीतमपि भोजनं भुक्तं ' सर्वं तत्पूतिनिष्यन्दपर्यवसानं दुर्गन्धपर्यवसानं प्रतिकूलपर्यवसानं । तस्मान्मया न प्रणीतभोजनाकाङ्क्षिणा भवितव्यं । तेन नैवं चित्तमुत्पादयितव्यं ' पुरुषो मे पिण्डपातं ददाति न स्त्री । स्त्री मे पिण्डपातं ददाति न पुरुषः । दारको मे पिण्डपातं ददाति न दारिका । दारिका मे पिण्डपातं ददाति न दारकः । प्रणीतं लभेऽहं न लूहं । सत्कृत्य लभेऽहं नासत्कृत्य । चपलं लभेऽहं न कृच्छ्रेण प्रविष्टमात्रं च मां समन्वाहरेयुः । न मे कश्चिद्विक्षेपो भवेत् । सुनिहितांल्लभेऽहं[66 b]प्र[णी][1]तान्नानारसांल्लभेऽहम् । न हीनदरिद्रभोजनं लभेऽहं प्रत्युद्गच्छेयुर्मां स्त्रीपुरुषदारकदारिकाः । इमे ते सर्वेऽकुशला मनसिकारा नोत्पादयितव्यः ॥ पे ॥ प्रायेण हि सत्वा रसगृद्धा भोजनहेतोः पापानि कर्माणि कृत्वा नरकेषूपपद्यन्ते । ये ये पुनः[2] संतुष्टा अगृद्धा अलोलुपा रसप्रतिप्रस्रब्धा जिह्वेन्द्रियसंतुष्टाः कियल्लूहेनापि भोजनेन यापयन्ति ' तेषां च्युतानां कालगतानां स्वर्गोपपत्तिर्भवति ' सुगतिगमनं भवति देवमनुष्येषु । ते देवोपपन्नाः सुधां परिभुञ्जते । एवं काश्यप पिण्डचारिकेण भिक्षुणा रसतृष्णां विनिवर्तयित्वा निध्यप्तचित्तेन सुपरिपक्वान् कुल्माषान् परिभुञ्जता न परितप्तव्यम् । तत्कस्माद्धेतोः । कायसंधारणार्थं मार्गसंधारणार्थं मया भोजनं परिभोक्तव्यं ॥ पे ॥ यदि पुनः काश्यप पिण्डचारिको भिक्षुर्मेघाकुलवृष्टिकालसमये वर्तमाने न शक्नुयात् पिण्डायावतर्तुं ' तेन मैत्र्याहारसंनद्धेन धर्मचिन्तामनसिकारप्रतिष्ठितेन द्विरात्रं त्रिरात्रं वा भक्तच्छेदश्छिन्नेन एवं संज्ञोत्पादयितव्या । सन्ति यामलौकिकाः प्रेता दुष्करकर्मकारिणो ये वर्षशतेन खेटपिण्डमप्याहारं न प्रतिलभन्ते । तन्मया धर्मयोनिशश्चिन्ताप्रतिष्ठितेन कायदौर्बल्यं वा चित्तदौर्बल्यं वा नोत्पादयितव्यं ' अधिवासयिष्यामि क्षुत्पिपासां । न पुनरार्यमार्गभावनायां वीर्यं स्रंसयिष्यामि ॥ पे ॥ यत्र कुले पिण्डपातं शुचिं कारयेत्तत्र कुले आसने निषद्य धार्मी कथा कर्तव्या । यावन्न स पिण्डपातः शुचीकृतो भवेत्तेन पिण्डपातं गृहीत्वा उत्थायासनात्प्रक्रमितव्यं । पिण्डचारिकेण काश्यप भिक्षुणा [67 a] नावभासकरेण[2] भवितव्यं न लपना न कुहना[1] कर्तव्या ॥

तत्र कतमोऽवभासः[2] । यत्परेषामेवं वाचं भाषते । लूहो[3] मे पिण्डपातो रूक्षो[3] मे पिण्डपात आसीन्न च मे यावदर्थं भुक्तं । बहुजनसाधारणश्च मे पिण्डपातः कृतः । अल्पं मे भुक्तं जिघत्सितोऽस्मीति । यत्किंचिदेवंरूपमवभासनिमित्तं ' इयमुच्यते चित्तकुहना । सर्वमेतत्पिण्डचारिकेण भिक्षुणा न कर्तव्यं ' उपेक्षकभूतेन । यत्पात्रे पतितं लूहं वा प्रणीतं वा शुभं वाशुभं वा तत्परिभोक्तव्यमपरितप्यमानेनाशयशुद्धेन धर्मनिध्यप्तिबहुलेन । कायजापनार्थ[4]मार्यमार्गस्योपस्तम्भार्थं स पिण्डपातः परिभोक्तव्य इति ॥

तथार्योग्रपरिपृच्छायामप्युक्तं । यस्याश्चान्तिके पिण्डपातं परिभुज्य न शक्नोत्यात्मनः परस्य चार्थं परिपूरयितुमनुजानाम्यहं तस्य पिण्डचारिकस्य बोधिसत्वस्य निमन्त्रणमिति ॥

एवं तावत्सततभैषज्येनात्मभावरक्षा कार्या ' तत्रापि न मत्स्यमांसेन लङ्कावतार[5]सूत्रे प्रतिषिद्धत्वात् ॥

---

1) This I supply on conjecture, the Tib. (82. a. 5) having simply བཟང་པོ 'good'.

2) *punas te* MS.



1) 'Deceit'. B² quotes Jātakam. 28 31 for this word.

2) This usage of *avabhāsa* 'a broad hint', apparently new to Skt., corresponds exactly with that of the Pali *obhāsa* explained by Ch. (together with that of *nimitta*) s. v. (p. 298).

3) Cf. note 4 on p. 128 supra.

4) A Prakritic form of *yāpana*, not hitherto found in the meaning 'maintenance', for which the Pali *yāpana* is commonly used.

5) Very briefly described by Raj. Mitra *Nep. B. L.* For chapter-titles see my *Cat. Buddh. Sk. MSS.* p. 21. Tr. into Chinese A. D. 443 (Nanjio p. 54) K. F. 237. The present passage occurs in Ch. 8 (dealing with *māṃsa-bhakṣaṇa*) at f. 127. b. 2 of MS. Or. 1079 of the Brit. Museum (Wright Coll.) called «W» below; R.A.S. Hodgson 5 (= «H»).

तथा ह्युक्तं । मांसं सर्वमभक्ष्यं कृपात्मनो बोधिसत्त्वस्येति वदामि ॥ पे ॥

[1]स्वाजन्याद्व्यभिचाराच्च शुक्रशोणितसंभवात् ।
उद्वेजनीयं भूतानां योगी मांसं विवर्जयेत् ॥
मांसानि च पलाण्डूंश्च मद्यानि विविधानि च ।
5 गृञ्जनं लशुनं चैव योगी नित्यं विवर्जयेत् ॥
म्रक्षणं वर्जयेत्तैलं शल्यविद्धेषु न स्वपेत् ।
छिद्राछिद्रेषु सत्त्वानां यच्च स्थानं महाभयम्[2] ॥ पे ॥
लाभार्थं हन्यते प्राणी[3] मांसार्थं दीयते धनं ।
उभौ तौ पापकर्माणौ पच्येते रौरवादिषु ॥ यावत्[4] ॥
10 योऽतिक्रम्य मुनेर्वाक्यं मांसं भक्षेत दुर्मतिः[5] ।
लोकद्वयविनाशार्थं दीक्षितः शाक्यशासने ।
ते यान्ति परमं घोरं नरकं पापकारिणः ।
रौरवादिषु रौद्रेषु पच्यन्ते[6] मांसखादकाः ॥
त्रिकोटिशुद्धं मांसं वै अकल्पितमयाचितं ।
15 अचोदितं च नैवास्ति[7] तस्मान्मांसं न भक्षयेत् ।
मांसं न भक्षयेद्योगी मया बुद्धैश्च गर्हितं ।
अन्योन्यभक्षणाः सत्त्वाः क्रव्यादकुलसंभवाः ॥ यावत् ॥
दुर्गन्धः कुत्सनीयश्च उन्मत्तश्चापि जायते ।

1) f. 131 a 3 in W.
2) *pañca sthānaṃ* (°*nā* W.) *mahadbhayam* H.
3) *satvo* W.
4) not in W; nor is there any omission at this point.
5) *bhakshyati durgatiḥ* W.
6) *jāyante* A.
7) *vai nāsti* A.



चण्डालपुक्कसकुले डोम्बेषु[1] च पुनः पुनः ॥
डाकिनीजातियोनौ च मांसादे[2] जायते कुले ।
ऋक्ष[67 b]मार्जारयोनौ च जायतेऽसौ नराधमः ॥
हस्तिकक्ष्ये[3] महामेघे[4] निर्वाणा[5]ङ्गुलिमालिके[6] ।
5 लङ्कावतारसूत्रे च मया मांसं विगर्हितं ॥
बुद्धैश्च बोधिसत्त्वैश्च श्रावकैश्च विगर्हितं ।
खादते यदि निर्लज्ज उन्मत्तो जायते सदा ॥
ब्राह्मणेषु च जायन्ते अथवा योगिनां कुले ।
प्रज्ञावान्धनवांश्चैव मांसाद्यानां विवर्जनात्[7] ॥
10 दृष्टश्रुतविशङ्काभिः सर्वं मांसं विवर्जयेत् ।
तार्किका नावबुध्यन्ते क्रव्यादकुलसंभवाः ॥
यथैष रागो मोक्षस्य अन्तरायकरो भवेत् ।
तथैव मांसमद्यादि अन्तरायकरं[8] भवेत् ॥
वक्ष्यन्त्यनागते काले मांसादा मोहवादिनः ।
15 कल्पिकं निरवद्यं च मांसं बुद्धानुवर्णितं ॥

1) *trācashu* W.
2) °*ādo* W.
3) °*kakshe* MSS. *Hastikakshyā-sūtra* M. Vyutp. LXV. 75; Nanjio 193—4; K.F. 261.
4) K.F. 265. (?)
5) *nirmāṇāng*° W. H.; what work is intended is not clear to me: cf. Wassiljev 149 (161).
6) °*lake* A. The *Aṅgulimālīya-sūtra* (Nanjio 434; KF. 261; Wassiljev 154 (166)) is doubtless meant.
7) So H.: A. and W. are corrupt and unmetrical.
8) °*ādir* . . . °*karo* A °*māṇsādyādyā* . . . °*karo* W.

भेषज्यमिव आहारं[1] पुत्रमांसोपमं पुनः।
मात्रया प्रतिकूलं च योगी पिण्डं समाचरेत्॥
मैत्रीविहारिणा नित्यं सर्वथा गर्हितं मया।
सिंहव्याघ्रमृगाद्यैश्च सह एकत्र संभवेत्॥
तस्मान्न भक्षयेन्मांसमुद्वेजनकं[2] नृणां।
मोक्षधर्मनिरुद्धत्वादार्याणामेष वै ध्वजः॥

यत्तु ज्ञानवतीपरिवर्ते[3] मांसभक्षणं पठ्यते तन्महार्थसाधकत्वान्निर्दोषम्॥

एवं हि तथोक्तं।

[4]एषोऽकरिष्यद्य[दि] भिक्षु कालं।
समाधिशब्दोऽपि हि जम्बुद्वीपे।
निरुद्धु[5] सत्वान सदाभविष्यद्।
चिकित्सिते अस्मि[6] समाधि लब्धः[7]॥

स च महाकरुणाभियुक्तम्, तेन अस्मिन्न मैत्री शङ्कापि नास्तीत्यदोषः॥

---

1) *ivāhāraṃ* without hiatus A; H. W. (likewise unmetrically) °*jyavad āhāram*.

2) *māṃsām udvajanakornṇa* (!) W.

3) Possibly a chapter of some work; cf. also M. Vyutp. XXV. 2.

4) I have endeavoured to restore the metre (*ākhyānakī*) and sense of this passage, originally in «le sanscrit mixte» and further corrupted by our MS., from the Tib. (84. a. 1) which gives connected sense.

5) The reading is not clear: *niruddhi* for *nirodha* does not occur; but the Tib. has སེམས་ཅན་རྣམས་ལ་རྟག་ཏུ་ཉམས་པར་འགྱུར ‘sentient beings would for ever go to decay.’

6) °*shyan vicikitsate smin* is the unmetrical reading of the MS. *asmi* I have conjectured (metri gr.) for *asmin*, hiatus and elision of final *n* being common in *gāthās*.

7) The Tib. adds ཅེས་གསུངས་སོ་ = *iti*, showing that the quotation ends here.



यच्चाप्यार्यरत्नमेघे ऽभिहितं, श्माशानिकेन[1] निरामिषेण भवितव्यमिति॥

तदन्यत्रैवं जातीयसत्वार्थसंदर्शनार्थं। विनये ऽपि यदनुज्ञातं तत्तु त्रिकोटिपरिशुद्ध[2]भक्षणे न प्रहाणान्तराय[3] इति, तत् परित्यागेन शुद्धदृष्टीनाम[4]भिमाननिरासार्थं, तद्दृढतया च भव्यानां शासनानवतारपरिहारार्थं॥

तथा ह्युक्तं लङ्कावतारसूत्रे। तत्र तत्र देशना पाठे शिक्षापदानामानुपूर्वी[5] बन्धनिश्रेणीपदविन्यासयोगेन। त्रिकोटिं बद्ध्वा। तत्र उद्दिश्य कृतानि प्रतिषिद्धानि ततो ऽन्तशः प्रकृतिमृतान्यपि प्रतिषिद्धानीति॥

उक्तं सततभैषज्यं, ग्लानप्रत्ययभैषज्यं तत्सेव्यमेव॥

श्रावकविनयेऽपि तावदात्मार्थं ब्रह्मचर्यवासार्थं पात्रचीवरमपि विक्रीय, कायसंधारणमुक्तं। किं पुनरपरिमितजनपरित्राणहेतोर्बोधिसत्वशरीरस्य दुर्लभा चेदृशी क्षणप्रतिलाभोत्सवसंपद्। इति तत्प्रदर्शनार्थं च भगवता तत्र स्वयं भैषज्योपयोगः प्रदर्शितः॥

उक्तं चार्यरत्नमेघसूत्रे। तैर्यदा प्रचारितं भवति तदा सत्यां वेलायामसत्यां वा तेषामिमान्येवंरूपाणि कायोपस्तम्भनान्युपकरणानि न लभ्यन्ते ऽभ्यवहर्तुं। यदुत सर्पिर्वा तैलं वा मूलरसो वा गण्डरसो वा फलरसो वा। न चान्यानभ्यवहरतो दृष्ट्वा प्रतिघचित्तमुत्पादयति। यदि पुनः खलु पश्चाद्भक्तिको[6] बोधिसत्वो वा [68 a]ग्लानो भवति। यथारूपेणास्य ग्लान्येन जीवितान्तरायो भवति कुशलपक्षान्तरायो वा तेन निष्कौकृत्येन भूत्वा निर्विचिकित्सकेन भैषज्यचित्तमुपस्थाप्य प्रतिनिसेव्यानीति॥

---

1) Pāli, *sosānika* v. Parivāra XV, 6. 5. Cf. Burnouf, Intr. p. 309.

2) A gloss explains this: *tad uddiçya hataṃ, svahataṃ, hanyamānaṃ drishṭaṃ.* The Tib. here and just below renders *trikoṭi* simply རྣམ་པ་གསུམ་ «the three classes».

3) Tib. སྤོང་བ་ ‘renunciation (of pleasures)’.

4) *çuddhi* MS. ‘excessive spiritual pride in one's pure (puritanic) views’.

5) *ănupūrvvī* MS.

6) A reference to the seventh *dhūtāṅga* precept; cf. Parivāra XV. 6. 12, and Childers, p. 310.

वसनोपभागप्रयोजनमुग्रपरिपृच्छासूत्रे ऽभिहितं । क्षीरपत्राण्यकौपीनः[1] प्रच्छादनार्थं तु श्रमणलिङ्गसंदर्शनार्थमिमानि च काषायाणि देवमानुषासुरस्य लोकस्य चैत्यमिति[2]। चैत्यार्थं सम्यग्धारितव्यानि । निर्वृतिर्विरागरक्तानि[3] एतानि । न रागरक्तानि । उपशमानुकूलान्येतानि । न संक्लेशसंधुक्षणानुकूलानि । एभिश्च काषायैर्विवृतपापा भविष्यामः । सुकृतकर्मकारिणो न चीवरमण्डनानुयोगमनुयुक्ताः । एतानि च काषायाण्यार्यमार्गसंभारानुकूलानीति कृत्वा तथा करिष्यामो यथा नैकक्षणमपि सकषायाः काये काषायाणि धारयिष्याम इति ॥

अत्र च कारणं रत्नराशिसूत्रे ऽभिहितं ।

ये पुनस्ते काश्यप वैदूर्या[4] असंयता इतः श्रमणगुणधर्माद्दूराः काये काषायाणि वस्त्राणि धारयन्ति ' न चैतेषु गौरवमुत्पादयन्ति ' तत्र काश्यप श्रमणवर्णप्रतिरूपकं नाम प्रत्येकनरकं ' तत्र काश्यप प्रत्येकनरके श्रमणरूपप्रतिरूपेण ताः कारणाः कार्यन्ते आदीप्तचैला आदीप्तशीर्षा आदीप्तपात्रा आदीप्तासना आदीप्तशयनाः । यः कश्चित्तत्र तेषामुपभोगपरिभोगः स सर्व आदीप्तः संप्रज्वलित एकज्वालीभूतः । तत्र तैः श्रमणवर्णरूपेण दुःखां वेदनामनुभवन्तीति ॥

1) Several words have been lost here, as we learn both from the Tibetan and Chinese versions (the original of Nanjio 23 (19) kindly communicated by Mr. Watters). The objects against which the clothes protect are mosquitoes, gnats, and wind, to which the Tibetan adds sun-heat and serpents. In the opening words of the quotation, also, something may have been lost. In the Tibetan the first words are: ངོ་ཚ་ཞེད་འཛེམ་པས་ཁྲེལ་ཡོད་པས་དཀྲི་བ་ (84 b 3).

2) Cf. 56. 11 supra.

3) The MS. reads *nirvvit virāga*°. This I have ventured to alter from one of the Chinese versions, which may be rendered «emancipation-dyed are the robes».

4) The MS. is corrupt here: the margin adds a syllable which looks like *rpyāt*. The Tib. equivalent (84 b fin.) appears to be ལྷོད་ 'slack'. Prof. Cowell suggests *vaidhuryād*.



आर्यरत्नमेघेऽप्युक्तं । यदि भवेदभ्यवकाशिको[1] बोधिसत्त्वो ग्लानकायो ऽप्रतिबलकायस्तेन विहारस्थितेनैवं चित्तमुत्पादयितव्यं । क्लेशप्रतिपक्षार्थं तथागतेन धुतगुणाः प्रज्ञप्ताः । [68 b] तथाहं करिष्यामि यथा विहारस्थ एव क्लेशानां प्रहाणाय घटिष्यामि । तत्र च विहारे न गृद्धिमुत्पादयामि नाध्यवसानं । एवं चास्य भवति । कर्तव्यो दानपतीनामनुग्रहो नास्माभिरात्मम्भरिभिर्भवितव्यमिति ॥

पुनरत्रैवाह । ते शय्यां कल्पयन्तो दक्षिणेन पार्श्वेन शय्यां कल्पयन्ति । पादस्योपरि पादमाधाय चीवरैः असंवृतकायाः स्मृताः । संप्रजानाना उत्थानसंज्ञिन आलोकसंज्ञिनः शय्यां कल्पयन्ति । न च निद्रासुखमास्वादयन्ति । न पार्श्वसुखमन्यत्र यावदेवैषां महाभूतानां स्थितये ज्ञापनायै । इत्यनया दिशा सर्वपरिभोगाः सत्त्वार्थमधिष्ठातव्याः । आत्मतृष्णोपभोगात्तु क्लिष्टापत्तिः प्रज्ञायते ॥

यथोक्तं चन्द्रप्रदीपसूत्रे ।

ते भोजनं स्वादुरसं प्रणीतं
लब्ध्वा च भुञ्जन्ति अयुक्तयोगाः ।
तेषां स आहारु बधाय भोती ।
यथ हस्तिपोतान विषा अधौता ॥[2]

इति ॥

आर्यरत्नराशिसूत्रेऽपि भगवता श्रद्धादेयपरिभोगे परिकीर्तिते । अथ तस्यामेव पर्षदि योगाचाराणां भिक्षूणां द्वे शते इमं धर्मपर्यायं श्रुत्वा प्ररुदिते ' एवं च वाचमभाषन्त । कालं वयं भगवन् करिष्यामो ' न पुनरप्राप्तफला एकपिण्डपातमपि श्रद्धादेयस्य परिभोक्ष्यामः ॥

1) Another of the *dhūtāngas* or *dhūtaguṇas*. Cf. Parivāra sup. cit.

2) °*adhautakā* MS. The Tib. (85 b 2) appears to take the line to mean that medicinal herbs བད་རྩ་ when not properly cleansed (peeled?) མ་བཀྲུས་ may injure young animals.

भगवानाह। साधु साधु कुलपुत्रा एवंरूपैर्लज्जाभिः कौकृत्यसंपन्नैः परलोकावद्यभयदर्शिभिरिदं प्रवचनं शोभते॥ अपि तु। द्वयोरहं काश्यप श्रद्धादेयमनुजानामि। कतमयोर्द्वयोः। युक्तस्य मुक्तस्य च। यदि भिक्षवो भिक्षुर्युक्तो योगाचारो मम शिक्षायां प्रतिपन्नः सर्वसंस्कारेष्वनित्यदर्शी ' सर्वसंस्कारदुःखविदितः सर्वधर्मेष्वनात्माधिमुक्तिः शान्तनिर्वाणाभिकाङ्क्षी सुमेरुमात्रैरालोपैः श्रद्धादेयं भुञ्जीत ' अत्यन्तपरिशुद्धैव तस्य सा दक्षिणा भवति। येषां च दायकानां दानपतीनां सकाशाच्छ्रद्धादेयं परिभुक्तं ततस्तेषां दायकदानपतीनां महर्द्धिकः[1] [69 a] पुण्यविपाको भवति ' महाद्युतिकः। तत्कस्माद्धेतोः। अग्रमिदमौपधिकानां[2] पुण्यक्रियावस्तूनां येयं मैत्रचित्तसमापत्तिः। तत्र काश्यप यो भिक्षुर्दायकस्य दानपतेरन्तिकाच्चीवरपिण्डपातं परिभुज्याप्रमाणं चेतःसमाधिं समापद्यतेऽप्रमाणस्तस्य दायकस्य दानपतेः पुण्यक्रियाविपाकः प्रतिकाङ्क्षितव्यः। स्यात्काश्यप त्रिसाहस्रमहासाहस्रायां[3] लोकधातौ महासमुद्राणां क्षयो न त्वेव तस्य पुण्यनिष्यन्दस्य कश्चित्क्षय इति॥

तदेवं पिण्डपातगमनारम्भे भोजनारम्भे वा त्रिषु स्थानेषु स्मृतिरुपस्थाप्या दायकानुग्रहे। कायक्रिमिसंग्रहे। सर्वसत्वार्थसाधके च सद्धर्मपरिग्रहे॥

तथागताज्ञासंपादने तु सर्वकार्येषु स्मृतिः कार्या। आदिशब्दान्मन्त्रैरपि रक्षा कार्या॥

तत्रापि तावदिमां त्रिसमयराजोक्तां[4] विद्यां मण्डलसमयार्थमुच्चारयेत्। नमः सर्वबुद्ध-

1) °nāmaharddhi° MS.

2) *satvā upadhi* marg. Cf. M. Vyutp. XCIII, where *aupadhika* is added as a fourth *puṇyakriyāvastu* besides the three (*dāna*° *çīla*° *bhavana*°) familiar from Pāli (Ch. p. 393). The Tib. has (85 b — 86 a 1) རྫས་ལས་བྱུང་བའི་བསོད་ནམས་བྱ་བའི་དངོས་པོ་རྣམས; and this appears to agree with the phraseology of the Buddh. Triglotte (ed. Schiefner 1859; f. 20 b) where the reading of the fourth *puṇyakr*° must be *aupadhikaṃ*, not ཛཻ་བཏྲི་ཀཾ nor *dzai-watrikaṃ* (!) as Jäschke (p. 468) would suggest.

3) *dhātu* acc. to Ch. is sometimes fem. in Pali.

4) Probably the same as the Trisamaya-vyūha of KF. 309.



बोधिसत्वानां ओँ विरजि २ महाचक्रविरजि। सत २[1] सारत २ त्रपि २[2] विधमनि। सभञ्जनि।[3] संभञ्जनि। तरमति। सिद्ध अग्रे[4] त्वं स्वाहा॥

अनेन सर्वमण्डलप्रविष्टो भवति॥ अथवा तथागतहृदयमष्टसहस्रं[5] जपेत् सलौकिकलोकोत्तरमण्डलप्रविष्टो भवति। कतमच्च तत्॥ ॥ नमस्त्र्यध्विकानां तथागतानां ' सर्वत्राप्रतिहतावाप्तिधर्मताबलिनां। ओँ असमसम समन्ततोऽनन्तनावाप्तिशासनि।[6] हर २ स्मर स्मरण विगतरागबुद्धधर्मते। सर २ समबला। हस २। त्रय २। गगन महावलरक्षण। ज्वल ज्वलन सागरे स्वाहा॥

अयं सर्वतथागतानामात्मभावः। अत्रानुत्तरं गौरवं भावयितव्यं। अनेनादिकर्मिका अपि सत्वेष्वनन्तं बुद्धकृत्यं कुर्वन्ति। अयमेव परमां रक्षां मारादिभ्यः सर्वदुष्टेभ्यः करोति। हस्ततोडेन भस्मना सर्षपैरुदकेन दृष्ट्या मनसा वा सीमाबन्धं करोति॥

व्याधि[69 b]षु भैषज्यमुदकं चाभिमन्त्र्योपयोज्यं॥ वनकुसुमानि वा चैत्ये प्रतिमायां सद्धर्मपुस्तके वा समाहितो निवेदयेत्॥ यत्नप्रयोगान्महाव्याधिभिरभिमुच्यते। बुद्धबोधिसत्वालम्बनेन सर्वसत्वार्थाभिलाषिणा च चित्तेन भद्रचारिविधिपूर्वकं[7] च जप्तव्यः। अयं विधिरस्य कल्पस्यावसाने द्रष्टव्यः। त्रिसमयजापिनश्चाम्नायतो न दोषः। उत्तिसष्टस्याप्यशुचेर्न दोषः। मुद्राकारा न भक्षणीया न लङ्घनीया। न मञ्चारोहः कर्तव्यः। न मद्यं पातव्यं। अधिमुक्तिचर्या शिक्षापदेष्वचलस्य निर्विचिकित्सस्य दुःशीलपूर्वस्यापि सिध्यति। पण्डितस्यापण्डितस्य वा नियतं सिध्यति॥

1) °*raji sāta* Tib. The Sanskrit text is mostly transcribed, not translated in the Tib. version of these and other charms.

2) *tāyi* Tib.

3) °*mahāti* Tib.

4) So Tib.; MS. *traṃ*.

5) ? Cf. K.F. 319 (nº 26).

6) °*titāçāsanī* MS.

7) Compare the *Bhadracaripraṇidhānarāja*, a Buddhistic charm of which several MSS. are extant; compare my Cambridge Cat. pp. 14, 103, 167.

तथा चात्रैवोक्तं।

बोधिचित्तं दृढं यस्य निःसंगा च मतिर्भवेत्।

विचिकित्सा नैव कर्तव्या तस्येदं सिध्यति ध्रुवम्, इति॥

बोधिचित्तदृढता चात्र पृथग्जनचलचित्ततायाः नियमार्थमुक्ता न तु भूमिप्रविष्टमधिकृत्य॥

यस्मादत्रोक्तं। प्रत्युद्धारतामवभासतां च प्रतिलब्धुकामेन, महान्धकारादालोकं प्रवेष्टुकामेन, यद्भूयसा विनिपतितेन साध्यं। तथा कुतो ममाल्पपुण्यस्य सिद्धिरिति नीचचित्तप्रतिषेधः। न चातिक्रान्तदुर्गतेरुत्साहोर्मिबहुलस्योपचिताप्रमेयपुण्यस्कन्धस्य भूमिप्रविष्टस्यायं पूर्वोक्तो दोषः संभवति। अत्र च मन्त्राणामज्ञानान्नाधिकान्तरपाठे दोषो ऽस्ति। नापि न्यूनतादोषः। नापि विधिभ्रंसदोषः। किंतु श्रद्धावेगं बोधिचित्तवेगं सर्वोत्सर्गवेगं च प्रमाणीकृत्याविचारतः प्रवर्तितव्यमवश्यं बुद्धबोधिसत्त्वमिहैव यथेष्टसिद्धिश्च भवति॥

अथवानेन सर्ववज्रधरमन्त्रेण रक्षां कुर्यात्। नमस्त्रैयध्विकानां[1] तथागतानां सर्ववज्रधराणां चण्डाल २। चल २। वज्र २। शान्तन[2] २। फालन[3] २। चर[4] २। मारणं २। वज्रदालफट[5]। ललितशिखर समन्तवज्रिणि। ज्वल २। नमोऽस्तु ते अग्रोग्रशासनानां रुण २ हूं फुल स्फाट वज्रोत्तमे स्वाहा॥

अनेन पठितमात्रेण सर्वविघ्नविनायका नोपसंक्रामन्ति। देवनागादयो न प्रसहन्ते। भोजनपानशयनासनवसनपूजोपकरणानि चाभिमन्त्रितेन[70 a]जलेन दृष्ट्या मनसा वा रक्षेत। अचलहृदयेन वा सर्वमेतत्कुर्यात्॥ इदं च तत्॥

1) Tib. not clear.

2) °*nā* Tib.

3) So the Tib. *hyana* (?) MS. text; *phāla* marg.

4) *tara* Tib.

5) *sphoṭaya* (bis) Tib.



नमः समन्तवज्राणां त्राट। अमोघ चण्डमहारोषण[1] स्फोटय[2] हूँ। भ्रामय २ हूँ। त्राट हूँ, माँ, ओँ बलं ददे तेजोमालिनि स्वाहा॥

अनेन प्रथमं पिण्डमष्टाभिमन्त्रितं भुञ्जीत भैषज्यराजतां बुद्धबोधिसत्त्वानामनुस्मृत्य॥

विषप्रतीकारस्[3]तु॥ तद्यथा। इलिमित्ते, तिलिमित्ते। इलितिलिमित्ते। डुम्बे। डुःसे। डुःसालीये। डुम्बालीये। तक्के। तर्क्करणे, मर्म्मे। मर्मरणे। कश्मीरे। कश्मीरमुक्ते। अघने। अघनघने। इलिमिलीये। अखाप्ये[4], अषाप्ये[4] श्वेते। श्वेततुण्डे। अनानुरक्ते[5] स्वाहा॥

य इमां विद्यां सकृच्छृणोति स सप्त वर्षाण्यहिना न दश्यते। न चास्य काये विषं क्रामति। यश्चैनमहिर्दशति सप्तधास्य स्फुटेन्मूर्द्धा अर्जकस्येव मञ्जरी॥

य इमां विद्यां धारयति स यावज्जीवमहिना न दश्यते। न चास्य काये विषं क्रामति। इमानि च मन्त्रपदानि सर्पस्य पुरतो न वक्तव्यानि यत्कारणं सर्पो म्रियते॥

तद्यथा[6]। इल्ला। चिल्ला। चक्को। बक्को। कोडा कोडेति। निकुरुडा निकुरुडेति। पोडा पोडेति। मोडा। मोडेति। पुरुडा पुरुडेति। फट रक्षे, फुटटण्ड रक्षे। नाग रक्षे, नागटटण्डरक्षे[7]। सर्प रक्षे, सर्पटटण्डरक्षे। अच्छे, हुल विषशाते[8], शीतवत्ताले[9], हलले, हलले[10], तण्डि २। तड २। ताडि २। मल २। स्फुट २। फुटु २। स्वाहा॥

1) See K.F. 298, and my Camb. Cat. pp. 45, 127.

2) *sphoṭaya* Tib.

3) Charms against serpent-bites are prescribed in the Vinaya (K.F. 172); cf. Bower-MS. pts. VI. VII.

4) Tib. not clear for these two forms.

5) °*ragate* Tib.

6) I have recorded only the more interesting variants of the Tib. in this paragraph.

7) om. Tib.

8) So Tib.; *vishe çite* MS.

9) *çitabad tele* Tib.

10) Tib. adds a few more syllables.

इति हि भिक्षवो जाङ्गुल्यां विद्यायां उदाहृतायां सर्वभूतसमागते सर्वं तथावितथानन्यथाभूतं सत्यमविपरीतमविपर्यस्तं । इदं विषमविषं भवतु । दातारं गच्छतु । दंष्ट्रारं गच्छतु । अग्निं गच्छतु । जलं गच्छतु । स्थलं गच्छतु । स्तम्भं गच्छतु । कुड्यं गच्छतु । भूमिं संक्रामतु । शान्तिं गच्छतु स्वाहा ॥

चोरादिप्रतीकारे मारीचीं[1] जपेत् ॥ तद्यथा । पराक्रमसि । उदयमसि । वैरमसि अर्कमसि । मर्कमसि । वनमसि[2] । अन्तर्धानमसि । प[70 b]थे मे रक्ष । उत्पथे मे रक्ष । जनतो मे रक्ष । चौरतो मे रक्ष । राजतो मे रक्ष । सिंहतो मे रक्ष । व्याघ्रतो मे रक्ष । नागतो मे रक्ष । सर्पतो मे रक्ष । सर्वतो मे रक्ष । रक्ष २ मां सर्वसत्त्वांश्च सर्वभयेभ्यः सर्वोपाये सोपसर्गेभ्यः स्वाहा ॥ उँवडिलि २ सर्वदुष्टानां ग्रन्थिं वन्दामि स्वाहा ॥ ॥ नमो रत्नत्रयाय । नमो मारीच्यै देवतायै । मारीच्या देवताया हृदयमावर्तयिष्यामि ॥ तद्यथा । बत्तालि । बदालि । बदालि । बरालि । वराहमुखि । सर्वदुष्टानां निवारय । बन्ध मुखं स्वाहा ॥

इमामपि विद्यामनन्तजातिस्मरहेतुं महाप्रभावां सप्तपञ्चाशदक्षरां विद्याधरपिटकोपनिबद्धां[3] सर्वभयरक्षार्थं प्रयुञ्जीत ॥

तद्यथा । अट्टे । बट्टे । नट्टे । कुनट्टे । टके । ठके । ठरके । उरुमति । रुरुमति । तुरु । हिलि मिलि । सर्वज्ञोडुपदग्ग[4] । नमो सब्बसम्मसंबुद्धाणं[5] सिज्झन्तु[6] मे मन्तपदाः स्वाहा ॥

---

1) This *Dhāraṇī* is extant both in Sanskrit (Rāj. Mitra, *Sk. Buddh. Lit.* 174) and in Tib. (KF. 318). The first three words, not in the MS., have been replaced from the Tib. (88. a. 2), with which the Sanskrit as given by Rāj. Mitra substantially agrees.

2) *bandham . . gul(a)mam . . cīvaram . . mahācīvaram asi* Tib.

3) See L. de la Vallée Poussin in J.R.A.S. 1895, p. 433.

4) Tib. སརྦ་ཛ་ཙོ་བི་པ་དགག

5) °*bujjhāṇaṃ* MS. *buddhāṇāṃ* Tib. The rest of the Prakritic forms occur in both.

6) *siddhandu me mantra*° Tib.



एषा रक्षात्मभावस्य भैषज्यवसनादिभिः ।
सत्त्वार्थस्मृतिपूर्वकमेव वक्तव्या ॥
आत्मतृष्णोपभोगात्तु क्लिष्टापत्तिः प्रजायते ॥

सर्वं हि बोधिसत्त्वेनोत्सृष्टं सर्वसत्त्वेभ्यः ॥ तत्र यदि विस्मृत्य परद्रव्यमात्मभरणतृष्णया परिभुङ्क्ते क्लिष्टापत्तिमापद्यते । अथ वितृष्णो ऽन्यासक्तो वा सत्त्वकार्यमनुस्मृत्य भुङ्क्ते न क्लिष्टामापत्तिमापद्यते । परद्रव्यसंज्ञी स्वार्थेन भुङ्क्ते स्तेयापत्तिमापद्यते । पूरार्घेण प्रातिमोक्षे पाराजिको भवति । सत्त्वस्वामिकैस्तु भोगैः सत्त्वस्वामिक एवात्मभावः संरक्षत इत्यदोषः । न हि दासस्य नित्यं स्वामिकर्मव्यापृतस्य[1] स्वद्रव्यमस्ति येन वर्तेत ॥

उक्तं च धर्मसङ्गीतिसूत्रे । दासोपमेन बोधिसत्त्वेन भवितव्यं सर्वसत्त्वकिङ्करणीयप्रापणतयेति ॥

न चैकान्तस्वाम्यर्थपरस्य दासस्य व्याध्यादिविक्लवमतेः स्वामिनमननुज्ञाप्यापि भुञ्जानस्य कश्चि[71 a]द्दोषः । नाप्येवं कुर्वाणस्य बोधिसत्त्वस्यान्तिके कस्यचिद्विदितवृत्तान्तस्याप्यप्रसादो युज्यते मात्सर्यत्यागचित्तापरिज्ञानात् ॥ न चात्र न्याये कश्चित्संदेहो युक्तः । सर्वोत्सर्गो हि पूर्वमेव भगवत्कण्ठोक्त्या प्रतिपादितः । तथा चात्मभावरक्षा सत्त्वार्थमेवोक्ता । तस्य स्पष्टावबोधार्थमयं न्यायो ऽभियुक्तो न तु स्वार्थापेक्षयेति ॥

इति शिक्षासमुच्चये आत्मभावरक्षा षष्ठः परिच्छेदः ॥ ६ ॥

## VII.

## भोगपुण्यरक्षा सप्तमः परिच्छेदः

एवं तावदात्मभावरक्षा वेदितव्या । भोगरक्षा तु वक्तव्या । तत्र सुकृतारम्भिणा भाव्यं मात्रज्ञेन च सर्वत इति शिक्षापदादस्य भोगरक्षा न दुष्करा ॥

---

1) Cf. p. 114, note 1.

उग्रपरिपृच्छायां हि शिक्षापदमुक्तं। सुसमीक्षितकर्मकारिता सुकृतकर्मकारिता च ' तेन भोगानां दुर्न्यासा[1] प्रत्यवेक्षा ' अवज्ञाप्रतिषेधः सिद्धो भवति। शमथप्रस्तावेन च मात्रज्ञता युक्तिज्ञता चोक्ता॥ तेनेदं सिद्धं भवति ' यदिदं[2] ' अल्पाधमभोगेनापि कार्यसिद्धौ सत्यां स्वयमन्यैर्वा बहूत्तमभोगनाशनोपेक्षा न कार्येति॥

अत एवोग्रपरिपृच्छायामुक्तं। पुत्रभार्यादासीदासकर्मकरपौरुषेयाणां सम्यक्परिभोगेनेति। तथा स्वपरबोधिपक्षश्रुताद्यन्तरायकरौ[3] त्यागात्यागौ[4] न कार्यौ। अधिकसत्त्वार्थशक्तेस्तुल्यशक्तेर्वा[5] बोधिसत्त्वस्याधिकतुल्यकुशलान्तरायकरौ त्यागात्यागौ न कार्याविति सिद्धं भवतीति॥

इदं च संधाय बोधिसत्त्वप्रातिमोक्षेऽभिहितं। यस्तु खलु पुनः शारिपुत्राभिनिष्क्रान्तगृहावासो बोधिसत्त्वो बोध्यङ्गैरभियुक्तस्तेन कथं दानं दातव्यं। कतरं दानं दातव्यं। किंयद्रूपं दानं दातव्यं॥ पे॥ धर्मदायकेन भवितव्यं धर्मदानपतिना। यश्च शारिपुत्र गृही बोधिसत्त्वो गङ्गानदीवालिकासमानि बुद्धक्षेत्राणि सप्तरत्नप्रतिपूर्णानि कृत्वा तथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यो दानं दद्याद् ' यश्च शारिपुत्र प्रव्रज्यापर्यापन्नो बोधिसत्त्व एकां चतुष्पदिकां [71 b] गाथां प्रकाशयेदयमेव ततो बहुतरं पुण्यं प्रसवति। न शारिपुत्र तथागतेन प्रव्रजितस्यामिषदानमनुज्ञातं॥ पे॥ यस्य खलु पुनः शारिपुत्र पात्रागतः पात्रपर्यापन्नो लाभो भवेद्धार्मिको धर्मलब्धः। तेन साधारणभोगिना भवितव्यं सार्द्धं सब्रह्मचारिभिः। सचेत्पुनः कश्चिदेवागत्य पात्रं वा चीवरं वा याचेत ' तस्यातिरिक्तं भवेद्बुद्धानुज्ञातात्त्रिचीवराद् ' यथा परित्यक्तं दातव्यं। सचेत्पुनस्तस्योनं चीवरं भवेद्यन्निश्रित्य ब्रह्मच-

1) 'requiring painstaking application'; *durnyasta* 'ill-applied' Divy. 27.25.

2) = 'scilicet' as in Pali.

3) Here the margin adds: *jīvita-parishkārasyāpi tyāgo na kāryaḥ* । *kārya-vyagratāyā atyāgo 'pi na kāryaḥ*. But this passage is not reproduced in the Tib. (89. a. 6—b. 1).

4) *anuttaroktau* marg.

5) *svārthena* marg.



र्यवासः ' तन्न परित्यक्तव्यं। तत्कस्य हेतोः। अविसर्जनीयं त्रिचीवरमुक्तं तथागतेन। सचेत्पुनः शारिपुत्र बोधिसत्त्वः त्रिचीवरं परित्यज्य याचनकगुरुको भवेन्न तेनाल्पेच्छता आसेविता भवेत्। यस्तु खलु पुनः शारिपुत्राभिनिष्क्रान्तगृहावासो बोधिसत्त्वस्तेन धर्म आसेवितव्यः। तत्र तेनाभियुक्तेन भवितव्यमिति॥

अन्यथा श्लोकसंग्रहार्थं महतः सत्त्वराशेस्तस्य च सत्त्वस्य बोधिसत्त्वाशयपरिकर्मान्तरायान्महतोऽर्थस्य हानिः कृता स्याद् ' अत एवोदारकुशलपक्षविवर्जनताऽपक्षाल[1] इत्युच्यते। एवं तावत्त्यागप्रतिषेधः। अत्यागप्रतिषेधोऽपि॥

यथार्यसागरमतिसूत्रे महायानान्तरायेषु बहुलाभता पठ्यते। यो ऽयं विधिरात्मन्युक्तः सो ऽन्यस्मिन्नपि बोधिसत्त्वे प्रतिपाद्य इति कुतो गम्यते।

आर्योग्रपरिपृच्छायां देशितत्वात्। परकृत्यकारितः[2] स्वकार्यपरित्याग इति॥

तथार्यविमलकीर्तिनिर्देशे[3] ऽप्युक्तं। संसारभयभीतेन किं प्रतिसर्तव्यम्। आह। संसारभयभीतेन मञ्जुश्रीर्बोधिसत्त्वेन बुद्धमाहात्म्यं प्रतिसर्तव्यं। आह। बुद्धमाहात्म्यस्थातुकामेन कुत्र स्थातव्यं। आह। बुद्धमाहात्म्ये स्थातुकामेन सर्वसत्त्वसमतायां स्थातव्यं। आह। सर्व[72 a]सत्त्वसमतायां स्थातुकामेन कुत्र स्थातव्यं। आह। सर्वसत्त्वसमतायां स्थातुकामेन सर्वसत्त्वप्रमोक्षाय स्थातव्यमिति॥

तथा च धर्मसङ्गीतौ सार्थवाहो बोधिसत्त्व आह। यो भगवन् बोधिसत्त्वः सर्वसत्त्वानां प्रथमतरं बोधिमिच्छति नात्मनः। यावदियं भगवन् धर्मसङ्गीतिरिति॥

उत्सर्गादेव चास्य स्वार्थाभावः सिद्धः। किं तु सत्त्वार्थहानिभयादयोग्ये सत्त्वे सुभरं नारोपयति। यत्र तु सत्त्वार्थहानिं न पश्यति तत्र स्वयं कृतमन्येन वा जगद्धितमाचरितमिति

1) Not in lexx. Tib. མ་བསྲུངས་པ་ (90. a. 3) 'not having kept (?)'.

2) °*tā* MS.

3) See p. 6, n. 5 and add. citation in Madhyamaka-vṛitti (Camb. Cat. p. 116).

को विशेषो, यदयमपरबोधिसत्त्वकुशलसिद्धये न स्वकुशलमुत्सृजति। अथ स्वदुर्गतिदुःखाद्बिभेति, द्वितीयस्यापि तदेव दुःखं। अथ तद्दुःखेन मे बाधा नास्तीत्युपेक्षते। यथोक्तैः सूत्रैः सापत्तिको भवति॥

यथा च रत्नकूटसूत्रे। चत्वार इमे काश्यप बोधिसत्त्वप्रतिरूपका इत्यारभ्योक्तं। आत्मसुखार्थिको भवति न सर्वसत्त्वदुःखापनयनार्थिक इति॥ तस्मादुग्रपरिपृच्छाविधिना पूर्ववदात्मा गर्हणीयः एषा तु बोधिसत्त्वशिक्षा यथार्थनिरारम्भेण धर्मसङ्गीतिसूत्रे निर्दिष्टा। कथं कुलपुत्राः प्रतिपत्तिस्थिता वेदितव्याः। आह। यदा सत्त्वेषु न विप्रतिपद्यन्ते। आह। कथं सत्त्वेषु न विप्रतिपद्यन्ते। आह। यन्मैत्रीं च महाकरुणां च न त्यजन्ति। सुभूतिराह। कतमा बोधिसत्त्वानां महामैत्री। आह। यत्कायजीवितं च सर्वकुशलमूलं च सर्वसत्त्वानां निर्यातयन्ति न च प्रतिकारं काङ्क्षन्ति। आह। कतमा बोधिसत्त्वानां महाकरुणा। यत्पूर्वतरं सत्त्वानां बोधिमिच्छन्ति नात्मन इति॥

अत्रैव चाह। महाकरुणामूलाः सर्वबोधिसत्त्वशिक्षा इति। अवश्यं च भगवतेदं न निवारणीयं, अन्यतरबोधिसत्त्वार्थे ना [72 b] र्थित्वादवश्यं तूपदिशतीति निश्चीयते, येन दातुर्महादक्षिणीये महार्थदानान्महापुण्यसागरविस्तरो दृश्यते।[1] *** अन्यथा तु केवलमेव विघातिनो मरणं स्यात्॥

यत् तु प्रशान्तविनिश्चयप्रातिहार्यसूत्रे देशितम्। य एष ते महाराज वर्षशतसहस्रेण परिव्ययोऽत्र प्रविष्टः स सर्वः पिण्डीकृत्यैकस्य भिक्षोर्यात्रा भवेदेवं प्रत्येकं सर्वभिक्षूणां, यश्चोद्देशस्वाध्यायाभियुक्तो बोधिसत्त्वः सगौरवो धर्मकामः श्रद्धादेयमाहारं परिगृह्यैवं चित्तमुत्पादयेत्। अनेनाहं धर्मपर्येष्टिमापत्स्य इति। अस्य कुशलस्यैष देयधर्मपरित्यागः शततमीमपि कलां नोपैतीति॥ तद्गृहसुखपलिगुद्धमधिकृत्योक्तं, न तु पूर्वोक्तविधिना कश्चिद्दोषः॥ उक्ता समासता भोगरक्षा। पुण्यरक्षा वाच्या। तत्र स्वार्थविपाकवैतृष्ण्याच्छुभं संरक्षितं भवेत्॥

1) I have marked a lacuna **** here as the Tib. (91. a. 4), (not very legible in this passage) contains some matter not quite corresponding to the Sanskrit text.



यथोक्तं नारायणपरिपृच्छायां। स नात्महेतोः[1] शीलं रक्षति, न स्वर्गहेतोः, न शक्रत्वहेतोः,[2] न भोगहेतोः, नैश्वर्यहेतोः, न रूपहेतोर्न वर्णहेतोर्न यशोहेतोः। पे॥ न निरयभयभीतः शीलं रक्षति। पे॥ एवं न तिर्यग्योनिभय[3]भीतः शीलं रक्षति। अन्यत्र बुद्धनेत्रीप्रतिष्ठापनाय शीलं रक्षति। यावत्सर्वसत्त्वहितसुखयोगक्षेमार्थिकः शीलं रक्षति॥ स एवंरूपेण शीलस्कन्धेन समन्वागतो बोधिसत्त्वो दशभिर्धर्मैर्न हीयते। कतमैर्दशभिः। यदुत न चक्रवर्तिराज्यात्परिहीयते। तत्र च भवत्यप्रमत्तो बोधिप्रतिकाङ्क्षी[4] बुद्धदर्शनमभिकाङ्क्षते। एवं ब्रह्मत्वाद्बुद्धदर्शनाभेद्यप्रतिलम्भाद्धर्मश्रवणान्न परिहीयते। यावद्यथाश्रुतप्रतिपत्तिसंपादनाय बोधिसत्त्वसंवरसमादानान्न परिहीयते। अनाच्छेद्यप्रति[73 a]भानात्सर्वकुशलधर्मप्रार्थनध्यानान्न परिहीयते॥ एवं शीलस्कन्धप्रतिष्ठितो बोधिसत्त्वो महासत्त्वः सदा नमस्कृतो भवति देवैः। सदा प्रशंसितो भवति नागैः। सदा नमस्कृतो भवति यक्षैः। सदा पूजितो भवति गन्धर्वैः सदापचायितश्च भवति नागेन्द्रासुरेन्द्रैः। सदा सुमानितश्च भवति ब्राह्मणक्षत्रियश्रेष्ठिगृहपतिभिः। सदाभिगमनीयश्च भवति पण्डितैः। सदा समन्वाहृतश्च भवति बुद्धैः। शास्तृसंमतश्च भवति सदेवकस्य लोकस्यानुकम्पकश्च भवति सर्वसत्त्वानां॥ पे॥ चतस्रो गतीर्न गच्छति। कतमाश्चतस्रो। यदुताक्षणगतिं न गच्छत्यन्यत्र सत्त्वपरिपाकात्। बुद्धशून्यबुद्धक्षेत्रं न गच्छति। मिथ्यादृष्टिकुलोपपत्तिं न गच्छति। सर्वदुर्गतिगतिं न गच्छति॥

एवं पूर्वोत्सृष्टस्यापि पुण्यस्य क्लेशवशात्पुनरुपादीयमानस्य रक्षा कार्या। पुण्यदानादपि यत्पुण्यं ततोऽपि न विपाकः प्रार्थनीयो ऽन्यत्र परार्थात्। किं च पुण्यं रक्षितुकामः। पश्चात्तापं न कुर्वीत॥

यथोक्तमुग्रपरिपृच्छायां। दत्त्वा च न विप्रतिसारचित्तमुत्पादयितव्यमिति॥

1) *rājya°* marg.
2) *na brahmatvahetoḥ* marg.
3) *°yamaloka°* marg.
4) *na çakratvāt parihīyate | tatra ca bhavaty apramatto bodhipratikānkshī* marg.

पृष्ठदौर्बल्याद्दौर्बल्यं । विप्रतिसारात् पापवत्पुण्यस्यापि क्षयः स्यादित्यभिप्रायः । न च कृत्वा प्रकाशयेद् ' अनेकपर्यायेण हि भगवता प्रच्छन्नकल्याणता ' विवृतपापता वर्णिता । तत्र विवृतस्य क्षयो गम्यते ' पापस्य दौर्मनस्येनैव पुण्यस्य सौमनस्येनापत्तिः सत्वार्थं निरामिषचित्तस्य प्रकाशयतः ॥

यथा रत्नमेघे वैद्यदृष्टान्तेनात्मोत्कर्षो निर्दोष उक्तः । पुनः पुण्यरक्षा कामो

लाभसत्कारभीतः स्यादुन्नतिं वर्जयेत्सदा ।

बोधिसत्वो प्रसन्नः स्याद्धर्मे विमतिमुत्सृजेत् ॥

इदं च रत्नकूटे ऽभिहितं । चतुर्भिः काश्यप धर्मैः समन्वागतस्य बोधिसत्वस्योत्पन्नोत्पन्नाः [73 b] कुशला धर्माः परिहीयन्ते ' यैः[चतुर्भिर्मुक्ताः][1]न वर्धन्ते कुशलैर्धर्मैः । कतमैश्चतुर्भिः । यदुताभिमानिकस्य लोकायतमन्त्रपर्येष्ट्या ' लाभसत्काराध्यवसितस्य कुलप्रत्यवलोकनेन[2] ' बोधिसत्वविद्वेषाभ्याख्यानेन ' अश्रुतानामनिर्दिष्टानां च सूत्रान्तानां प्रतिक्षेपेणेति ॥

आर्यसर्वास्तिवादानां[3] च पठ्यते । पश्यथ भिक्षव एतं भिक्षुं केशनखस्तूपे सर्वाङ्गेन प्रणिपत्य चित्तमभिप्रसादयन्तम् । एवं भदन्त । अनेन भिक्षवो भिक्षुणा यावती भूमिराक्रान्ताधरशीतियोजनसहस्राणि यावत् काञ्चनचक्रं । अत्रान्तरे यावत्या वालिकास्तावन्त्यनेन भिक्षुणा चक्रवर्तिराज्यसहस्राणि परिभोक्तव्यानि । यावदायुष्मानुपालिर्येन भगवान् तेनाञ्जलिं प्रणाम्य भगवन्तमिदमवोचत् । यदुक्तं भगवतास्य भिक्षोरेवं महान्ति कुशलमूलानि ' कुत्रेमानि भगवन् कुशलमूलानि तनुत्वं परिक्षयं पर्यादानं गच्छन्ति । नाहमुपाले एवं

1) These two words are added in margin, and are not represented in the Tib. (92. b. 2—3). The words *yaiḥ . . kuçalair dharmaiḥ* though represented in the Tib., do not appear to give good sense.

2) A new compound, «paying attention to» Tib. ལྟ་བ' Cf. Pali *mukham oloketi*.

3) Sic MS. Tib. འཕགས་པ་ཐམས་ཅད་ཡོད་པར་སྨྲ་བ་རྣམས་ཀྱི་ གཞུང་ལས་ཀྱང་ Read °*vādināṃ* (?).



क्षतिं चोपहतिं च समनुपश्यामि ' यथा सब्रह्मचारी सब्रह्मचारिणोऽन्तिके दुष्टचित्तमुत्पादयति । अत्रोपाले इमानि महान्ति कुशलमूलानि तनुत्वं परिक्षयं पर्यादानं गच्छन्ति । तस्मात्तर्ह्युपाले एवं शिक्षितव्यं यद्दग्धस्थूणायामपि[1] चित्तं न प्रदूषयिष्यामः । प्रागेव सविज्ञानके काय इति ॥

आर्यमञ्जुश्रीविक्रीडितसूत्रेऽप्याह[2] । प्रतिघः प्रतिघ इति कल्पशतोपचितं कुशलमूलं प्रतिहन्ति तेनोच्यते प्रतिघ इति ॥

आर्यगण्डव्यूहसूत्रे च समन्तसत्वपरित्राणयोजसः स्त्रिया रात्रिदेवतया[3] पूर्वावदानं कथयन्त्याभिहितं । ते तेनान्योन्यावमन्यनासमुदितेनाकुशलमूलेनायुःप्रमाणादपि परिहीयन्ते स्म । वर्णादपि बलादपि परिहीयन्ते स्मेति । अत्र च न कदाचिदुन्नतिः कार्येति प्रदर्शनार्थं सदेत्यु[74 a]च्यते ॥

लाभसत्कारस्तु कदाचिदभ्युपगम्यतेऽपि । यथोक्तं आर्यरत्नमेघे । इह कुलपुत्र बोधिसत्वः सुमेरुमात्रमपि रत्नराशिं लभमानः प्रतिगृह्णाति । प्रत्यवरमपि वस्तु प्रतिलभमानः । तत्कस्य हेतोः । तस्यैवं भवति । एते सत्वा मत्सरिणो लुब्धा लोभाभिभूताः ***[4] । तद्धेतोः तत्प्रत्ययं तन्निदानं महावारिस्कन्धावष्टब्धा इव संसारसागरे उन्मज्जनिमज्जनं कु-

1) ‘even when [one is distraught] on the heated pillar, much less when the body has all its powers of perception’. *sthūṇā* = *sūrmī* has hitherto been vouched for by lexx. only; but see now Mhv. II. 314. 1. On the *sūrmī* see (e. g.) Manu XI. 104.

2) K. F. 230; Nanjio 184 (tr. A. D. 313); Wassiljev 175 (162).

3) Cf. Rāj. Mitra, Nep. B. L. p. 91 fin. I have not verified the present extract in MS. H (v. p. 2 n. 1 supra), but a conversation between Sudhana and the *rātridevatā* there more correctly named Samantasatvatrāṇaujaḥçrī occurs at f. 150.

4) The MS. reads here *kuṭṭakuñcakāḥ* preceded by an equally mysterious form *khaṭṭaṅkāḥ* in the margin. The sentence in the Tibetan (93. a. 5) ends: འཛངས་པ་ཡིན་ཏེ' From this we may conjecture some Prākrit form of *kshudra*(-ka) (to which the lexx. give the secondary sense of ‘mean’, ‘miserly’) similar to those (*khuḍḍāka* etc.) mentioned by Senart on Mhv. I. 302. 12.

र्वन्ति। तदेषां भविष्यति दीर्घरात्रमर्थाय हिताय सुखाय' सर्वं प्रतिगृह्य न स्वीकरोति। न लोभचित्तमुत्पादयति। अन्यत्र सर्वसत्त्वसाधारणां बुद्धधर्मसंघेषु कारां[1] करोति' यथा दुःखितानां च सर्वसत्त्वानामुपजीव्यं करोति। तं च दानपतिं समुत्तेजयति संप्रहर्षयतीति॥

तथात्रैवोक्तं। तेन च दानेन नोन्नतो भवतीति॥ पुनरत्रैवाह। यदि पुनरस्य तद्धेतोस्तत्प्रत्ययं तन्निदानं कीर्तिशब्दश्लोको भवति तत्र नोन्नामजातो भवति न मानजातो न मदजातः। एवं चास्य भवति। न चिरेण कालेन यस्य चायं कीर्तिश्लोकशब्दः समुत्थितो यैश्च समुत्थापितो यश्च कीर्तिशब्दश्लोकस्त्रयमप्येतत्सर्वेण सर्वं न भविष्यति। तत्र कः पण्डितजातीयो ऽनित्येषु न च स्थितेषु धर्मेष्वध्रुवेष्वनाश्वासि[2]केष्वनुनयचित्तमुत्पादयेदुन्नतो भवेन्मानदर्पितो वा। एवं हि बोधिसत्त्वो लाभसत्कारकीर्तिशब्दश्लोकेषु सूपस्थितस्मृतिर्विहरतीति॥

पुनराह। चण्डालकुमारोपमाश्च लोके विहरन्ति नीचनीचेन मनसा। मानमददर्पाधिगताश्च[3] भवन्ति पैशुन्यसंज्ञायाः सततसमितं प्रत्युपस्थितत्वादिति॥

पुनरप्युक्तं। इह कुलपुत्राभिनिष्क्रान्तगृहवासः प्रव्रजितो बोधिसत्त्वो मृतकसदृशोऽहं मित्रामात्य[74 b]ज्ञातिसालोहितानामिति निहतमानो भवति। वैरूप्यं मे ऽभ्युद्गतं विवर्णानि च मे वासांसि प्रावृतान्यन्यश्च मे आकल्पः संवृत्त इति निहतमानो भवति। मुण्डः पात्रपाणिः कुलात्कुलमुपसंक्रमामि भिक्षाहेतोर्भिक्षानिदानमिति निहतमानो भवति। नीचनीचेन चित्तेन चण्डालकुमारसदृशेन पिण्डाय चरामीति निहतमानो भवति। पैण्डलिको ऽस्मि संवृतः' परप्रतिबद्धा च मे जीविकेति निहतमानो भवति। अवधूतमवज्ञातं प्रतिगृह्णामीति निहतमानो भवति। आराधनीया मे आचार्यगुरुदक्षिणीया इति निहतमानो भवति। संतोषणीया मे सब्रह्मचारिणो' यदुत तेन तेनाचारगोचरसमुदाचारेणेति नि-

1) *kārā* (fem.) 'praise; cf. Divy. index.

2) *ānāsvasikeshu* MS.: for the meaning cf. Divyāv. 207. 23.

3) *darpyavigata* MS.



हतमानो भवति। अप्रतिलब्धानबुद्धधर्मान् प्रतिपत्स्य इति निहतमानो भवति। क्रुद्धानां व्यापन्नचित्तानां सत्त्वानां मध्ये क्षान्तिबहुलो विहरिष्यामीति निहतमानो भवतीति॥

आर्यसागरमतिसूत्रेऽप्युक्तं। सत्कायपरिशुद्धश्च भवति' लक्षणसमलंकृतगात्रमृदुतरुणहस्तपादः स्वविभक्तपुण्यनिष्यन्दगात्रो ऽहीनेन्द्रियः सर्वाङ्गप्रत्यङ्गपरिपूर्णः। न च रूपमदमत्तो भवति। न कायमण्डनयोगानुयुक्तः। स कियद्धीनानामपि सत्त्वानां रूपविकलानामप्यवनमति प्रणमति धर्मग्राह्यतामुपादायेति॥

पुनरत्रैवोक्तं। स्याद्यथापि नाम भगवन् यदा महासागरः प्रतिसंतिष्ठते तदा निम्ने पृथिवीप्रदेशे संतिष्ठते। तस्य निम्नत्वादल्पकृच्छ्रेण सर्वनद्यश्च सर्वप्रस्रवणानि च प्रपतन्ति। एवमेव भगवन् निर्मानस्य गुरुदक्षिणीय[1]गौरवस्य बोधिसत्त्वस्याल्पकृच्छ्रेण तानि गम्भीराणि धर्मसुखानि श्रो[75 a]त्रेन्द्रियस्याभासमागच्छन्ति। स्मृतौ चावतिष्ठन्ते। तस्मात्तर्हि भगवन् यो बोधिसत्त्वो मानोन्नतो भवति मानस्तब्धः न च गुरुदक्षिणीयेभ्यो ऽवनमति न प्रणमति वेदितव्यं भगवन्माराङ्कुशाविद्धो बतायं बोधिसत्त्व इति॥

आर्यलोकोत्तरपरिवर्ते[2] चोक्तं' दशेमानि भो जिनपुत्र बोधिसत्त्वानां मारकर्माणि। कतमानि दश। यदिदं गुरुदक्षिणीयाचार्यमातापितृश्रमणब्राह्मणसम्यग्गतसम्यक्प्रतिपन्नेष्वगौरवता मारकर्म। धर्मभाणकानां विशिष्टधर्माधिगतानामुदारधर्मदेशकानां महायानसमारूढानां निर्वाणपथविधिज्ञानां धारणीसूत्रान्तराजप्रतिलब्धानां नावनमति। गर्वितस्तब्धश्च भवति। धर्मभाणके न गौरवमुत्पादयति। न शुश्रूषां न चित्रीकारं[3] करोति। मारकर्म धर्मश्रवणसांकथ्ये च निषण्ण उदारधर्मवेगे समुत्पन्ने धर्मभाणकस्य साधुकारं न

1) cf. Kāraṇḍavyūha (ref. in B²) 96. 21 *bhikshūṇāṃ çilavatāṃ dakshiṇīyāṇāṃ*.

2) M. Vyutp. lxv. 9.

3) 'regard', a form peculiar to Buddh. Skt., wh. Böhtlingk (W.K.F. Nachtr. VI) with one MS. of M. Vyutp. (XCVII. 6) would correct to *cittīkāra*. But see Senart, Mhv. I. 444; and regarding his illustration from Pāṇini (III. iii. 150) compare the usages of θαυμάζειν for the transition from 'étonnement' to 'respect'.

प्रयच्छति मा कश्चिदस्मिन्प्रशंसतीति[1] मारकर्म ॥ अभिमानं चोत्पाद्यात्मानं प्रतिगृह्णाति ' परांश्च न गृह्णाति ' आत्मज्ञतां च नावतरति ' चित्तनिध्यप्तिं नोत्पादयति ' मारकर्म ॥ अधिमानं चोत्पाद्याज्ञानमनुबुध्यमानो वर्णार्हाणां पुद्गलानां वर्णं प्रतिच्छादयति ' अवर्णं भाषते। न च परस्य गुणवर्णेनात्तमना भवति ' मारकर्म ॥ जानाति च ' अयं धर्मो ऽयं विनयो भूतमिदं बुद्धवचनमिति। पुद्गलविद्वेषेण धर्मविद्वेषं करोति ' सद्धर्मं प्रतिक्षिपति ' अन्यांश्च विग्राहयति ' मारकर्म ॥ उच्चमानसं प्रार्थयते परिहारधर्मं न मार्गयति। परोपस्थानं सोऽभियाति[2] ।अभिनन्दति ' वृद्धस्थविराणां चिरचरितब्रह्मचर्याणां न प्रत्युपतिष्ठते न च प्रत्युद्गच्छति ' मारकर्म ॥ भृकुटीमुखः खलु पुनर्भवति। न स्मितमुखः। न खिल मधुरवचनः। सदा कठिनचित्तश्छिद्रान्वेषी ' अवतारप्रेक्षी ' मा[75 b]रकर्म ॥ अभिमानं च पतित्वा पण्डितान्नोपसंक्रामति ' न सेवते ' न भजते ' न पर्युपास्ते ' न परिप्रश्नयति। न परिपृच्छति ' किं कुशलं किमकुशलं किं करणीयं किं कृतं दीर्घरात्रमर्थाय हिताय सुखाय भवति ' किं वाऽकृतं दीर्घरात्रमनर्थायाहितायासुखाय भवतीति। सजडः[3] सजडतरो[3] भवति ' मोहव्यूहो मानग्राही ' अनिःसरणदर्शी ' मारकर्म ॥ स मानाभिभूतो बुद्धोत्पादं विरागयति ' पूर्वकुशलमूलं क्षपयति। नवं नोत्थापयति ' अनिर्देशं निर्दिशति ' विग्रहमारभते विवादबहुलश्च भवति। स एवं धर्मविहारी स्थानमेतद्विद्यते यस्मिन्मिथ्या महाप्रपातं पतेत्। अथ च पुनर्बोधिचित्तबलाधीनादैश्वर्यं प्रतिलभते। स कल्पशतसहस्रेषु बुद्धोत्पादं नासादयति। कुतः पुनर्धर्मश्रवणम् ' इदं दशमं मारकर्म ॥ इमानि भो जिनपुत्र दश मारकर्माणि। यानि परिवर्ज्य बोधिसत्वा दश ज्ञानकर्माणि प्रतिलभन्ते ' अत्रैव च ज्ञानकर्मसु पच्यते। निर्मानता सर्वसत्वेष्विति ॥

---

1) 'lest anyone should praise him for it'; cf. Speijer, Syntax p. 319. n. 1.

2) The MS. reads *sābhīyati*. The Tib. (95. a. 1) has གཞན་གྱི་རིམ་གྲོ་བྱ་བར་སྤྲོད་ཅིང་

3) Possibly a case of sa-intensive; cf. Childers p. 406, and supra pp. 110 n. 3, 113, n. 2.



आर्यराष्ट्रपालसूत्रेऽप्युक्तं[1] ।

अपायभूमिं ' गतिमक्षणेषु।  
दरिद्रतां ' नीचकुलोपपत्तिम्।  
जात्यन्ध्यदौर्बल्यमथाल्पस्थामतां।  
गृह्णन्ति ते मानवशेन मूढाः ॥

इति ॥

धर्मसंगीतिसूत्रेऽप्युक्तं। सत्वक्षेत्रं बोधिसत्वस्य बुद्धक्षेत्रं यतश्च बुद्धक्षेत्राद्बुद्धधर्माणां लाभागमो भवति ' नार्हामि तस्मिन्विप्रतिपत्तुम्। एवं चास्य भवति ' सर्वं सुचरितं दुश्चरितं च सत्वान्निश्रित्य प्रवर्तते। दुश्चरिताश्रयाच्चापायाः प्रवर्तन्ते। सुचरिताश्रयाद्देवमनुष्या इति ॥

अत एव रत्नोल्काधारण्यामप्युक्तं ' इह भो जिनपुत्राः प्रथमचित्तोत्पादिको बोधिसत्वः आदित एव सर्वसत्वानामन्तिके दशप्रकारं चित्तमुत्पादयति। कतमद्दशप्रकारं। तद्यथा। हितचित्ततां सुखचित्ततां दयाचित्ततां स्निग्धचित्ततां [76 a] प्रियचित्ततां अनुग्रहचित्ततां आरक्षाचित्ततां समचित्ततां आचार्यचित्ततां शास्तृचित्ततां। इदं दशप्रकारं चित्तमुत्पादयतीति ॥

श्रद्धाबलाधानावतारमुद्रासूत्रे ऽप्युक्तं। सर्वसत्वानां शिष्यत्वाभ्युपगमे स्थितोऽस्मि। परांश्च सर्वसत्वशिष्यत्वाभ्युपगमे प्रतिष्ठापयिष्यामीत्याश्वासं प्रतिलभते ॥ पेयालं ॥ सर्वसत्वेष्ववनमप्रणमनतायां प्रतिष्ठितोऽस्मीति पूर्ववत् ॥

तत्रावनमनप्रणमनतायां सर्वसत्वेषु निर्मानता ॥

तथार्यविमलकीर्तिनिर्देशे। परिशुद्धबुद्धक्षेत्रोपपत्तये सर्वसत्वेषु शास्तृप्रेमोक्तं। लोकप्रसादानुरक्षार्थं त्वासनपादप्रख्यालनकर्म[2] कुर्वतापि चेतसा स्त्रीषु वाक्षणप्राप्तेषु वा विनिपतितेषु बोधिसत्वेन प्रेमगौरवाभ्यासः कार्यः ॥

---

1) 54. 16 supra.

2) So MS. for *prakshālana*: cf. Pali *pakkhāleti*.

उक्तं हि गण्डव्यूहे तस्य समनन्तरनिषण्णस्य तस्मिन्महासिंहासने सर्वः स जनकायो ऽभिमुखः प्राञ्जलिस्थितो ऽभूत्। तमेव राजानं नमस्यमानः॥ पे॥ स खलु सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषो राजा तेषां याचनकानां सह दर्शनेनात्तमनस्कतरो राज्ञानेन च त्रिसाहस्रचक्रवर्तिराज्यप्रतिलाभेनासीमाप्राप्तकल्पपर्यवसानेन ' यावत् शुद्धावासदेवशान्तिविमोक्षसुखविहारेणापर्यन्तकल्पावसानेन। तद्यथा कुलपुत्र पुरुषस्यैकान्ततृष्णाचरितस्य मातापितृभ्रातृभगिनीमित्रामात्यज्ञातिसालोहितपुत्रदुहितृभार्याचिरकालवियुक्तस्याटवीकान्तारविप्रणष्टस्य तद्दर्शनकामस्य ' तेषां समवधानेन महती प्रीतिरध्यवसानमुत्पतेत् तद्दर्शनावितृप्ततया। एवमेव कुलपुत्र राज्ञः सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य तेषां याचनकानां सह दर्शनेन महाप्रीतिवेगाः संजाताः। चित्ततुष्टिसुखमवक्रान्तं महांश्चित्तोद्यतावेगः प्रादुर्भू[76 b]तो यावत्तेषु सर्वयाचनकेषु एकपुत्रकसंज्ञा मातापितृसंज्ञा दक्षिणीयसंज्ञा कल्याणमित्रसंज्ञा वर्णसंज्ञा दुर्लभसंज्ञा दुष्करकारकसंज्ञा बहुकरसंज्ञा परमोपकारिसंज्ञा बोधिमार्गोपस्तम्भसंज्ञा आचार्यशास्तृसंज्ञोत्पद्येतेति॥

एवमन्यगतभावे[1] सत्त्वानामग्रतोगमनोपस्थानादिप्रसङ्गे सर्वोत्सर्गं स्मरेत्। एषामेवायमात्मीयः कायः। यथेष्टमत्र वर्तन्ताम्। पृथिवीशोधनोपलेपनादिष्विव स्वसुखार्थमिति। अथवा स्वाम्यप्रसादभीतेनेव तत्प्रसादार्थिनेव तदाज्ञासंपादना मनसि कर्तव्या। भगवतो ऽप्युपस्थानं कुर्वतो ऽन्यगत्यभावात् ' भिक्षुणा ग्लानेनाङ्गीकृतं॥

यथोक्तं भिक्षुप्रकीर्णके[2]। भगवानाह। मा भाय[3] भिक्षु मा भाय भिक्षु ' अहं ते भिक्षूपस्थास्यं। आहर भिक्षु चीवराणि यावत्ते धोपामि[3]। एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत्। मा भगवानेतस्य ग्लानस्याशुचिम्रक्षितानि चीवराणि धोवतु। अहं भगवन् धोविष्यं। भगवानाह। तेन ह्यानन्द त्वमेतस्य भिक्षुस्य चीवराणि धोव। तथागतो उदकमा-

1) *upakārarāçaye* marg.

2) Not in Nanjio or K. F.; Tib. དགེ་སློང་གི་བྱ་བ་རྒྱས་པ་ (96. b. 3).

3) Prakrit and Pali forms.



सिञ्चिष्यति। अथ खल्वायुष्मानानन्दो तस्य ग्लानस्य भिक्षुस्य चीवराणि धोवति। भगवानुदकमासिञ्चति॥ पे॥ अथ खल्वायुष्मानानन्दस्तं ग्लानं भिक्षुं साधु च सुष्ठु चानुपरिगृह्य बहिर्धा[1] हरित्वा स्नापयेत् ' भगवानुदकमासिञ्चतीति। आह च।

यानाराध्य[2] महत्त्वं विराध्य कष्टां विपत्तिमाप्नोति।
प्राणपरित्यागैरपि तेषां ननु तोषणं न्याय्यं॥
एते ते वै सत्त्वाः प्रसाद्य यान्सिद्धिमागता बहवः।
सिद्धिक्षेत्रं नान्यत् सत्त्वेभ्यो विद्यते जगति॥
एते[3] चिन्तामणयो भद्रघटा धेनवश्च कामदुघाः।
गुरुवच्च देवतेव च तस्मादाराधनीयास्ते॥
किं[4] च निश्छद्मबन्धूनामप्रमेयोपकारिणाम्।
सत्त्वाराधनमुत्सृज्य निष्कृतिः[5] का परा भवेत्॥
शिरसा धारयामास पुरा नाथो यथेप्सितम्।
जटासूद्युषितान्सत्त्वान्भूत्वा यत्नेन निश्चलः॥
भिन्दन्ति[6] देहं प्रविशन्त्यवीचीम् येषां कृते तत्र कृते कृतं स्यात्।
महापकारिष्वपि तेन सर्वं कल्याणमे[77 a]वाचरणीयमेषु॥
स्वयं मम स्वामिन एव तावद्यदर्थमात्मन्यपि निर्व्यपेक्षाः।
अहं कथं स्वामिषु तेषु तेषु करोमि मानं न तु दासभावम्॥

1) °*dhā nī haritvā* MS. With *haritvā* for *hṛtvā* compare the Pali.

2) Metre of first three stanzas: Āryā.

3) Cf. Bodhic. III. 19. Prof. d'Oldenburg compares the quotation from the Jambhalastotra of Candragomin in the Nāmasaṃgīti-ṭīkā:
*bhadraghaṭakalpapādapacintāmaṇayo 'py acetanāvantaḥ* |
*te 'pi sukhayanti satvān kimu na Bhagavān svikṛtakṛpayā* ||.

4) = Bodhic. VI. 119.

5) *pratyupakāro buddhānaṃ* marg.

6) The following verses down to the end of the citation p. 157.8 occur at Bodhic. VI. 120—134, 115. A few variants are noted below.

येषां सुखे यान्ति मुदं मुनीन्द्राः येषां व्यथायां प्रविशन्ति मन्युम् ।
तत्तोषणात्सर्वमुनीन्द्रतुष्टिस्तत्रापकारे ऽपकृतं मुनीनां ॥
आदीप्तकायस्य यथा समन्तान् ' न सर्वकामैरपि सौमनस्यम् ।
सत्वव्यथायामपि तद्वदेव न प्रीत्युपायोऽस्ति महाकृपाणाम्[1] ॥
तस्मान्मया यज्जनदुःखनेन[2] ' दुःखं कृतं सर्वमहादयानां[1] ।
तदद्य पापं प्रतिदेशयामि यत्खेदितास्ते[3] मुनयः क्षमन्ताम् ॥
आराधनायाद्य तथागतानां सर्वात्मना दास्यमुपैमि लोके ।
कुर्वन्तु मे मूर्ध्नि पदं जनौघाः निघ्नन्तु वा तुष्यतु लोकनाथः ॥
आत्मीकृतं सर्वमिदं जगत्तैः कृपात्मभिर्नैव हि संशयो ऽत्र ।
दृश्यन्त एते ननु[4] सत्वरूपास् ' त एव नाथाः किमनादरो ऽत्र ॥
तथागताराधनमेतदेव स्वार्थस्य संसाधनमेतदेव ।
लोकस्य दुःखापहमेतदेव तस्मान्ममास्तु व्रतमेतदेव ॥
यथैको राजपुरुषः प्रमथ्नाति महाजनं ।
विकरोति न शक्नोति[5] दीर्घदर्शी महाजनः ॥
यस्मान्नैव स एकाकी तस्य राजबलं बलं ।
तथा न दुर्बलं कंचिदपराद्धं विमानयेत् ॥
यस्मान्नरकपालाश्च कृपावन्तश्च तद्बलं ।
तस्मादाराधयेत्सत्वान् भृत्यश्चण्डनृपं यथा ॥
कुपितः किं नृपः कुर्याद्येन स्यान्नरकव्यथा ।
यत्सत्वदौर्मनस्येन कृतेन ह्यनुभूयते ॥

1) .. 1) *dāyamayānām . . . sarva-mahākṛpāṇām* Bodhicāryāv. text.
2) sic MS.; *duḥkhadena* Bodhic.; cf. གཏོང་བྱས་པས་ Tib. (97. a. 6).
3) *tanmun°* Bodhic.
4) *driçyantu etena tu* Bodhic.
5) melius Bodh. *vikartuṃ naiva°*.



तुष्टः किं नृपतिर्दद्याद्यद्बुद्धत्वसमं भवेत् ।
यत्सत्वसौमनस्येन कृतेन ह्यनुभूयते ॥
आस्तां भविष्यद्बुद्धत्वं सत्वाराधनसंभवं ।
इहैव सौभाग्ययशः सौस्थित्यं किं न पश्यसि ॥
प्रासादिकत्वमारोग्यम् प्रामोद्यं चिरजीवितं ।
चक्रवर्तिसुखं स्फीतं क्षमी प्राप्नोति संसरन् ॥
मैत्राशयश्च यत्पूज्यः सत्वमाहात्म्यमेव तत् ।
बुद्धप्रसादाद्यत्पुण्यं बुद्धमाहात्म्यमेव तत् ॥ ॥

अत एव हि चन्द्रप्रदीपसूत्रे मैत्रीभावफलमुद्भावितम् ।

यावन्ति पूजां बहुविध अप्रमेयाः ।
क्षेत्रं शतेषू नियुत च बिम्बरेषू[1] ।
तां पूज कृत्वा अतुलियनाय[77 b]कानां ।
संख्याकलापी न भवति मैत्रचित्ते ॥

तस्मादेवंविधेषु महादक्षिणीयेषून्नतिं वर्जयेत्सदा । एषा चोन्नतिरयोनिशोमनस्कारात्संभवतीति ॥

तस्यानवतारे यत्नः कार्यः । यथोक्तं रत्नमेघे । कथं च कुलपुत्र बोधिसत्वो ऽयोनिशोमनस्कारापगतो भवति । इह बोधिसत्व एका कीरहो गतः प्रविवेकस्थितो नैवं चित्तमुत्पादयति । अहं असंकीर्णविहारी ' अहं प्रविवेकस्थितः । अहं प्रतिपन्नस्ताथागते धर्मविनये । ये त्वन्ये श्रमणा वा ब्राह्मणा वा सर्वे ते संकीर्णविहारिणः । संसर्गबहुला उद्धुरा[2]स्ताथागताद्धर्मविनयात् ॥

1) Name of a high number peculiar to Buddh. Skt., not determinable from the Tib. (nor elsewhere, probably!), which has གདམས་སྟེང་ «about a thousand billion». *kshetraḥ . . . nayuta* MS. I have not identified the metre of these lines.
2) *uddhṛtaḥ* marg.

एवं हि बोधिसत्वो ऽयोनिशोमनस्कारापगतो भवति ॥

पुनरत्रैवोक्तम् । इह बोधिसत्वो वीर्यमारभमाणो न तन्महद्वीर्यमास्वादयति ' न च तेन वीर्येणात्मानमुत्कर्षयति ' न परान्पंसयति[1] । तस्यैवं भवति । को हि नाम सप्रज्ञजातीयः स्वकर्माभियुक्तः परांश्चोदयेत् ॥

एवं हि बोधिसत्वो ऽनुन्नतवीर्यो भवति ॥

एष तु पुण्यरक्षायाः संक्षेपो[2] यद्बोधिपरिणामना ॥

तथा ह्युक्तमार्याक्षयमतिसूत्रे । न हि बोधिपरिणामितस्य कुशलमूलस्यान्तरा कश्चित्परिक्षयो यावद्बोधिमण्डनिषदनात् । तद्यथापि नाम भदन्त शारद्वतीपुत्र महासमुद्रपतितस्योदकबिन्दोर्नान्तरास्ति क्षयो यावन्न कल्पपर्यवसान ' इति ॥

॥ इति शिक्षासमुच्चये भोगपुण्यरक्षा सप्तमः परिच्छेदः ॥

## VIII.

## पापशोधनं अष्टमः परिच्छेदः

उक्ता त्रयाणामप्यात्मभावादीनां रक्षा । शुद्धिरधुना वक्तव्या । किमर्थम्[3] ।

शोधितस्यात्मभावस्य भोगः[4] पथ्यो भविष्यति ।
सम्यक्सिद्धस्य भक्तस्य निष्कणस्येव[5] देहिनाम् ॥

यथोक्तमार्यतथागतगुह्यसूत्रे । यानि च तानि महानगरेषु महाश्मशानानि भवन्त्यनेकप्राणिशतसहस्राकीर्णानि ' तत्रापि स बोधिसत्वो महासत्वो महान्तमात्मभावं मृतं का-

1) cf. 63. 6 supra.
2) *saṃkhyepo* MS.
3) *çodhanaphalaṃ tāvad āha* marg.
4) *satvānāṃ* marg.
5) A new form, but attested by the Tib. གཙེགས་མེད་ (98. b. 1) 'without an atom of dirt'.



लगतमुपदर्शयति । तत्र ते तिर्यग्योनिगताः सत्वा यावदर्थं मांसं परिभुज्यायुःपर्यन्ते मृताः कालगताः सुगतौ स्वर्गलोके देवेषूपपद्यन्ते । स चैव तेषां हेतुर्भवति यावत्परि[78 a]निर्वाणाय । यदिदं ' तस्यैव बोधिसत्वस्य पूर्वप्रणिधानपरिशुद्ध्या ' येन दीर्घरात्रमेवं प्रणिधानं कृतं ' ये मे मृतस्य कालगतस्य मांसं परिभुञ्जीरन् । स एव तेषां हेतुर्भवेत् स्वर्गोत्पत्तये यावत्परिनिर्वाणाय तस्य शीलवतः । ऋध्यति चेतना ' ऋध्यति प्रार्थना ' ऋध्यति प्रणिधानमिति ॥

पुनरत्रैवोक्तं । स धर्मकायप्रभावितो दर्शनेनापि सत्वानामर्थं करोति । श्रवणेनापि स्पर्शनेनापि सत्वानामर्थं करोति । तद्यथापि नाम शान्तमते जीवकेन वैद्यराजेन सर्वभैषज्यानि समुदानीय भैषज्यतरुसंघातमयं दारिकारूपं[कृतं][1]प्रासादिकं दर्शनीयं सुकृतं सुनिष्ठितं सुपरिकर्मकृतं । सागच्छति गच्छति तिष्ठति निषीदति शय्यां च कल्पयति । तत्र ये आगच्छन्त्यातुरा महात्मानो राजानो वा राजमात्रा वा श्रेष्ठिगृहपत्यमात्यकोट्टराजानो[2] वा ' तान्स जीवको वैद्यराजस्तया भैषज्यदारिकया सार्द्धं संयोजयति ' तेषां समनन्तरसंयोगमापन्नानां सर्वव्याधयः प्रस्रभ्यन्ते ऽरोगाश्च भवन्ति सुखिनो निर्विकाराः । पश्य शान्तमते जीवकस्य वैद्यराजस्य लौकिकव्याधिचिकित्साज्ञानं यद्यन्येषां वैद्यानां संविद्यते । एवमेव शान्तमते तस्य धर्मकायप्रभावितस्य बोधिसत्वस्य यावन्तः सत्वाः स्त्रीपुरुषदारकदारिका रागदोषमोहसंतप्ताः कायं स्पृशन्ति ' तेषां संस्पृष्टमात्राणां सर्वक्लेशाः प्रस्रभ्यन्ते विगतसंतापं च कायं संजानन्ति ॥ यदिदं तस्यैव बोधिसत्वस्य पूर्वप्रणिधानसुपरिशुद्धत्वात् । एतदर्थमात्मभावः शोध्यः ॥

किं च अशोधने दोषमाह ।

तृणाछन्नं यथा शस्यं रोगैः सीदति नैधते ।
बुद्धाङ्कुरस्तथा वृद्धिं क्लेशछन्नो न गच्छति ॥

1) This word in margin (later hand).
2) 'etwa Burggraf' $B^2$, quoting Lal-v. 136. 15 (an enumeration similar to the present). Tib. རྒྱལ་ཕྲན་ 'feudatory prince' (Jäschke).

प्रतिपक्ष[1]निरासेन वृद्ध्यर्थं चे[2]त्यभिप्रायः ॥

आत्मभावस्य का शुद्धिः ' पापक्लेशविशोधनं।

संबुद्धोक्त्यर्थसारेण ' यत्नाभावे त्वपायगः ॥

तत्र पापशोधनं चतुर्धर्मकसूत्रे देशितम्। चतुर्भिर् मैत्रेय धर्मैः समन्वागतो बोधिसत्वो
5 महासत्वः कृतोपचितं पापमभिभवति। कतमैश्चतुर्भिः। यदुत ' विदूषणा[3]समुदाचारेण प्र-
तिपक्षसमुदाचारेण। प्रत्यापत्तिबलेन। आश्रयबलेन च ॥ तत्र वि[78b]दूषणा[3]समुदाचारो
ऽकुशलं कर्माध्यचारति तत्रै तत्रैव च विप्रतिसारबहुलो भवति ॥ तत्र प्रतिपक्षसमुदा-
चारः कृत्वाप्यकुशलं कर्म कुशले कर्मण्यत्यर्थाभियोगं गतः[4]॥ प्रत्यापत्तिबलं संवरसमा-
दानादकरणसंवरलाभः ॥ तत्राश्रयबलं बुद्धधर्मसंघशरणागमनमनुत्सृष्टबोधिचित्तता च।
10 सुबलवत्संनिश्रयेण न शक्यते पापेनाभिभवितुं ' एभिर् मैत्रेय चतुर्भिर्धर्मैः समन्वागतो बो-
धिसत्वो महासत्वः कृतोपचितं पापमभिभवतीति ॥

तत्र कथं विदूषणासमुदाचारो भावयितव्यः। यथा सुवर्णप्रभासोत्तमसूत्रे[5] ऽभिहितं ॥

समन्वाहरन्तु मां बुद्धाः कृपाकारुण्यचेतसः।
ये च दशदिशि लोके तिष्ठन्ति[6] द्विपदोत्तमाः ॥

---

1) *kleçapāpau* marginal gloss (partly deleted).

2) *ātmabhāvaḥ çodhyaḥ* marg.

3) Apparently 'self-reproach'. Tib. has simply རྣམ་པར་སུན་འབྱིན་ (99. a. 6).

4) *atya[r?]thābhiyogatas* MS.; ཤིན་ཏུ་བརྩོན་པའོ་ Tib. (99. a. 7).

5) The following passage has been collated with three MSS. of the sūtra: Cambridge, Univ. Library Add. 1342, f. 8. b. 6 (called B.); *ibid.* Add. 875. f. 10. b. (C); London, R. As. Soc. Hodgson № 8. f. 9 (H), and with the printed text (pp. 12—16) of the Buddhist Text Society (P), from advance-sheets kindly forwarded by Rai Çarat-Candra Dās Bahādur. H. has many errors due to the extremely inferior copyist, which are not all noted. *Samānvāh°* forms possibly a case of the anapæstic beginning noted at p. 92, n. 4.

6) *shṭhati* A.; *atyayam pratigṛhṇantu daçadikshu vyavasthitāḥ* P.



यच्च मे पापकं कर्म कृतं पूर्वं सुदारुणं।
तत्सर्वं देशयिष्यामि स्थितो[1] दशबलाग्रतः[2] ॥
मातापितॄनज्ञानता[3] बुद्धानामप्रज्ञानता।
कुशलं चाप्रज्ञानता[4] यत्तु[5] पापं कृतं मया ॥
5 ऐश्वर्यमदमत्तेन कुल[6]भोगमदेन च।
तारुण्यमदमत्तेन यत्तु पापं कृतं मया ॥
दुश्चिन्तितं दुरुक्तं च दुष्कृतेनापि कर्मणा।
अनादीनवदर्शिना[7] यत्तु पापं कृतं मया ॥
बालबुद्धिप्रचारेण[8] अज्ञानावृतचेतसा।
10 पापमित्रवशाच्चैव क्लेशव्याकुलचेतसा ॥
क्रीडारतिवशाच्चैव शोकरोग[9]वशेन वा।
अतृप्तधनदोषेण यत्तु पापं कृतं मया ॥
अनार्यजनसंसर्गैरीर्ष्यामात्सर्यहेतुना।
शाठ्यदारिद्र्यदोषेण यत्तु पापं कृतं मया ॥
15 व्यसनागमकाले ऽस्मिन् कामानां भयहेतुना।
अनैश्वर्यगतेनापि यत्तु पापं कृतं मया ॥
चलचित्तवशेनैव कामक्रोधवशेन वा[10]।
क्षुत्पिपासार्दितेनापि यत्तु पापं कृतं मया ॥

---

1) *sthito'haṃ* A. P.
2) °*balāçritaḥ* H.
3) *pitṛnajānanto* A.; °*pitṛnavajñataḥ* H; *pitṛnavajñānād* P.
4) °*nanto* A.
5) *yatra* B. C. P., hic et infra.
6) *kularūpa*° B. C. H. P.
7) *darçinā ca yat*° A.; °*vadrishṭena* B. C.; °*vanashṭena* P.
8) °*cālena* P.
9) *rosha* A.; *rāga* P.
10) *ca* A.

पानार्थं भोजनार्थं च वस्त्रार्थं स्त्रीषु हेतुना ।
विचित्रैः क्लेश[1]संतापैर्यत्तु पापं कृतं मया ॥
कायवाङ्मनसां[2] पापं त्रिधा दुश्चरितं चितं[3] ।
यत्कृतमीदृशै रूपैस्[4]तत्सर्वं देशयाम्यहम् ॥
यत्तु बुद्धेषु धर्मेषु श्रावकेषु तथैव च ।
अगौरवं कृतं स्याद्धि तत्सर्वं देशयाम्यहम् ॥
यत्तु प्रत्येकबुद्धेषु बोधिसत्त्वेषु वा पुनः ।
अगौरवं कृतं स्याद्धि तत्सर्वं देशयाम्यहम् ॥
[5]सद्धर्म[79 a]भाणकेष्वत्र अन्येषु गुणवत्सु वा ।
अगौरवं कृतं स्याद्धि तत्सर्वं देशयाम्यहम् ॥
सद्धर्मः प्रतिक्षिप्तः स्यादज्ञानं[6] तेन मे सदा ।
मातापितृष्वगौरवं[7] तत्सर्वं देशयाम्यहम् ॥
मूर्खत्वेन बालत्वेन[8] मानदर्पावृतेन च ।
रागद्वेषेण मोहेन तत्सर्वं देशयाम्यहम्[9] ॥
व्यवलोकयन्तु मां बुद्धाः[10] समन्वाहृतचेतसः[11] ।
अत्ययं प्रतिगृह्णन्तु[12] कारुण्यार्पितचेतसः[13] ॥

1) *vividha kleça* B. C. H.
2) *vāṅmānasam* B. C.; ; *vācamānasaṃ* (unmetrically) P.
3) *tridhātu caritaṃ ca tat* B. C. H. P.
4) *īdriçaṃ rūpaṃ* B. C.
5) This stanza does not occur in B. C. P.
6) *syāt sujña°* H.; P.'s reading I can neither scan nor construe.
7) *agauravaṃ yacca* A. *tṝç ca gauravaṃ* B. C.
8) *mūrkhatvenāpi bālatve* B. cf. P.
9) Here our author passes over some half-dozen stanzas (pp. 13.13—14.10 in P.).
10) Scansion as above 160.13; cf. also Pali *olokentu*. *°kaya mām buddha mocaya mām bhayā[t] tataḥ* H., cf. P.; *mocayantu ca maṃ bhayāt* B. C. Compare seven lines below.
11) *°tasā* B. P.
12) So B. P.; *mama gṛ°* A.
13) This and the next three lines do not occur in B. C.



[1]यत्तु पापं कृतं पूर्वं मया कल्पशतेषु च ।
तस्यार्थं शोकचित्तोऽहं कृपणोयो[2] भयार्दितः ॥
[3]भवामि पापकर्माणां सततं दीनमानसः ।
यत्र यत्र चरिष्यामि न चास्ति मे बलं क्वचित् ॥
सर्वे कारुणिका बुद्धाः सर्वे भयहरा जगे[4] ।
अत्ययं प्रतिगृह्णन्तु मोचयन्तु च मां भयात् ॥
क्लेशकर्मफलं[5] मह्यं प्रवाहयन्तु[6] तथागताः ।
स्नापयन्तु च मां बुद्धाः कारुण्यसरितोदकैः[7] ॥
सर्वं पापं देशयामि यत्तु पूर्वं कृतं मया ।
यच्च एतर्हि मे पापं तत्सर्वं देशयाम्यहम् ॥
आपत्यां संवरमापद्ये[8] सर्वदुष्कृतकर्मणाम् ।
न छादयामि तत्पापं यद्भवेन्मम दुष्कृतम् ॥
त्रिविधं कायिकं[9] कर्म वचसा च चतुर्विधम् ।
मनसा त्रिप्रकारेण तत्सर्वं देशयाम्यहम् ॥
[10]कायकृतं वाचकृतं मनसा च विचिन्तितं ।
कृतं दशविधं कर्म तत्सर्वं देशयाम्यहम् ॥

1) *kṛpaṇe tṛshṇayārd°* P.
2) So P.; *bhāyāmi pā* A.
3) So P.; *rati me* A: *cāsti me balā kacit* H.
4) *jināḥ* H.; cf. P.
5) *malam* A.
6) So, with hypermetron, A. P. H.; (to be scanned as if *°vāhentu*); B has *pravāhantu* representing more closely the scansion of the line.
7) *°vimalodakaiḥ* B. H.; cf. P.
8) The above reading of A. is unmetrical (*saṃvaram* as dissyllable?). *apattyā sarvam āpadyam* B.; *āyatyā sarvam āpadyaṃ* C.; *āpadbhyaḥ sarvapāpebhyaḥ* P.
9) H. is hopelessly corrupt and unmetrical here. The reading of its archetype may have been: *caturvidhaṃ tu mānasam. Vācikaṃ tu caturv° mānasam triprakāram tu* B. C. P. leaves a *lacuna*.
10) H. is corrupt and unintelligible in this stanza *°taṃ ca vākkṛtaṃ* B. C.

यच्च मे पापकं कर्म अनिष्टफलदायकं[1]।
तत्सर्वं देशयिष्यामि बुद्धानां पुरतः स्थितः॥

[2]भवगतिसंकटे बालबुद्धिना पापं यन्मे कृतं सुदारुणम्। दशबलमग्रतः स्थितः तत्सर्वं पापं प्रतिदेशयामि। देशयामि च तत्पापं यन्मया संचितं जन्मसंकटे विविधैः कायप्रचारसंकटैर्भवसंकटलोकसंकटे चापलचलचित्तसंकटे मूर्खबालकृतक्लेशसंकटे। पापमित्रागमसंकटेन च। भयसंकटरागसंकटे दोषमोहतमसंकटैरपि क्षणसंकटे कालसंकटे पुण्योपार्जनसंकटैरपि। जिनसंकटसंमुखस्थितः। तत्सर्वपापं प्रतिदेशयामि॥

विशेषतस्तु बोधिसत्त्वापत्तीनां गुर्वीणां लघ्वीनां देशनार्योपालिपरिपृच्छायामुक्ता[3] [79 b]। का पुनर्गुर्वी मूलापत्तिः॥ सामान्यतस्तु तत्रोक्तं। सचेदुपाले महायानसंप्रस्थितो बोधिसत्त्वो महासत्त्वो गङ्गानदीवालिकोपमा रागप्रतिसंयुक्ता आपत्तीरापद्येत। यां चैकतो द्वेषसंप्रयुक्तामापत्तिमापद्येत बोधिसत्त्वयानं प्रमाणीकृत्य॥ पे॥ इयं ताभ्यो गुरुतरा आपत्तिर्येयं द्वेषसंयुक्ता। तत्कस्य हेतोः। योऽयं द्वेष उपाले सत्त्वपरित्यागाय संवर्तते। रागः सत्त्वसंग्रहाय संवर्तते। तत्रोपाले यः क्लेशः सत्त्वसंग्रहाय संवर्तते' न तत्र बोधिसत्त्वस्य छलं न भयं॥ पे॥ तस्मात्तर्हि त्वामुपाले याः काश्चन रागप्रतिसंयुक्ता आपत्तयः सर्वास्ता अनापत्तय इति वदामि। कोऽत्राभिप्रायः। सत्त्वसंग्रहस्यैव पूर्वमेव विशेषितत्वाद्' अध्याशयकृपावतो ह्ययमुपदेशः॥ यस्मादनन्तरमाह। तत्रोपाले येऽनुपायकुशला[4] बोधिसत्त्वास्ते रागप्रतिसंयुक्ताभ्य आपत्तिभ्यो बिभ्यति। ये पुनरुपायकुशला

1) *vāhakam* B. H.

2) The following paragraph corresponds generally with H. 11. a. 2—4; but the variants are too numerous too record, nor can I restore the metre (?), though P. prints it as verse. Our text, however, agrees substantially with the oldest known text of the Suv.-pr. (Cambr. Add. 2831 f. 9 b, kindly collated by Miss Ridding). Chief variants: *kāma-* for *kāya-* (l. 4) and *kṛtaṃ mayā dānas*° for *punyopārjanas*°.

3) Citations, in verse however, from a work of this name occur in Madhy-vṛ., pp. 35, 62—3, 82—3. See also the book mentioned by Nanjio 23 (24) and stated by him to bear the longer title Vinayaviniçcaya-upāli-paripṛcchā, with which compare K. F. 216.

4) Cf. Saddh.-P. Ch. II (tr. Kern, p. 30 n. 1).



बोधिसत्त्वास्ते द्वेषसंप्रयुक्ताभ्य आपत्तिभ्यो बिभ्यति न रागप्रतिसंयुक्ताभ्य इति॥

के पुनरुपायकुशलाः[1]। ये प्रज्ञाकृपाभ्यां सत्त्वत्यागान्निवार्यन्ते[2]। उभयथा हि सत्त्वत्यागो भवति' केवलप्रज्ञया दुःखशून्यतावबोधात्' केवलया च कृपया क्लेशबलादचिरेण[3] कृपाहानिः॥

यदुक्तमुपायकौशल्यसूत्रे[4]। तद्यथा कुलपुत्र मंत्रविद्याधरः पुरुषो राज्ञा पञ्चपाशकेन बन्धनेन बद्धः स्यात्। स यदा काङ्क्षेत प्रक्रमणाय तदैकमन्त्रविद्याबलेन सर्वबन्धनानि छित्त्वा प्रक्रमेत्। एवमेव कुलपुत्रोपायकुशलो बोधिसत्त्वः पञ्चभिः कामगुणै रतिं विन्दति तैश्चाकीर्णो विहरति। यदा च पुनराकाङ्क्षते तदा प्रज्ञाबलाधानेन एकेन च सर्वज्ञताचित्तेन सर्वकामगुणान् प्रभुज्य च्युतो ब्रह्मलोक उपपद्यत इति॥

द्वेषेऽपि किं नैवमिष्यते। प्रकृतिमहासावद्यत्वात्। कृपावैकल्ये चोपायस्यैवासंभवात्॥

परार्थसिद्धिं वा स्वार्थाद्गुरुतरामधिमुच्यमानः कोपपरवत्तयापि परमनुशास्यानुतापपूर्वकमापत्त्यां संवरमुत्पद्यते। अहितनिवारके[5] क्रोधे को दोषः। अवकाश[80 a]दानेन तद्वासनादोषात्कृपाहानिदोषः। तच्छेदेन मूलच्छेददोष इति पश्चाद्दर्शयिष्यामः। यद्यपि तस्य सत्त्वस्य तद्धितं तथापि बोधिसत्त्वकृपाहान्या महतः सत्त्वार्थानुबन्धस्य हानिः स्यात्॥

आर्यसत्यके परिवर्तेऽपि पुत्रदृष्टान्तः करुणाधिष्ठित एव वेदितव्यः। यश्च तत्रापि कृपाप्रतिषेधः स लोकार्थपाण्डित्येन लोकावर्जनार्थं[6]। निवार्यमाणश्च यदि हितकामे बो-

1) Reading and punctuation from the Tib. (101. b. 6). °*kuçalā na ye*° MS.

2) *vāraṇena svayam evātyāgāt* marg.

3) *vinā prajñaṃ kshamaṇa . . . kteḥ* marg. Apparently this gloss (not rendered in Tib.) is meant to explain *kṛpāhāniḥ*. The form *kshamaṇa* is new to Sk., but occurs in Pali (*khamana*).

4) See 66.9 and cp. M. Vyutp. lxv. 20 and K. F. 270.

5) *ṇe* marg., as if noting a variant °*vāraṇe*

6) Apparently: «for the sake of winning the world».

धिसत्वे प्रतिघं लभेत स बोधिसत्वः स्यादुभयोरनर्थः ॥

रागेऽपि तर्हि दोषः पद्यते । कामानुषेवणि भोति ग्रन्थ मनुज्ञो ' मातापितृघातयो ।
कामान् सेवतु शीलवन्तु वधयो ' तस्माद्विवर्जेत्सदा इति ॥

स्वसौख्यसंगेन च परदुःखोपेक्षा दृष्टा ॥ सत्यं दृष्टा । येन परदुःखं स्वदुःखतया ना-
5 भ्यस्तं । येन त्वभ्यस्तं ' तस्योभय[1]दोषासंभवः ॥

यथोक्तं चन्द्रप्रदीपसूत्रे । तद्यथापि नामानन्द कश्चिदेव पुरुषोऽधस्तात्पादतलमादाय
यावन्मूर्द्धन्यादीप्तो भवेत् ' संप्रज्वलित एकज्वालीभूतस्तं कश्चिदेव पुरुष उपसंक्रम्य एवं
वदेद् ' एहि त्वं भोः पुरुष निर्वापितेनात्मभावेन [2]पञ्चभिः कामगुणैः समर्पितः समन्वङ्गी-
भूतः क्रीडस्व रमस्व परिचारय[2]स्वेति । तत्किं मन्यसे आनन्द ' अपि तु स पुरुषोऽनिर्वा-
10 पितेनात्मभावेन पञ्चभिः कामगुणैः क्रीडेत रमेत्परिचरेत् ॥ आनन्द आह । नो हीदं भ-
गवन् ॥ भगवानाह । क्रीडेतानन्द स पुरुषो रमेत्परिचरेत्परिकल्पमुपादायापरिनिर्वा-
पितेनात्मभावेन पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतो ' न त्वेवं तथागतस्य पूर्वं बो-
धिसत्वचर्यां चरमाणस्य सत्वान् त्रिभिरपायैर्दुःखितान् दृष्ट्वा दरिद्रानभूत् सौमनस्यं वा चि-
त्तप्रसादो वेति विस्तरः ॥ लोकेऽपि पुत्रे शूलमारोप्यमाणे । पश्यतोर्मातापित्रोर्न स्वसौ-
15 ख्यसंगो दृष्टः स्वानुरूपकृपावशात् । [3]*** प्रच्छन्नस्तर्हि सस्वामिकासु निस्वामिकासु बा-
कुलधर्मगोत्ररक्षितासु काममिथ्याचारो न स्यात् । सति [4]सत्वार्थे सत्वानुपघाते चानुबन्धं निरू-
प्यादोषः [80 b] ॥ सम्यग्ब्रह्मचारिणीषु कृतार्थत्वाद्दूरात्परिहारः । पूज्या च मातृभगिन्या-
दिवत् । [5]एवं तर्हि भिक्षोरप्येवमापन्नं । न तस्यापरेण ब्रह्मचर्यप्रकारेण सत्वार्थसाधनात् ॥

---

1) *svasukhasaṃgaḥ paradushkhopekshā ca* marg.

2)..2) a stock-phrase; cf. infra and Divy. 219.22, 220.2. The form *samanvaṅgībhūta* is regarded by Böhtlingk (W.K.F.) as suspicious.

3) Something seems to be wanting here. Tib. (102. b. 7) དབེན་པ་ཞིག་ཏུ་བྱས་ན་ཚིད་ཡོད་པ་འམ་

4) *satvātve* MS.; but Tib. (103 a 1) སེམས་ཅན་གྱི་དོན་དུ་

5) *samyak*[sic] *brahmacārī cen*[,]*na kāmamithyācāraḥ syāt* marg.



तथा ह्युक्तमार्याक्षयमतिसूत्रे । कालाकाले पुनरनेनोपेक्षा करणीयेति ॥

अथ ततोऽप्यधिकं सत्वार्थं पश्येत् ' शिक्षां निक्षिपेत् ॥

उपायकौशल्यसूत्रे ज्योतिर्माणवकं द्वाचत्वारिंशद्वर्षसहस्रब्रह्मचारिणमधिकृत्य सप्तमे
पदे स्थितस्य[1] कारुण्यमुत्पद्येत । किं चाप्यहमिदं व्रतं खण्डयित्वा निरयपरायणः स्यां '
तथाप्युत्सहेऽहं नैरयिकं दुःखं प्रतिवेदयितुमथ चेयं स्त्री सुखिता भवतु । मा कालं क- 5
रोतु । इति हि कुलपुत्र ज्योतिर्माणवकः पश्चान्मुखो निवर्त्य तां स्त्रियं दक्षिणेन पाणिना
गृहीत्वैवमाह । उत्तिष्ठ भगिनि यथाकामकरणीयस्ते भवामीति ॥ पे ॥ सोऽहं कुलपुत्र
महाकारुण्यचित्तोत्पादेनेत्वरेण कामोपसंहितेन दशकल्पसहस्राणि पश्चान्मुखमकार्षम् ।
पश्य कुलपुत्र यदन्येषां निरयसंवर्तनीयं कर्म ' तदुपायकुशलस्य बोधिसत्वस्य ब्रह्मलोको-
पपत्तिसंवर्तनीयमिति ॥ 10

पुनरत्रैवाह । यदि बोधिसत्व एकस्य सत्वस्य कुशलमूलं संजनयेत्तथारूपां चापत्तिमाप-
द्येत यथारूपयापत्त्यापन्नया कल्पशतसहस्रं निरये पच्येत । उत्सोढव्यमेव भगवन् बोधिस-
त्वेनापत्तिमापत्तुं तच्च नैरयिकं दुःखं ' न त्वेव तस्यैकस्य सत्वस्य कुशलं परित्यक्तुमिति ॥

पुनरत्रैवाह । इह कुलपुत्रोपायकुशलो बोधिसत्वो यदा कदाचित्कस्मिंश्चित्पापमित्र-
वशेनापत्तिमापद्येत ' स इतः प्रतिसंशिक्षते । न मयैभिः स्कन्धैः परिनिर्वापयितव्यं ' मया 15
पुनरेवं संनाहः संनद्धव्यः ' अपरान्तकोटिः संसरितव्या सत्वानां परिपाचनहेतोरिति । न
मया चित्तदाहः करणीयो ' यथा यथा संसरिष्यामि तथा तथा सत्वान्परिपाचयिष्यामि ।
अपि त्वेतां चापत्तिं यथाधर्मं प्रतिकरिष्यामि ' आयत्यां संवरमापत्स्ये । सचेत्कुलपुत्र
प्रव्रजितो बोधिसत्वः परिकल्पमादा[81 a]य सर्वाश्चत[2]स्रो मूलापत्तीरतिक्रमेदनेन चोपाय-
कौशल्येन विनोदयेद् ' अनापत्तिं बोधिसत्वस्य वदामीति ॥

---

1) Seven steps proverbial for the complete and irrevocable; usually however (B.R. s. v. *saptapada*; cf. 91 a infra) of marriage or friendship; here of the completely chaste sage, *striyam pratyākhyāya gatasya* marg.

2) *Five* were mentioned above pp. 59—60.

स्फुटं चार्यरत्नमेघे आनन्तर्यचिकीर्षुपुरुषमारणानुज्ञानात् ॥

श्रावकविनयेऽपि मूलापत्तिस्थान एव कारुण्यान्मृगादिमोक्षणे ऽनापत्तिरुक्तैव ॥

अयं च रागे गुणो यद्बोधिसत्त्वे रागमुत्पाद्य सुगतिर्लभ्यते । न तु क्रोधेन ॥

यथोक्तमुपायकौशल्यसूत्रे । प्रियंकरे बोधिसत्त्वे रक्ता ..[ध(1)]व्योत्तरां दारिकामधिकृत्य ।

प्रियंकरस्य प्रणिधेः पुनः पुनर्या इ(2)स्त्रि प्रेक्षेत सरागचित्ता ।
सा इस्त्रिभावं परिवर्जयित्वा पुरुषो भवेत् यादृगुदा(3)रसत्त्वः ॥
पश्यस्व आनन्द गुणास्य ईदृशाः ' येनान्यसत्त्वा निरयं व्रजन्ति ।
तेनैव शूरेषु जनित्व रागं गच्छन्ति स्वर्गं पुरुषत्वमेव च ॥ पे ॥
भैषज्यराजेषु महायशेषु ' को बोधिसत्त्वेषु जनये(4)त द्वेषम् ।
येसां किलेशोऽपि सुखस्य दायकः ' किं वा पुनर्यः(5) तान् सत्करेया ' इति ॥

एवमन्यस्मिन्सत्त्वार्थोपाये सति रागजापत्तिरनापत्तिरुक्ता ॥

उपायकौशल्यसूत्रे च गणिकावत्कृतार्थो बोधिसत्त्वो निरपेक्ष(6)स्तं स(7)त्त्वं त्यजतीति विस्तरेणोक्तम् ॥

अलब्धभूमेश्च षट्पारमितासु चरितवत इयं चिन्ता ' नेतरस्येत्यास्तां प्रासङ्गिकम् ॥

तस्माद्द्वेषस्यावकाशो न देय ' उक्तं ह्युपालिपरिपृच्छायां । बोधिसत्त्वानां शारिपुत्र द्वे महासावद्ये आपत्ती । कतमे द्वे । द्वेषसहगता मोहसहगता चेति । तत्र शारिपुत्र प्रथमा

---

1) This letter is added in the margin. In the Tib. (104 a 1) the name of the girl is དཔལ་ཡོན་ཅན (= Çrī-dānavatī or the like).

2) *istrī* MS. and *strī* in text line. The ordinary 'Gāthā'-form (cf. Lal-v. pref. 28.4) restores the metre (cf. p. 92 n. 4) in both cases.

3) °*dṛsūd*° MS.

4) qu. read for metre some form like *janeya*?

5) So MS., with — for ⏑⏑.

6) *yenāyaṃ satkṛtaḥ* | *taṃ* marg.

7) *suvinītaṃ matvā* marg.



आपत्तिर्दश(1)वर्गे ऋजुके(2)न देशयितव्या । हस्तापत्तिः पञ्च(1) वर्गे गुर्वी देशयितव्या । स्त्रिया हस्तग्रहणं चक्षुर्दर्शनं ' दुष्टचित्तापत्तिरेकपुद्गलस्य द्वयोर्वा शारिपुत्र तां गुर्वीं दशयेत् । पञ्चानन्तर्यसमन्वागतापत्तिर्बोधिसत्त्वेन स्त्र्यापत्तिर्दारिकापत्तिर्हस्तापत्तिः स्तूपापत्तिः संघापत्तिस्तथान्याश्चापत्तयो बोधिसत्त्वेन पञ्चत्रिंशतां (3)बुद्धानां भगवतामन्तिके रात्रिंदिवं एकाकिना गुर्व्यो देशयितव्याः ॥

तत्रेयं देशना । अहमेवंनामा बुद्धं शरणं गच्छामि । धर्मं शरणं गच्छामि । संघं शरणं गच्छामि ॥ नमः शाक्यमुनये तथागतायार्हते सम्यक्संबुद्धाय । नमो वज्रप्रमर्दिने । नमो रत्नार्चिषे । नमो नागेश्वरराजाय । नमो वीरसेनाय । नमो वीरनन्दिने । नमो रत्नश्रिये । नमो रत्नचन्द्रप्रभाय । नमो ऽमोघदर्शिने । नमो रत्नचन्द्राय । नमो निर्मलाय । नमो विमलाय । नमः शूरदत्ताय । नमो ब्रह्मणे । नमो ब्रह्मदत्ताय । नमो वरुणाय । नमो वरुणदेवाय । नमो भद्रश्रिये । नमश्चन्दनश्रिये । नमो ऽनन्तौजसे । नमः प्रभासश्रिये [81 b] । नमो ऽशोकश्रिये । नमो नारायणाय । नमः कुसुमश्रिये । नमो ब्रह्मज्योतिर्विक्रीडिताभिज्ञाय तथागताय । नमो धनश्रिये । नमः स्मृतिश्रिये । नमः सुपरिकीर्तितनामधेयश्रिये । नम इन्द्रकेतुध्वजराजाय । नमः सुविक्रान्तश्रिये । नमो विचित्रसंक्रमाय । नमो विक्रान्तगामिने । नमः समन्तावभासव्यूहश्रिये । नमो रत्नपद्मविक्रामिणे । नमो रत्नपद्मसुप्रतिष्ठितशैलेन्द्रराजाय तथागतायार्हते सम्यक्संबुद्धाय ॥ एवंप्रमुखा यावन्तः सर्वलोकधातुषु तथागतार्ह-

---

1) Cf. Ch. s. v. *vaggo*.

2) 'Straightway (?)'; cf. Pali ujjukam. The Tib. (104 a. 6—7) has བྱང་ཆུབ་སེམས་དཔའ་དང་པོས which would imply *ādikarmika-bodhisatvena* or the like.

3) Dr. Waddell, Lamaism p. 353 speaks of the 'Thirty-five Buddhas of Confession' citing Schlagintweit, Buddhism p. 123 sqq., where an address to 51 Buddhas, closely analogous to the present formulary is given at length. A ritual connected with the same Thirty-five Buddhas is extant in Tibetan under the title: བདེ་བར་གཤེགས་པ་སུམ་ཅུ་རྩ་ལྔ་ལ་བསྟོད་རབ་ཏུ་བྱེད་པ་གངྒཱའི་ཆུ་རྒྱུན 'The Ganges-current, the treatise of praise to the 35 Confession-Sugatas'.

न्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति ' ते मां समन्वाहरन्तु बुद्धा भगवन्तो यन्मया-
स्यां जातौ अन्यासु वा जातिष्वनवराग्रे जातिसंसारे संसरता पापकं कर्म कृतं स्यात्कारितं
वा क्रियमाणं वानुमोदितं भवेत् ' स्तौपिकं वा साङ्घिकं वा द्रव्यमपहृतं स्यात् हारितं
वा ह्रियमाणं वानुमोदितं भवेत् । पञ्चानन्तर्याणि कृतानि स्युः कारितानि वा क्रियमाणा-
नि वानुमोदितानि भवेयुः । दशाकुशलान्कर्मपथान्समादाय वर्तितं स्यात्परे वा समादापिताः
स्युर्वर्तमाना वानुमोदिता भवेयुर्येन कर्मावरणेनावृतो ऽहं निरयं वा गच्छेयं तिर्यग्योनिं
वा यमविषयं वा गच्छेयं प्रत्यन्तजनपदेषु म्लेच्छेषु वा प्रत्याजायेयं दीर्घायुष्केषु देवेषूपपद्ये-
यमिन्द्रियविकलतां वाधिगच्छेयं मिथ्यादृष्टिं वोपगृह्णीयां बुद्धोत्पादं वा विरागयेयं ।
तत्सर्वं कर्मावरणं तेषां बुद्धानां भगवतां ज्ञानभूतानां चक्षुर्भूतानां साक्षिभूतानां प्रमाणभू-
तानां जानतां पश्यतामग्रतः प्रतिदेशयामि आविष्करोमि न प्रतिच्छादयाम्यायत्यां संवर-
मापद्ये । समन्वाहरन्तु मां ते बुद्धा भगवन्तो यन्मयास्यां जातावन्यासु वा जातिष्वनवराग्रे
वा जातिसंसारे संसरता दानं दत्तं भवेदन्तशस्तिर्यग्योनिगता[82 a]याप्यालोपः शीलं वा र-
क्षितं भवेद्यच्च[1] मे ब्रह्मचर्यवासकुशलमूलं यच्च मे सत्त्वपरिपाककुशलमूलं यच्च मे बोधिचि-
त्तकुशलमूलं यच्च मे ऽनुत्तरज्ञानकुशलमूलं तत्सर्वमैकध्यं पिण्डयित्वा तुलयित्वाऽभिसंक्षि-
प्यानुत्तरायां सम्यक्संबोधौ उत्तरोत्तरया परिणामनया यथा परिणामितमतीतैर्बुद्धैर्भग-
वद्भिर्यथा परिणामयिष्यन्त्यनागता बुद्धा भगवन्तो यथा परिणामयन्त्येतर्हि दशसु दिक्षु
प्रत्युत्पन्ना बुद्धा भगवन्तः ' तथाहमपि परिणामयामि ' सर्वं पुण्यमनुमोदयामि ' सर्वान्बु-
द्धानध्येषयामि । भवतु मे ज्ञानमनुत्तरम् । ये चाप्यतीतास्तथापि च ये अनागता ये चापि
तिष्ठन्ति नरोत्तमा जिनाः । अनन्तवर्णान् गुणसागरोपमानुपैमि सर्वान् शरणं कृताञ्जलिः ।
ये बोधिसत्त्वाः करुणाबलैरुपेता विचरन्ति लोके सत्त्वहिताय शूराः त्रायन्तु ते मां सदपाप-
कारिणं ' शरणं यामि तान् बहुबोधिसत्त्वान् ॥

1) *yaç ca* MS. In the foregoing passage probably something has been lost (Tib. 105. a. 4 sqq.).



इति हि शारिपुत्र बोधिसत्त्वेनेमान् पञ्चत्रिंशतो बुद्धान् प्रमुखान् कृत्वा सर्वतथागता-
नुगतैर्मनसिकारैः पापशुद्धिः कार्या[1] । तस्यैवं सर्वपापविशुद्धस्य तत्र च बुद्धा भगवन्तो मुखा-
न्युपदर्शयन्ति सत्त्वविमोक्षार्थमेव । नानाव्यञ्जनाकारमुपदर्शयन्ति विभ्रान्तबालपृथग्जनानां
परिपाचनाहेतोः ॥ पे ॥ न शक्यं सर्वश्रावकप्रत्येकबुद्धनिकायैरापत्तिकौकृत्य[2]स्थानं वि-
शोधयितुं यद्बोधिसत्त्वस्तेषां बुद्धानां भगवतां नामधेयधारणपरिकीर्तनेन रात्रिंदिवं त्रिस्क-
न्धक[3]धर्मपर्यायप्रवर्तनेनापत्तिकौकृत्यान्निःसरति समाधिं च प्रतिलभते ॥

उक्तो विदूषणा[4]समुदाचारः । प्रतिपक्षसमुदा[4]चार उच्यते । तत्र गम्भीरसूत्रान्तपरिच-
यात्पापक्षयो भवति ॥

यथा वज्रच्छेदिकायामुक्तं[5] । ये ते सुभूते कुलपुत्रा वा कुलदुहितरो वा इमानेवंरूपान्
सूत्रान्तानुद्ग्रहीष्यन्ति यावत्पर्यवाप्स्यन्ति ' ते परिभूता भविष्यन्ति सुपरिभूताः । तत्कस्य
हेतोः । यानि तेषां सत्त्वानां पौर्वजन्मिकानि कर्माणि कृतान्यपायसंवर्तनीयानि । तानि
तया[6] परिभूततया दृष्ट एव धर्मे क्षपयिष्यन्ति बुद्धबोधिं च प्राप्स्यन्ती[7]ति ॥

शून्यता[82 b]धिमुक्त्याऽपि पापशुद्धिर्भवति तथागतकोशसूत्रे वचनात् । यः काश्यप
पिता च स्यात्प्रत्येकबुद्धश्च तं जीविताद्व्यपरोपयेदिदमग्रं प्राणातिपातानां । इदमग्रमद-
त्तादानानां यदुत त्रिरत्नद्रव्यापहरणता । इदमग्रं काममिथ्याचाराणां यदुत माता स्याद-
र्हन्ती च । इदमग्रं मृषावादानां यदुत तथागतस्याभ्याख्यानं । इदमग्रं पैशुन्यानां यदुतार्य-

1) °*yāḥ* MS.

2) Hitherto in lex. (the Buddhistic Trikāṇḍaçesha) only; Pali *kukuccam.* Cf. supra p. 142; see also now Mhv. III. 175.9.

3) Cp. Buddha's title *Triskandhakapathadaiçika* (M. Vyutp. I. 75) and the Triskandhaka, a treatise which explains 'les trois agrégats, moralité, méditation et habileté ou sagesse' [*kauçalya*?] K.F. 274.

4) Supr. p. 160. 5—7.

5) The beginning of Vajracch. § 16, judiciously abridged

6) Max Müller's text omits *tayā* and varies somewhat in the order of words.

7) *cānupr*° printed text.

संघस्यावर्णः। इदमग्रं पारुष्याणां यडुतार्याणामवस्फण्डनं[1]। इदमग्रं संभिन्नप्रलापानां यडुत धर्मकामानां विक्षेपः। इदमग्रं व्यापादानां यडुतानन्तर्यपरिकर्षणम्[2]। इदमग्रमभिध्यानां[3] यडुत सम्यग्गतानां लाभहरणचित्तता। इदमग्रं मिथ्यादृष्टीनां यडुत गहनतादृष्टिः[4]। इमे काश्यप दशाकुशलाः कर्मपथा महासावद्याः। सचेत्काश्यप एकसत्व एभिरेवं महासावद्यै-र्दशभिरकुशलैः कर्मपथैः समन्वागतो भवेत् ' स च तथागतस्य हेतुप्रत्ययसंयुक्तां धर्मदेशना-मवतरेन् ' नात्र कश्चिदात्मा वा सत्वो वा जीवो वा पुद्गलो वा यः करोति प्रतिसंवेदयते इति व्यकृतामनभिसंस्कारां मायाधर्मतामसंक्लेशधर्मतां प्रकृतिप्रभास्वरतां सर्वधर्माणामव-तरत्यादिशुद्धान्सर्वधर्मानभिश्रद्दधात्यधिमुच्यते ' नाहं तस्य सत्वस्यापायगमनं वदा-मीति॥

कर्मावरणविशुद्धिसूत्रेऽप्युक्तं। पुनरपरं मञ्जुश्रीर्यो बोधिसत्व आपत्तिमनापत्तिं प-श्यति। अविनयं विनयं पश्यति। संक्लेशं व्यवदानं[5] पश्यति। संसारधातुं निर्वाणधातुं पश्यति। स कर्मावरणविशुद्धिं प्रतिलभत इति॥

त्रिसमयराजे ऽपि पापप्रतिपक्षसमुदाचार उक्तः॥ अक्षिणी निमील्य बुद्धबोधिसत्वा-

1) A new form: probably the meaning is 'reviling'. The Dhātupāṭha, where alone √*sphaṇḍ* has hitherto been found, gives *parihāsa* as its meaning, whereas the Tib. (106. b. 4) translates it གནོད་པ 'injuring'.

2) Apparently 'turning over in one's mind' = according to the meaning assigned to *parikarsh* by B. R. in Mbh. XVII. III. 33. Tib. བྱེད་པར་སྒོམས་པ 'preparing to commit' (?).

3) See 74. 5 supr., and compare now Mhv. III. 52.7.

4) I leave the reading of the MS.; but the Tib. གཟེངས་པ taken in connection with a passage like the comm. (p. 399) on Dhammapada 318 where *gahaṇasaṃkhātāya micchāditthiyā samādinnatā* occurs, leaves no doubt that *gahanatā* (not elsewhere found) is really referable to √*grah*, not √*gah*. In Mhv. I. 91. 14—18 *gahana* and *grahaṇa* occur together.

5) Cf. Divy. 616. 23.



लम्बनचित्तः शतान्तरमष्टसहस्रं जपेत्। निमीलिताक्ष एव बुद्धबोधिसत्वान्पश्यति विगतपापो [83 a] भवति। अथवा चैत्यं प्रदक्षिणीकुर्वन्नष्टसहस्रं जपेच्चैत्यप्रतिमायाः सद्धर्मपुस्तकानां चैकतमं पुरस्कृत्यायमेव विधिरिति॥

चुन्दाधारण्यां[1] वा तावज्जपेद्यावत्पापक्षयनिमित्तानि पश्यति स्वप्ने। तद्यथा क्रन्दना-दिच्छर्दन[2]दधिक्षीरादिभोजनात्तु विगतपापो भवति। वमनाद्वा चन्द्रसूर्यदर्शनादाकाशगमनाज्ज्व-लितानलमहिषकृष्णपुरुषपराजयाद् भिक्षुभिक्षुणीसंघदर्शनात्क्षीरवृक्षगजवृषगिरिसिंहा-सनप्रासादनावारोहणाद्धर्मश्रवणाच्च पापक्षयः संलक्षयितव्यः॥

तथागतबिम्बपरिवर्ते ऽपि प्रतिपक्षसमुदाचार उक्तः। तद्यथा पुरुषो मीढावलिप्तः सुधौतस्नानं कृत्वा गन्धैर्विलिप्येत ' तस्य तद्दौर्गन्ध्यं वान्तं[3] विगतं स्यादेवं पञ्चानन्तर्यका-रिणस्तत्पापं विगच्छति। योऽपि दशाकुशलकर्मपथसमन्वागतस्तथागते श्रद्धां प्रतिलभ्य तथागतबिम्बं कारयेत्तस्यापि तत्पापं न प्रज्ञायते विशेषतो बोधिचित्तसमन्वागतस्य। विशेषतो ऽभिनिष्क्रान्तगृहावासस्य शीलवत इति॥

पुष्पकूटधारण्यामप्युक्तं[4]। यश्च खलु पुनः सिंहविक्रीडिततथागतं संमुखं वर्षं वा व-र्षसहस्रं वा वर्षशतसहस्रं वा सर्वसुखोपधानैरुपतिष्ठेद् ' यश्च परिनिर्वृतस्य तथागतस्य चैत्ये बोधिचित्तसंगृहीत एकपुष्पमारोपयेत्तथागतपूजायै जलाञ्जलिं चोपनामयेज्जलेन वा सिञ्चयेदिषिकापदं वा दद्यान्निर्माल्यं चापनयेद्वुपलेपनप्रदानं वा पुष्पप्रदानं वा दीपप्रदानं वा कुर्यादात्तमनाः एकक्रमव्यतिहारं वातिक्रम्य वाचं भाषते। नमस्तस्मै बुद्धाय भगवत इतिमात्रे ऽत्र सिंहविक्रीडितकाङ्क्षा वा विमतिर्वा विचिकित्सा वा यदसौ कल्पं वा क-ल्पशतं वा कल्पसहस्रं वा दुर्गतिविनिपातं गच्छेन्नेदं [83 b] स्थानं विद्यत इति॥

1) Prob. the same as the work described Nanjio 344 sq. and K. F. 318.

2) *chardanaṃ* MS.

3) Figuratively used like *chardana* above. For both roots cf. Divy. 275. 8.

4) Nanjio 337—339; 757; translated before 280 A. D. K. F. 325.

भैषज्यगुरुवैदूर्यप्रभराजसूत्रेऽप्युक्तं। ये पञ्च शिक्षापदानि धारयन्ति ' ये दश शिक्षापदानि
धारयन्ति ' ये च बोधिसत्त्वसंवरं चतुर्थं[1] शतं शिक्षापदानां धारयन्ति। ये पुनरभिनिष्क्रान्तगृ-
हावासा भिक्षवः पञ्चाशाधिके द्वे शिक्षापदशते धारयन्ति। याश्च भिक्षुण्यः पञ्चशिक्षापदश-
तानि धारयन्ति। ये च यथापरिगृहीताच्छिक्षासंवरादन्यतराच्छिक्षापदाद्भ्रष्टा भवन्ति ' स-
5 चेत्ते दुर्गतिभयभीतास्तस्य भगवतो भैषज्यगुरुवैडूर्यप्रभराजस्य तथागतस्य नामधेयं धारये-
युर्यथाविभवतश्च पूजां कुर्युः ' न भूयस्तेषामपायगतिः प्रतिकाङ्क्षितव्या॥

अथ भगवानायुष्मन्तमानन्दमामन्त्रयते स्म। श्रद्दधासि त्वमानन्द ' पत्तीयसि[2] ' यदहं
तस्य भगवतो भैषज्यगुरुवैडूर्यप्रभराजस्य तथागतस्य गुणान्वर्णयामि। अथ ते काङ्क्षा वा
विमतिर्वा विचिकित्सा वात्र गम्भीरे बुद्धगोचरे॥ अथायुष्मानानन्दो भगवन्तमेतदवो-
10 चत्। न मे भदन्त भगवन् काङ्क्षा वा विमतिर्वा विचिकित्सा वा तथागतभाषितेषु सूत्रा-
न्तेषु। तत्कस्य हेतोः। नास्ति तथागतानामपरिशुद्धकायवाङ्मनःसमुदाचारता। इमौ भग-
वन् चन्द्रसूर्यावेवं महर्द्धिकावेवं महानुभावौ पृथिव्यां पतेतां। सुमेरुः पर्वतराजा स्थाना-
च्चलेत्। न तु बुद्धानां वचनमन्यथा भवेत्॥ किंतु भदन्त भगवन् सन्ति सत्त्वाः श्रद्धेन्द्रियवि-
कला ये बुद्धगोचरं श्रुत्वा न श्रद्दधति। तेषामेवं भवति। कथमिदं नामधेयं स्मरणमात्रेण
15 तस्य तथागतस्य एत्तका[3] गुणानुशंसा भवति। ते न श्रद्दधति ' न पत्तीयन्ति ' प्रतिक्षिप-
न्ति। तेषां दीर्घरात्रमनर्थायाहितायासुखाय विनिपाताय भविष्यति॥ भ[84 a]गवा
नाह। अस्थानमानन्दानवकाशो येषां तस्य नामधेयं निपतेत् कर्णे तेषां दुर्गत्यपायगमनं
भवेदिति ' दुःश्रद्धानीयश्चानन्द बुद्धानां बुद्धगोचरः। यच्च त्वमानन्द श्रद्दधासि पत्तीयसि '

1) The Tib. has simply 'four hundred'. The margin adds the syllable *skaṃ*; so that Minaev's transcript had the reading *catuskaṃdham* [sic].

2) A thoroughly Prakritic form. Compare the Mahārāshṭrī form *pattiyaï* (Jacobi, Ausgew. Erzählungen p. 125). Below, opposite to the two first syllables *pattīyanti* a later marginal corrector has witten *prati.* Prof. Max Müller makes a similar restoration (S. B. E. vol. xlix. pt. II. p. 101 note).

3) A Pali form used in Buddh. Skt. (cf. Senart, Mhv. I. 384).



तथागतस्यैषोऽनुभावो द्रष्टव्यः। अभूमिश्चात्र श्रावकप्रत्येकबुद्धानां स्थापयित्वा एकजा-
तिप्रतिबद्धान् बोधिसत्त्वान् महासत्त्वानिति॥

अत्रैव चोक्तं। ये चान्ये श्राद्धाः कुलपुत्रा वा कुलदुहितरो वाष्टाङ्ग[1]समन्वागतमु-
पवासमुपवसन्ति ' एकवार्षिकं वा त्रैवार्षिकं वा शिक्षापदं धारयन्ति। येषामेवमभिप्रायः
एवं प्रणिधानं ' अनेन वयं कुशलमूलेन पश्चिमायां दिशायां सुखावत्यां लोकधातौ उपप- 5
द्येम यत्रामिताभस्तथागतः। यैः श्रुतं भविष्यति तस्य भगवतो भैषज्यगुरुवैडूर्यप्रभराजस्य
तथागतस्य नामधेयं ' तेषां मरणकालसमये ऽष्टौ बोधिसत्त्वा ऋद्ध्यागत्यमार्गमुपदर्शयन्ति।
ते तत्र नानारङ्गेषु पद्मेषूपपादुकाः[2] प्रादुर्भवन्ति ' केचित्पुनर्देवलोक उपपद्यन्ते ' तेषां त-
त्रोपपन्नानां तत्पूर्वकं कुशलमूलं न क्षीयते। दुर्गतिविनिपातभयं च न भविष्यति। ते त-
तश्च्युत्वा इह मनुष्यलोके राजानो भवन्ति। चतुर्द्वीपेश्वराश्चक्रवर्तिनः[3]। अनेकानि सत्त्व- 10
कोटीनियुतशतसहस्राणि दश कुशलेषु कर्मपथेषु[4] प्रतिष्ठापयन्ति। अपरे पुनः क्षत्रियमहा-
शालकुलेषूपपद्यन्ते। ब्राह्मणमहाशालकुलेषूपपद्यन्ते ' गृहपतिमहाशालकुलेषु[5] प्रभूतध-
नधान्यकोषकोष्ठागारकुलेषूपपद्यन्ते ' ते रूपसंपन्ना भवन्ति ' परिवारसम्पन्ना भवन्ति॥

तत्रैवोक्तं। येन च पुनर्मातृग्रामेण तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभराजस्य तथागत-
स्य नामधेयं श्रुतं भविष्यति ' उद्गृहीतं वा। स तस्य पश्चिमो मातृग्रामभा[84 b]वः प्रति- 15
काङ्क्षितव्य इति॥

मञ्जुश्रीबुद्धक्षेत्रगुणव्यूहालंकारसूत्रे ऽप्युक्तं।

ज्ञानोत्तरप्रभाकेतुं प्रणिधानमतिं तथा।
शान्तेन्द्रियं मञ्जुघोषं भक्तितः प्रणमाम्यहम्॥

1) Cf. Ch. s. v. *uposatha.*

2) See Senart, Mhv. I. 490.

3) Lal.-v. 257. 6; Dh.-s. § 120.

4) Cf. Ch. s. v. *kusulakammap°.*

5) A stock-phrase; cf. Vyutp. § 187. 6—8. and B.R. s. v. *mahāçāla.*

य एषां बोधिसत्त्वानां नामधेयं तु धारयेत् ।
[ए]तस्य मातृग्रामस्य स्त्रीभावो न भविष्यति ॥

उक्तः संक्षेपात्प्रतिपक्षसमुदाचारः ॥ प्रत्यापत्तिबलमधुनोच्यते ॥

यथोक्तमार्यक्षितिगर्भसूत्रे । प्राणातिपातात्प्रतिविरतो भवति बोधिसत्त्वो महासत्त्वः
5 सर्वसत्त्वानामभयंददः ' अनुत्त्रासो[1] ऽनुपायासो[2] ऽलोमहर्षः स तेन कुशलमूलेन कर्मविपाकेन । यत्[4]पूर्वान्तकोटिपञ्चगतिचक्रारूढेन संसारनद्युह्यातेन[3] प्राणातिपातहेतुना कायवाङ्मनसा कर्मावरणं क्लेशावरणं धर्मावरणं कृतं वा स्यात्कारितं वानुमोदितं स्यात् ' तत् सर्वं[4] तेन प्राणातिपातवैरमण[5]चक्रेण सर्वानर्थं मर्दयति । यावदशेषमविपाकं कुरुते । सनिकायसभागे[6] देवमनुष्याणां प्रियो भवति निरातङ्को दीर्घायुष्क इति ॥

10 यावत्पुनरपरं कुलपुत्र यो बोधिसत्त्वो यावज्जीवमदत्तादानात्प्रतिविरतो भवति स सर्वसत्त्वानामभयं ददाति ' अन्यत्रासपत्नेना[7]संतोषेण स्वलाभेन संतुष्टो विहरति । अधा-

---

1) *anutrāso* MS.; cf. Pali forms ap. J.P.T.S. 1887, p. 116. Tib. སྐྲག་པར་མི་བྱེད 'not causing fear'; with a similar causal sense a form *uttrāsana* is quoted from Dhātup.

2) འཁྲུགས་པར་མི་བྱེད (cf. p. 32, n. 3) 'not causing agitation'. This accords well with the meaning of *āyāsayati*. Childers's translation 'despair' for *upāyāso* seems not to fit the passages he quotes, so well as 'agitation, mental anguish'.

3) Reading uncertain, Tib. simply ཞུགས་ སྟེ 'having entered' (109. b. 3).

4..4) The construction is involved and the reading doubtful. The MS. has *yaḥ* (clearly) . . *syāt sa* [*rvvaṃ* added in margin]: «by the maturing of *karma*, through abstinence from taking life he annuls everything ruinous which . . .». Otherwise we must take *anartham* as a noun and correct *kṛtam* etc. to *kṛto*.

5) The phrase occurs at Lal.-v. 556. 6 (cited and corrected in B²); cf. Pali *veramaṇī*.

6) Apparently used in the sense of *sabhāgatā* 'community' *brahmalokasabh°* Divy. 122. 16 *manushyāṇām s° ib* 194. 30. *sanikāya* seems not to occur.

7) *anyatrāsapatnena . . salābhena* MS. My reading is founded on the Tib. which reads (109. b. 5) འགྲན་པ་མེད་པ . . . རང་གི་རྙེད་ प is clear in our MS., but प and य were confused in the archetype.



र्मिकभोगानभिलाषी स तेन कुशलमूलेन यावददत्तादानहेतुकं कर्मावरणं मर्दयति प्रमर्दयति यावदशेषमविपाकं कुरुत इति ॥ पे ॥

एवं दशापि कुशलाः कर्मपथाः स्वविपक्षाकुशलघातकास्तत्र पठ्यन्ते ॥

तथा चन्द्रप्रदीपसूत्रेऽपि व्यापादविरत्या सर्वपापक्षयः श्रूयते । यथाह ।

5 सहिष्याम्यत्र बालानामभूतां[-] परिभाषणां ।
आक्रोशनं[1] तर्जनां च अधिवासिष्यि[2] नायकः ॥
क्षपयिष्ये[3] पापकं कर्म यन्मया पुरिमे कृतम् ।
अन्येषु बोधिसत्त्वेषु व्यापादो जनितो मयेति ॥

उक्तं प्रत्यापत्तिबलम् ॥ आश्रयबलं तु वक्तव्यम् ॥

10 अत्र सूकरिकावदान[4]मुदाहार्यम् ।

ये बुद्धं शरणं यान्ति न ते गच्छन्ति दुर्गतिं ।
प्रहाय मानुषान्कायान्दिव्यान्कायाँल्लभन्ति[5] ते ॥

इत्येवं धर्मं संघं चाधिकृत्य पापक्षयः ॥

आर्यमैत्रेयविमोक्षे तु बोधिचित्तेन पापविशुद्धिरुक्ता । कल्पो[85 a]द्दाहाग्निभूतं सर्वदुष्कृतनिर्दहनतया । पातालभूतं सर्वाकुशलधर्मपर्यादानकरणतया ॥ पे ॥ तद्यथा कुल- 15 पुत्र हाटकप्रभासं नाम रसजातं । तस्यैकं पलं लोहपलसहस्रं सुवर्णीकरोति । न च तत्र तत्[6] पलं शक्यते तेन लोहपलसहस्रेण पर्यादातुं ' न लोहीकर्तुं । एवमेवैकः सर्वज्ञताचित्तोत्पादरसधातुः कुशलमूलपरिणामनाज्ञानसंगृहीतः सर्वकर्मक्लेशावरणलोहानि प-

---

1) MS. (unmetrically) *ākroçāṃ*.

2) 'bear with', as in Pali.

3) Scan *kshapaishye*.

4) Tale 15 of the Divyāvadāna-collection. The stanza occurs at p. 196.5 of the printed edition.

5) *kāyān upāsate* edition.

6) *sa* MS.

र्यादाय सर्वधर्मान्सर्वज्ञतावर्णान्करोति । न च सर्वज्ञताचित्तोत्पादरसधातुः शक्यः सर्वकर्म-
क्लेशलोहैः संक्लेशयितुं पर्यादातुं वा । तद्यथा कुलपुत्रैकः प्रदीपो यादृशे गृहे वा लयने वा
प्रवेश्यते स सह[1] प्रवेशितो वर्षसहस्रसंचितमपि तमोन्धकारं विधमयति[2] ' अवभासं च क-
रोति । एवमेवैकः सर्वज्ञताचित्तोत्पादप्रदीपो यादृशे सत्त्वाशये गहने ऽविद्यातमोन्धकारानु-
5 गते प्रवेश्यते स सह प्रवेशितो ऽनभिलाप्यकल्पशतसहस्रसंचितमपि कर्मक्लेशावरणत-
मोन्धकारं विधमति ' ज्ञानालोकं च करोति ॥ तद्यथा कुलपुत्र चिन्तामणिराजमुकुटानां
महानागराज्ञां नास्ति परोपक्रमभयं । एवमेव बोधिचित्तमहाकरुणाचिन्तामणिराजमुकु-
टावबद्धानां बोधिसत्त्वानां नास्ति दुर्गत्यपायपरोपक्रमभयमिति ॥

आर्योपालिपरिपृच्छायामप्युक्तं । इहोपाले महायानं संप्रस्थितो बोधिसत्त्वः सचेत्पू-
10 र्वाह्णकालसमये आपत्तिमापद्येत ' मध्याह्नकालसमये सर्वज्ञताचित्तेनाविरहितो विहरे-
दपर्यन्त एव बोधिसत्त्वस्य शीलस्कन्धः ' सचेन्मध्याह्नकालसमये आपत्तिमापद्यते साया-
ह्नकालसमये सर्वज्ञताचित्तेनाविरहितो भवेदपर्यन्त एव बोधिसत्त्वस्य शीलस्कन्धः । एवं
यामे यामे विधिरुक्तः । एवं ह्युपाले सपरिहारा शिक्षा महायानसंप्रस्थितानां बोधिस-
त्त्वानां । तत्र बोधिसत्त्वेन नातिकौकृत्यपर्युत्थानमुत्पाद्यं[3] नातिविप्रतिसारिणा भवितव्यं ।
15 सचेत्पुनः श्रावकयानीयः पुद्गलः पुनः पुनरापत्तिमापद्येत ' नष्टः श्रावकस्य पुद्गलस्य [85 b]
शीलस्कन्धो वेदितव्यः ' इति ॥

इति शिक्षासमुच्चये पापशोधनमष्टमः परिच्छेदः ॥

1) Tib. བརྩུག་མ་ཐག་ཏུ་ (110. a. 7) = ἅμα ἐπιγενόμενος.

2) If genuine, compare Pali *dhameti*: but *dhamati* below.

3) New in literature; cf. B² (Nachtr.) s. v., who quotes M. Vyutp. § 109. 55. *aparyutthānatā* infra, 191. 7.



## IX.

## क्षान्तिपारमिता नवमः परिच्छेदः ॥

॥ तदेवमविरतप्रवृत्तां बहुसुखां[1] दौःशील्योत्पत्तिं रक्षन्नेवं च कर्मावरणविबन्धमपन-
यन् क्लेशविशोधने प्रयतेत ॥

तत्रादौ तावत् क्षमेत । अक्षमस्य हि श्रुतादौ वीर्यं प्रतिहन्यते ऽखेदसहत्वात् । अ- 5
श्रुतवांश्च न समाध्युपायं जानाति । नापि क्लेशशोधनोपायम् । तस्मादखिन्नः श्रुतमेषेत ।
जानतोऽपि संकीर्णचारिणः समाधानं दुष्करमिति ' संश्रयेत वनं ततः । तत्रापि विक्षेपप्र-
शमनानभियुक्तस्य चित्तं न समाधीयत इति ' समाधानाय युज्येत । समाहितस्य च न कि-
ञ्चित्फलमन्यत्र क्लेशशोधनादिति । भावयेदशुभादिकम् ॥ इत्येतानि तावत्क्लेशशुद्धेरुद्दे-
शपदानि ॥ 10

इदानीं निर्देश उच्यते । तत्र क्षान्तिस्त्रिविधा धर्मसंगीतिसूत्रे ऽभिहिता[2] । दुःखाधि-
वासनक्षान्तिः ' धर्मनिध्यानक्षान्तिः ' परापकारमर्षणक्षान्तिश्चेति । तत्र दुःखाधिवासनक्षा-
न्तिविपक्षो ऽनिष्टागम[3]प्राप्तदुःखभीरुता । इष्टविघातप्राप्तश्च सुखाभिषङ्गस्ताभ्यां दौर्मन-
स्यं ' ततो द्वेषो लीनता[4] च ॥

अत एवाह चन्द्रप्रदीपसूत्रे । सुखे ऽनभिषङ्गः ' दुःखे ऽवैमुख्यमिति ॥ 15

रत्नमेघसूत्रेऽप्युक्तं । य इमे आध्यात्मिकाः शोकपरिदेवदुःखदौर्मनस्योपायासास्तान्
क्षमते ऽधिवासयतीति ॥

1) So MS.; but Tib. སྡུག་བསྔལ་མང་པོ་, as if *bahuduḥkhām*.

2) The same triad in the Dharma-saṃgraha § 107 (v. l. *paropak°*).

3) *nishthā°* MS.; but མི་མཐུན་པ་ Tib.

4) ཞུམ་པ་ 'despondency' cf. *saṃlīna* and Pali *sallīna*.

आर्योग्रदत्तपरिपृच्छायामप्युक्तं । पुनरपरं गृहपते गृहिणा बोधिसत्त्वेनानुनयप्रतिघापगतेन भवितव्यमष्टलोक[1]धर्माननुलिप्तेन । तेन भोगलाभेन वा भार्यापुत्रलाभेन वा धनधान्यवित्तलाभेन वा नोन्नमितव्यं न प्रहर्षितव्यं । सर्वविपत्तिषु चानेन नावनमितव्यं ' न दुर्मनसा भवितव्यं एवं चानेन प्रत्यवेक्षितव्यं । मायाकृतं सर्वसंस्कृतं विठपनप्रत्युपस्थानलक्ष[2][86 a]णं । कर्मविपाकनिर्वृत्ता ह्येते । यदिदं मातापितृपुत्रभार्यादासीदासकर्मकरपौरुषेयमित्रामात्यज्ञातिसालोहिता ' नैते मम स्वकाः । नाहमेतेषामिति ॥

अपि च ।

यद्यस्त्येव प्रतीकारो दौर्मनस्येन तत्र किम्[3] ।
प्रतीकारेऽपि मुह्येत दुर्मनाः क्रोधमूर्छितः ॥
लीनत्वाद्वा हतोत्साहो गृह्यते परयापदा ।
तच्चिन्तया मुधा यान्ति ह्रस्वमायुर्मुहुर्मुहुः ॥
तेनाभ्यासात्त्यजेदेतं निरर्थकमनर्थवत् ॥

कथं च दौर्मनस्यत्यागोऽभ्यस्यते । लघुसुकुमारचित्तोत्सर्गात् ॥

यथोक्तमुग्रदत्तपरिपृच्छायां । अपगततूलपिचू[4]पमताचित्तस्येति ॥

आर्यगण्डव्यूहेऽप्युक्तं । दुर्योधनं चित्तं ते दारिके उत्पादयितव्यं सर्वक्लेशनिर्घाताय । अपराजितचित्तं सर्वाभिनिवेशविनिर्भेदाय । अक्षोभ्यचित्तं विषमाशयत्वसागरावर्तप्रपातेष्विति ॥

न चाभ्यासस्य दुष्करं नाम किंचिदस्ति । तथा हि मृदुतराणामपि तावद्भारहारक-

1) Dh.-s. § 61; M. Vyutp. § 125.

2) The whole compound occurs at M. Vyutp. 245. 827.

3) This line occurs at Bodhic. VI. 10 a. In the margin of our MS. has been written the line next following (VI. 10 b): *atha nāsti pratīkāro daurmanasyena tatra kim?*

4) 'Cotton-wool', used as here as simile for softness in the only two passages (Divyāv. 210.14; 388.14) where the form occurs.



कैवर्तकर्षकादीनां दुःखाभ्यासात्तनुतरफलेऽपि वस्तुनि संरूढकिणाङ्कितं चित्तमवसादेन न परिभूयते ' किं पुनः सर्वसंसारसुखसर्वबोधिसत्त्वसुखानुत्तरपदसम[1]धिगमफले कर्मणि । तथा प्राकृता अपि किंचिदपकारिष्वात्मदुष्कृतेनैव हतेषु स्वयं मृत्युषु प्रहर्तुं गाढप्रहारवेदना अपि संग्राम[2]यन्त्येव । किं पुनर्द्राघिष्ठकालापकारिषु दुःखोपात्तकुशलधनलवस्तैन्येषु नरकेषु नावध्यघातकेषु भवचारकपालकेषु निःसरणद्वारदिग्नाशकेष्वानुकूल्येऽपि दृढतरबाधाकरेष्वनपकृतवैरिष्वनवधिकल्पाबद्धदृढवैरेषु क्लेशशत्रुषु प्रहर्तुमुत्साहो दुःखसहनं वा न भवेत् ' विशेषतस्त्रिभुवनविजयाय बद्धपरिकरस्य मारशवरप्रतिगृहीतजगद्वन्दिमोक्षाय संग्रामयतः । तत्रात्मदुःखाभ्यासपूर्वकं कष्टं कष्टतराभ्यासः सिध्यति । यथा चाभ्यासवशात्सत्त्वानां दुःखसुखसंज्ञा । तथा सर्वदुःखोत्पादेषु सुखसंज्ञा प्रत्युपस्थानाभ्यासात् सुखसंज्ञैव प्रत्युपतिष्ठते । एतन्निष्यन्दफलं च सर्वधर्मसुखाक्रान्तं[3] नाम समाधिं प्रतिल[86 b]भते ॥

उक्तं हि पितापुत्रसमागमे[4] । अस्ति भगवन्सर्वधर्मसुखक्रान्तो नाम समाधिः । यस्य समाधेः प्रतिलम्भाद्बोधिसत्त्वः सर्वारम्बणवस्तुषु सुखामेव वेदनां वेदयते ' नादुःखासुखां । तस्य नैरयिकामपि कारणां कार्यमाणस्य सुखसंज्ञैव प्रत्युपस्थिता भवति । मा[5]नुषीमपि कारणां कार्यमाणस्य हस्तेष्वपि छिद्यमानेषु पादेष्वपि कर्णेष्वपि नासास्वपि सुखसंज्ञैव प्रत्युपस्थिता भवति । वेत्रैरपि ताड्यमानस्यार्धवेत्रैरपि कशाभिरपि ताड्यमानस्य सुखसं-

1) *çam* MS.

2) This denom. hitherto in gramm. only.

3) Cf. M. Vyutp. XXI. 83 *sarvadharmātikramaṇo nāma samādhiḥ*.

4) Nanjio 23 (16); K.F. 215; M. Vyutp. LXV. 8. Cited also in Bodhicaryāvatāraṭīkā, 326.

5) Here follows one of the evidently traditional lists of tortures for which Buddhist writers have so morbid an affection. Compare Rh. Davids, tr. Mil. Pañh. I. 277 n. 6 and Aṅg. nikāya II. 1.1 (with Buddhaghosa's comm. printed at pp. 113—14 of Morris's ed. of 1883) cited by him.

ज्ञैव प्रवर्तते बन्धनागारेष्वपि प्रक्षिप्तस्य ॥ पे ॥[1] तैलपाचिकं वा क्रियमाणस्य ' इक्षुकुट्टितवद्वा कुट्ट्यमानस्य ' नडचिप्पितिकं वा चिप्यमानस्य तैलप्रद्योतिकं वादीप्यमानस्य सर्पिःप्रद्योतिकं वा दधिप्रद्योतिकं वादीप्यमानस्य सुखसंज्ञैव प्रत्युपस्थिता भवति । उल्कामुखं वा क्रियमाणस्य सिंहमुखं वा क्रियमाणस्य शुष्कवर्त्तिकां वा वर्त्यमानस्य ॥ पे ॥ कार्षापणच्छेदिकं[2] वा छिद्यमानस्य पिष्टपाचनिकं वा पाच्यमानस्य हस्तिभिर्वा मर्द्यमानस्य सुखसंज्ञैव प्रवर्तते । अक्षिण्युत्पाट्यमाने जीवशूलिकमपि क्रियमाणस्य सर्वशो वाघातं निर्णीय शिरसि वा प्रपात्यमाने सुखसंज्ञैव प्रवर्तते ' न दुःखसंज्ञा ' नादुःखासुखसंज्ञा ॥ तत्कस्य हेतोः । तथा हि बोधिसत्त्वस्य महासत्त्वस्य दीर्घरात्रं चर्यां चरत एतत्प्रणिधानमभूत् । ये मां भोजयेरन् ' ते उपशमशमसुखस्य लाभिनो भवेयुः । ये मां पालयेयुः सत्कुर्युर्गुरुकुर्युर्मानयेयुः पूजयेयुः सर्वे ते उपशमसुखस्य लाभिनो भवेयुः । येऽपि मामाक्रोशेयुर्विस्पर्शेयुस्ताडयेयुः शस्त्रेणाच्छिन्द्युर्यावत्सर्वशो जीविताद्व्यपरोपयेयुः सर्वे ते संबोधिसुखस्य लाभिनो [87 a] भवेयुः ' अनुत्तरां सम्यक्संबोधिमभिसंबुध्येरन्निति ॥ स एभिर्मनस्कारैः समन्वागत एतेन कर्मणा ' एभिः प्रणिधिभिः समन्वागतः सर्वसत्त्वानुगतां सुखसंज्ञामासेवते निसेवते भावयति बहुलीकरोति । स तस्य कर्मणो विपाकेन सर्वधर्मसुखाक्रान्तं नाम समाधिं प्रतिलभते । यस्मिन्समये बोधिसत्त्वेन सर्वधर्मसुखाक्रान्तो नाम समाधिः प्रतिलब्धो भवति तस्मिन्समये ऽक्षोभ्यो भवत्यसंहार्यः सर्वमारकर्मभिरिति विस्तरः ॥

अयं हि प्रयोगः सर्वपरित्यागपूरणः । सर्वचर्यादुष्करचर्यासाधनः सर्वक्षान्तिदृढीकरणः सर्ववीर्यासंसादनः[3] ' सर्वध्यानप्रज्ञाङ्गसंभारः । तस्मान्नित्यमुदितः स्यात् ॥

1) This passage is not in the Pali lists. The Chinese version of the sūtra (*supra cit.*, kindly communicated by Mr. Watters) renders: «making mincemeat of one — pounding like sugar-cane, crushing like rushes». *tailapācika* may accordingly be the name of some dish, fried in oil. The MS. reads *kuṭṭitakadyā*. *cippatika* and √*cip* are new to Sanskrit. The genuiness of the root is proved by the Marathi forms *cipṇen*, *cepṇen* 'squeeze'. Derivatives with a formative *-ṭa* (as in Pali *cumbaṭa*) occur in Sansk. Pali and Hindi.

2) cf. Buddhaghosa, p. 114 med., and Rh. Davids, p. 277.7, supr. cit.

3) The MS. reading is perhaps °*sīdana*.



यथाह चन्द्रप्रदीपसूत्रे ।

सगौरवः प्रीतमनाः स[दा][1] भवेत् ।
सौम्याय दृष्टीय सदा स्थितो भवेद् ' इति ॥

उक्तं चाक्षयमतिसूत्रे । तत्र कतमा मुदिता । यावद्धर्मानुस्मरणात्प्रीतिः प्रसादः प्रामोद्यं चित्तस्यानवलीनता[2] ऽनवमृद्यता[3] ऽपरितर्षणा ' सर्वकामरतीनामपकर्षणा सर्वधर्मरतीनां प्रतिष्ठानं ' चित्तस्य प्रामोद्यं कायस्यौद्बिल्यं बुद्धेः संप्रहर्षणं मनस उत्प्लवः ' तथागतकायाभिनन्दनरतिर्लक्षणानुव्यञ्जन[4]विभूषणपर्येष्टिकौशल्यं । कुशलधर्मश्रवणापरिखेदता तत्त्वधर्मप्रतिशरणप्रतिपत्तिप्रीतिप्रसादप्रमोद्यं मुदितस्य धर्मोत्प्लवः । सततं सत्त्वेष्वप्रतिहतबुद्धिता ' तीव्रच्छन्दता । बुद्धधर्मपर्येष्टिषु तस्य च धर्मच्छन्दस्यानुत्सृजनता[5] । उदारेषु बुद्धधर्मेष्वधिमुक्तिः । विमुक्तिः प्रादेशिकयाना[6]पकृष्टचित्तोत्पादः । मात्सर्यासंकुचिताश्चित्तोत्पादः । याचितस्य दातुकामता । ददतो दत्त्वा च त्रिमण्डलपरिशोधितं दानप्रामोद्यम् । शीलवत्सु सदा प्रसादः । दुःशीलेष्वनुग्रहप्रीतिः । स्वशीलपरिशुद्ध्या सर्वदुर्गन्धमतिक्रमाश्वासनं ' तथागतशीलपरिणामनता ' दृढाभेद्यता ' परदुरुक्तदुरागतेषु वचनपथेष्वप्रतिहतचित्तता ' क्षान्तिसौरत्यं[7] ' [87 b] निर्मानता ' गुरुषु गौरवावनामश्चित्रीकारः ' सदा स्मितमुखता भृकुटिविगतता ' पूर्वाभिलापिता ऽकुहनता ऽनैष्यैषिकता[8] शुद्धाशयता चित्ताकर्कशता ऽकुटिलता ' सर्वत्रानुशंसदर्शिता आत्मस्खलितप्रत्यवेक्षिता ' आपत्तिष्वचोदनता संरञ्जनीयधर्मेष्वनुवर्तनता ' शास्तृप्रेम बोधिसत्त्वेषु । आत्मप्रेम धर्मेषु ' जीवितप्रेम तथाग-

1) This syllable uncertain.

2) Cf. *līnatā* supra 179.14.

3) Cf. Lal-v. 37.11.

4) Cf. Lal-v. 114.10.

5) Sic MS.; *anācchindanatā* (126.15 supra) is somewhat analogous.

6) The fifth of the six *yānas* detailed in M. Vyutp. § 59.

7) Cf. Böhtl.[2] s. v., the present passage confirming his correction of Divy. 39.12, 40.6 where the compound is the same.

8) The reading has been corrected in the MS., and remains doubtful. Possibly the Vedic ἅπ. εἰρ. *eshaishya* 'worth striving for' (Ṛv. X. 102.11) is to be compared.

तेषु ' मातापितृप्रेम गुरुषु ' पुत्रप्रेम सत्वेषु ' बुद्धप्रेम आचार्योपाध्यायेषु। उत्तमाङ्गशिरः-प्रेम प्रतिपत्तिषु। हस्तपादप्रेम पारमितासु ' सर्वरत्नप्रेम धर्मभाणकेषु। सर्वरतिक्रीडाप्रे-मानुशासनीषु ' आरोग्यप्रेम संतुष्टौ। भैषज्यप्रेम धर्मपर्येष्टिषु ' वैद्यप्रेम चोदकस्मारकेषु। इति हि या सर्वेन्द्रियेष्वनवलीनेन्द्रियता इयमुच्यते मुदितेत्यादि ॥

5 अत्र च शिक्षितान् बोधिसत्वानिदं वचनमलंकरोति यदुक्तमार्यमहामेघे। निरयग-तिचित्तनित्यसमाधानशीलाश्च निरयगतिप्रियाश्च निरयगतिपत्तनवणिजश्च भवन्ति। निर-यलोलाश्च भवन्ति निरयलोभमत्सरिणश्च निरयाग्निचित्तप्रगुण्णाः[1] भवन्तीति ॥

उक्ता दुःखाधिवासना क्षान्तिः ॥

आर्यसागरमतिसूत्रे[2] तु त्रिविधापि क्षान्तिरुक्ता। इह सागरमते बोधिसत्वो महासत्वः

10 सर्वज्ञताचित्तोत्पादरत्ने ' अनार्यैर्दुःशीलैः सत्वैर्मारैर्मारकायिकाभिर्वा देवताभिर्माराधिष्ठि-तैर्वा मारदूतैर्वा विहेठ्यमानः समीर्यमाणः क्षोभ्यमानस्तर्ज्यमानस्ताड्यमानो न भिद्यते ततो' ऽध्याशयचित्तोत्पादो न भिद्यते सर्वसत्वप्रमोक्षमहाकरुणावीर्यारम्भात्। न भिद्यते त्रिरत्न-वंशानुपच्छेदपराक्रमात् ' न भिद्यते सर्वधर्मसमुदानयनकुशलप्रयोगात् ' न भिद्यते लक्ष-णानुव्यञ्जनपरिनिष्पत्तिगतात्पुण्यसंभारोपचयात् ' न भिद्यते बुद्धक्षेत्रपरिशुद्ध्यभिनिर्हारा-

15 हृतादौत्सुक्यात्[3] ' न भिद्यते सर्वधर्मापरिग्रहाभियुक्तात्कायजीवितोत्सर्गात्। न भिद्यते सर्वसत्वपरिपाचनाभियुक्तादात्मसौख्यानध्यवसानात् ' स एवमध्याशयसंपन्न एव समानः

---

1) The reading is not clear. The Tib. has དམྱལ་བའི་མེ་ལ་སེམས་རྒྱས་པར་འགྱུར The adj. *pragunya*, of which the word in the text might be a Prakritic form, is lexical only ('more, exceeding' like the Tib. equiv.), but the noun *prāguṇya* (Pali: *pāguñña*) occurs. The adj. *prāgguṇa* would make sense; but does not agree so well with the Tib. A marginal note or correction is *prahlāda*.

2) The recension of the work there quoted corresponds, as Mr. Watters informs me, with Nanjio 976.

3) The syllables which I have marked as doubtful are added in the margin in a late and indistinct hand. The Tib. does not agree as regards this part of the compound. As in the corresponding Pali, *abhinirhāra* (if correct) means 'aspiration' and *autsukya* 'zeal'.



सर्वसत्वानामन्तिकादुच्चघनां सहते ' उन्मननां कुत्सनां सहते [88 a] सर्वसत्वानामाक्रोशप-रिभाषां दुरुक्तदुरागतान्वचनपथान्सहते। सर्वसत्वपीडां सहते। सर्वसत्वभारांश्च सहते उत्तारयति वा न च खिद्यते ' न च लीयते। न संलीयते। न विषीदति। बलमुपदर्शयति। स्थाम संजनयति। वीर्यमारभते। पराक्रमं पराक्रमते। उत्साहं जनयति। उन्मूढचित्तं[1] नि-

5 गृह्णाति। स आक्रुष्टो न प्रत्याक्रोशति। ताडितो न प्रतिताडयति। रोषितो न प्रतिरोष-यति। क्रुद्धाय न प्रतिक्रुध्यति। एवं चित्तगणनासंनाहं संनह्यति[2] * * * *

---

1) Both MS. and xylograph are indistinct. The former perhaps reads *unmūḍhyā°*; the latter (115 b 1) seems to read རྨོངས་པའི་སེམས་ 'a mind of infatuation' — a meaning which does well enough for *unmūḍha*, a permissible form, as grammatical writers preserve the compound *un-muh*, though with partic. *unmugdha*.

2) No lacuna is indicated in the MS.; but it is clear from the Tibetan version (of the present work) and the Chinese version (of the sūtra quoted), that several lines have fallen out. They commenced with *tadyathā* or the like, and gave the substance of the *cittagaṇanā*. The Tibetan has:

འདི་ལྟ་སྟེ་ཐེག་པ་ཆེན་པོའི་མདོ་འདི་ནི་འཇིག་རྟེན་ཐམས་ཅད་དང་མི་མཐུན་པའི་ཐེག་པའོ། དེ་ཅིའི་ཕྱིར་ཞེ་ན། སེམས་ཅན་དེ་དག་ནི་རྒྱུན་གྱི་རྗེས་སུ [sic] འགྲོ་བ་དག་གོ། བདག་ནི་རྒྱུན་ལས་ལྡོག་པར་རྩོལ་བར་འདོད་པའོ། སེམས་ཅན་དེ་དག་ནི་ཕན་ཚུན་མི་མཐུན་པ་དག་གོ། བདག་ནི་སེམས་ཅན་ཐམས་ཅད་ཀྱི་མི་མཐུན་པ་སྤང་བའི་ཕྱིར་གོ་ཆ་བགོས་པའོ། སེམས་ཅན་དེ་དག་ནི་གནོད་སེམས་ལ་དགའ་བ་དག་གོ། བདག་བཟོད་པ་དང་ངེས་པ་ཡོད[ས་]སུ་ཚོལ་བའོ།། སེན(སེམས་ཅན)གཅིག་ལ་གཅིག་འདྲིད་ཅིང་ཡང་སུ་འདྲིད་པ་གནས་པ་དག་གོ། བདག་ནི་ཤེས་རབ་ཀྱིས་ངོམས་པ་ཡོངས་སུ་ཚོལ་བའོ།། (115 b. 1—4).

I venture to render this:

«Thus [thinks he]: 'This scripture of the Mahāyāna is not in harmony with the World as a whole. Why? Yonder beings (*i. e.* the worldly) are such as go with the current. I love to try for the contrary to the current. They are not in harmony with one another; I have put on armour in order to abandon the non-harmony of all those men. They are such as feel joy in the spirit of harm; I altogether seek for patience and certainty. They cheat one another and persevere in it; I altogether seek for taking my fill of wisdom'.»

As to the Chinese versions of the original work in which the passage occurs, Mr. Watters writes: 'The title of the sūtra quoted from was evidently *Sāgara-*

सचेत्पुनरेते सत्वा यावन्तो दशसु दिक्षु प्रभाव्यमानाः प्रभाव्यन्ते ते सर्वे ऽसिशक्तितोमरपालियोगेन[(1)] मां पृष्ठतः पृष्ठतो ऽनुबध्नीयुः। यत्रैष पृथिवीप्रदेशे स्थितो वा निषण्णो वा चङ्क्रम्यमाणो वा शयानो वा बोधिचित्तमुत्पादयिष्यति दानचित्तं वा यावत्प्रज्ञाचित्तं वा श्रुतकुशलमूलचित्तं वोत्पादयिष्यति तत्रास्य पृथिवीप्रदेशे शतधाबदरीपत्त्रप्रमाणं कायं
5 छेत्स्यामो विकरिष्यामो विध्वंसयिष्यामस् ' ते चेत्सर्वसत्वा मामाक्रोशयेयुः परिभाषेरन् कुत्सयेयुः पंसयेयुरसत्याभिर्वाग्भिः परुषाभिर्वाग्भिः समुच्चरेयुरधिष्ठिता अनर्थकर्माणः शतधाबदरीपत्त्रप्रमाणं मम कायं छिन्द्युर्भिन्द्युर्विकरेयुर्विध्वंसयेयुः ' एवं मया न कस्यचित्सत्वस्यान्तिके क्षोभचित्तमुत्पादयितव्यं। तत्कस्य हेतोः। पूर्वा कोटिः संसारस्याप्रमाणीकृता यत्र मे ऽयमात्मभावो नरकगतस्यापि तिर्यग्योनिगतस्यापि यमलोकगतस्यापि म-
10 नुष्यगतस्यापि कामाहारपलिगुद्धस्य[(3)] धर्मानश्रुतवतो विषमाजीवगोचरस्य निरर्थकजीविनः अङ्गप्रत्यङ्गस्य शतधा छिन्नो भिन्नो निकृत्तो विविधाभिश्च कारणाभिः कारितो न च मया ततो निदानमात्मार्थः कृतो न परार्थः। सचेत्पुनर्ममैते सर्वसत्वा अपरान्तकोटिं छिन्द्युर्भिन्द्युर्विकिरेयुर्विध्वंसयेयुस्तथापि मयापरित्यक्तैव सर्वज्ञता। अपरित्यक्ता एव सर्वसत्वाः ' अपरित्यक्तः कुशलो धर्मच्छन्दः। तत्कस्य हेतोः। सर्वा ह्येषा कायपीडा कायवि-

---

*mati sūtra*. This is shown by the Chinese translation of the title given in the early translation № 61 in B. Nanjio's Cat. But the text before the Sanscrit author [Çāntideva] was apparently that of №976 [called by Nanjio *S°-paripṛcchā*] which differs from the other in some details. The Chinese rendering of the passage in № 976 is to this effect: «... He thinks with himself: 'I must now put on the armour of Mahāyāna-patience and for this reason. Mahayānism is at the opposite pole from worldliness; the people of the world follow the current of life and death, my Mahāyanism goes against the current; the people of the world are always at loggerheads, Mahāyanism tells mortals to cut off the cause of quarrel; the people of the world are given to angry passions, in Mahāyanism patient endurance increases and prevails; the people of the world cheat and defraud one another, my Mahāyanism tells all to be filled with kindness'.»

1) *pala* (?*ça*) *yo* MS. My correction is founded on the Tib. མཚོན་རྩེ་གཉིས་པ་ 'a pair of pointed weapons'.

2) For the more usual *samudācar* 'address'; cf. Senart, Mhv. I. p. 441.

3) cf. 105.12 supra.



व[88 b]र्तना। नैरयिकस्य दुःखस्य शततमीमपि कलां नोपैति यावदुपनिषदमपि[(1)] न क्षमते। नरकावासमप्यहमुत्सहे ' न पुनर्मया बुद्धधर्माः परित्यक्तव्या न सर्वसत्वारम्बणा महाकरुणा॥ पे॥ यन्निदानं पुनर्व्यापाद उत्पद्येत ' तं वयं धर्मं प्रहास्यामः। कतमश्च स धर्मो ' यदुत कायप्रेम कायनिकेतः कायाध्यवसानं ' उत्सृष्टश्च काय उत्सृष्टो व्यापादः ' एवं धर्मगणनाविष्टः सागरमते बोधिसत्वः सर्वसत्वपीडां सहते॥ पे॥ यः कायस्योत्सर्गः 5
कायपरित्यागः कायानपेक्षा ' इयमस्य दानपारमिता॥ यत्काये छिद्यमाने सर्वसत्वान् मैत्र्या स्फरति[(2)] ' वेदनाभिश्च न संक्लिश्यते ' इयमस्य शीलपारमिता॥ यत्काये छिद्यमाने य एवास्य कायं छिन्दति तेषामेव प्रमोक्षार्थं क्षमते ' न च चित्तेन क्षण्यते क्षान्तिबलं चोपदर्शयतीयमस्य क्षान्तिपारमिता॥ येन वीर्येण तं सर्वज्ञताच्छन्दं नोत्सृजति चित्तबलाधीनं च प्रतिगृह्णाति। संसारमेव चानुबध्नाति। कुशलमूलारम्भमेव चारभते ' इयमस्य वीर्यपारमि- 10
ता॥ यत्काये विकीर्यमाणे तत्सर्वज्ञताचित्तोत्पादरत्नं कर्तुं न संमुह्यति बोधिमेवापेक्षते शान्तप्रशान्तमेव प्रत्यवेक्षते ' इयमस्य ध्यानपारमिता॥ यत्काये छिद्यमाने कायस्य तृणकाष्ठकुड्यवत्प्रतिभासोपमतां प्रत्यवेक्षते मायाधर्मतां च कायस्यावतरति। भूतानित्यतां च भूतदुःखतां च भूतानात्मतां च भूतशान्ततां च कायस्योपनिध्यायति[(3)] ' इयमस्य प्रज्ञापारमितेति विस्तरः॥ पे॥ 15

पुनरपरमस्यैवं भवति। एष सत्वः कुसीदः शुक्लधर्मरहितः[(4)] ' स मामाक्रोशयति परिभाषते। हन्त वयमारब्धवीर्या भविष्यामः ' अतृप्ताः कुशलमूलपर्येषणाभियुक्ता ' एष एव तावन्मया सत्वः पूर्वतरं बोधिमण्डे निषादयितव्यः। पश्चान्मयानुत्तरा सम्यक्संबोधिरभिसं-

---

1) Rendered by the Tib. (116. a. 5) རྒྱུ 'cause'; but the phrase is clearly a proverbial one: cf. Vajracch. § 24 fin.

2) This is the transitive usage of √*sphar* characteristic of Buddh. Sk.; cf. Böhtlingk W.K.F. VII. 384, where M.Vyutp. § 68 is cited and the reading corrected.

3) Compound new in Skt.; Pali *upanijjhāyati* (J.P.T.S. 1887, p. 127).

4) Dhammap. 87, p. 16.

बोद्धव्येति ॥ पे ॥ ईदृशानामस्माभिः सत्त्वानामदान्तानामगुप्तानामनुपशान्तानामर्थाय संनाहाः संनद्धव्याः ॥ पे ॥ हन्त वयं धर्मतां प्रतिसरिष्यामः, को ऽत्राक्रोशति वा आक्रुश्यते वा। स परिगवे[89 a]षमाणो न तं धर्ममुपलभते। य आक्रोशति वा आक्रुश्यते वा। स आत्मपरानुपलब्धोपलम्भदृष्टिविगतः क्षमत इति ॥

5 भगवत्याम[1]प्युक्तं। एवं चित्तमुत्पादयति। येन मया सर्वसत्त्वानां विवाद उत्सारयितव्यः, सो ऽहं स्वयमेव विवदामि। लाभा मे दुर्लब्धा यो ऽहं जल्पिते प्रतिजल्पामि। येन मया सर्वसत्त्वानां संक्रमभूतेन भवितव्यं सो ऽहं परस्य त्वमित्यपि वाचं भाषे। परुषं वा प्रतिवचो ददामि। इदं मया नैव वक्तव्यं जडसमेन, एडकमूकसमेन मया कलहविवादेषु भवितव्यं, परतो दुरुक्तान् दुरागतान् दुर्भाषितान् भाष्यमाणान्वचनपथान् शृण्वता चित्तं 10 नाघातयितव्यं। परेषामन्तिके न ममैतत्साधु न प्रतिरूपं यो ऽहं परस्य दोषान्तरं संजनयेयम्। एतन्न मम प्रतिरूपं यदहं परेषां दोषान्तरमपि संश्रोतव्यं मन्ये। तत्कस्य हेतोः। न मयाशयो विकोपयितव्यो येन मया सर्वसत्त्वाः सर्वसुखोपधानेन सुखयितव्याः परिनिर्वापयितव्याश्चानुत्तरां सम्यक्संबोधिमभिसंबुध्य तत्र नामाहं व्यापद्ये। न च मया परेषां स्वपराद्धानामपि व्यापत्तव्यं। स नामाहं मो[2]ऽहं क्षोभं गच्छामि। इदं तु मया करणीयं, दृढप- 15 राक्रमतया पराक्रान्तव्यं। न मया जीवितान्तराये ऽपि क्रियमाणे क्षोभः करणीयः। न मया भृकुटीमुखे उत्पादयितव्येति ॥

बोधिसत्त्वप्रातिमोक्षे ऽप्युक्तम्। ये क्रुद्धाः सत्त्वास्तानाश्वासयति क्षमापयति, अनुलोमयति धर्मेण तोषयतीति ॥

इति शिक्षासमुच्चये क्षान्तिपारमिता परिच्छेदो नवमः ॥ ९ ॥

1) The Tib. gives no help to the identification of this work. Apparently a recension of the Prajñāpāramitā is intended; compare the quotations in Ch. XII below. See also the successive extracts in Madhy.-vṛ., 160. 10—18 (*'uktaṃ Bhagavatyāṃ'*) and 162. 16—30 (*'uktaṃ bhagavatyāṃ Prajñāpāramitāyāṃ*).

2) Added in margin. The Tib. 117 b 2 has བདག་གིས་མུན་ཏུ་འགྱུར་རམ་ as if the reading were *kim ahaṃ tamo gacchāmi?*



## X.

## वीर्यपारमिता दशमः परिच्छेदः ॥

एवं क्षान्तिप्रतिस्थितः श्रुते वीर्यमारभेत। अन्यथा श्रुतमेवास्य विनाशाय संपद्यते ॥ यथोक्तं चन्द्रप्रदीपसूत्रे।

कि[1]यद्बहू[2] धर्मपर्यापुणेया शीलं न रक्षेत श्रुते नमत्त। 5
न बाहुश्रुत्येन स शक्यु[3] त्रायितुं दुःशीलयेन व्रजमान दुर्गतिम् ॥

श्रुतानुशंसास्तु नारायणपरिपृच्छायामुक्ताः। [4]तथा हि कुलपुत्राः श्रुतवतः प्रज्ञागमो भवति। प्रज्ञावतः क्लेशप्रशमो भवति। निःक्लेशस्य मारो ऽवतारं न लभते ॥

अत्र च महर्षेरु[89 b]त्तरस्य जातकं विस्तरेण कृत्वाह। [5]धर्मकामानां हि, विमलतेजः, बोधिसत्त्वानां महासत्त्वानां सगौरवाणां सप्रतीशानां अन्यलोकधातुस्थिता अपि 10 बुद्धा भगवन्तो मुखमुपदर्शयन्ति धर्मं चानुश्रावयन्ति[5]। धर्मकामानां, विमलतेजः, बोधिसत्त्वानां महासत्त्वानां पर्वतकन्दरवृक्षमध्येषु धर्मनिधानानि निक्षिप्तानि। धर्ममुखान्यनन्तानि पुस्तकगतानि करतलगतानि भवन्ति। धर्मकामानां विमलतेजः बोधिसत्त्वानां पूर्वबुद्धदर्शिन्यो देवता बुद्धप्रतिभान[6]मुपसंहरन्ति ॥ पे ॥ परिक्षीणायुष्काणां बुद्धा भगवन्तो देवताश्चायुर्बलं चोपसंहरन्ति। बुद्धाधिष्ठानेन देवताधिष्ठानेन च काङ्क्षमाणा वर्षसहस्रमवति- 15 ष्ठन्ते ॥ पे ॥ यावत्कल्पं वा कल्पावशेषं वा यावद्वा आकाङ्क्षन्ति धर्मगौरवजातानां बोधिसत्त्वानां बुद्धा भगवन्तो जरामप्यपनयन्ति, व्याधीनपनयन्ति, स्मृतिमुपसंहरति, गतिं म-

1) The readings of Sansk. and Tib. are alike doubtful in these gāthās.
2) After *bahū* a later hand has inserted the syllable *na*.
3) *çakshu* MS.
4) Cf. Minaev, Recherches, p. 35, n. 1.
5)..5) This sentence is erroneously repeated in the MS.
6) Cf. 15. 14 supra.

त्तिं प्रतिभानं चोपसंहरन्ति ॥ पे ॥ दृष्टिकृतानि विनोदयन्ति ' सम्यग्दृष्टिं चोपसंहरन्ति । धर्मगौरवेण ' विमलतेजः ' बोधिसत्त्वानां महासत्त्वानां सर्वोपक्रमभयानि न भवन्ति । तस्मात्तर्हि विमलतेजः श्रुतसंभारकौशल्याभियुक्तेन बोधिसत्त्वेन भवितव्यमिति ॥

किमाकारं श्रुतं बोधिसत्त्वविनये प्रशस्तं । यथा आर्याक्षयमतिसूत्रे ऽभिहितं । अशीत्याकारप्रवेशं श्रुतं । तद्यथा । छन्दाकारमाशयाकारमध्याशयाकारं प्रयोगाकारं निर्माणाकारमप्रमाणाकारं कल्याणमित्राकारं गौरवाकारं[1] प्रदक्षिणाकारं सुवचनाकारं पर्युपासनाकारमवहितश्रोत्राकारं मनस्काराकारमविक्षेपाकारमवस्थानाकारं रत्नसंज्ञाकारं भैषज्यसंज्ञाकारं सर्वव्याधिशमनाकारं स्मृतिभाजनाकारं गतिबोधनाकारं मतिरोचनाकारं बुद्धिप्रवेशाकारमतृप्तबुद्धधर्मश्रवणाकारं त्यागबृंहणाकारं दान्ताजानेयाकारं बहुश्रुतसेवनाकारं सत्कृत्यप्रीत्यनुभवनाकारं कायौद्बिल्याकारं चित्तप्रह्लादनाकारमपरिखेदश्रवणाकारं धर्मश्रवणाकारं प्रतिपत्तिश्रवणाकारं परदेशनाश्रवणाकारं अश्रुतश्रवणाकारं अभिज्ञाश्रवणाकारमन्ययानास्पृहणाश्रवणाकारं प्रज्ञापारमिताश्रवणाकारं बोधिसत्त्वपिटक[2]श्रवणाकारं संग्रहवस्तुश्रवणाकारमुपायकौशल्यश्रवणाकारं ब्रह्मवि[90 a]हारश्रवणाकारं स्मृतिसंप्रजन्यश्रवणाकारं गौरवाकारं उत्पादकौशल्यश्रवणाकारमनुत्पादकौशल्यश्रवणाकारमशुभाकारं मैत्र्याः श्रवणाकारं प्रतीत्यसमुत्पादाकारं अनित्याकारं दुःखाकारमनात्माकारं शान्ताकारं शून्यतानिमित्ताप्रणिहिताकारं अनभिसंस्काराकारं कुशलाभिसंस्काराकारं सत्त्वाधिष्ठानाकारं अविप्रणाशाकारं स्वाधीनाकारं स्वचित्तारक्षणाकारं वीर्यस्याश्रंसनाकारं धर्मनिध्यप्त्याकारं क्लेशविपक्षाकारं स्वपक्षपरिकर्षणाकारं परपक्षक्लेशनिग्रहाकारं सप्तधनसमवशरणाकारं सर्वदारिद्र्योपच्छेदाकारं सर्वविद्वत्प्रशस्ताकारं पण्डिताभिनन्दनाकारं आर्यसंमताकारं अनार्यप्रसादनाकारं सत्यदर्शनाकारं स्कन्धदोषविवर्ज-

1) Added in margin.

2) Probably the book so called (K.F. 215; Nanjio 23 (12), 1005) translated by Hiouen Thsang, not a division of literature. The same *piṭaka* is mentioned in the opening words of the Laṅkāvatāra (Rāj. Mitra, Nep. B. L. 114.22 and my own Cambridge Cat., 21. 3).



नाकारं संस्कृतदोषपरितुलना[1]कारमर्थप्रतिशरणाकारं धर्मप्रतिशरणाकारं[2] सर्वपापाकरणाकारं आत्मपरहिताकारं सुकृतकर्माननुतप्यनाकारं विशेषगमनाकारं सर्वबुद्धधर्मप्रतिलाभाकारमिति ॥

पुनरत्रैवाह । यश्च धर्मसंभारयोगः स एवास्य ज्ञानसंभारो भवति । तत्र कतमो धर्मसंभारयोगो येयमल्पार्थता ऽल्पकृत्यता ऽल्पभाषता ऽल्पपरिष्कारता पूर्वरात्रापररात्रं जागरिकायोग[3]मनुयुक्तस्य श्रुतार्थपरितुलनता ' भूयो भूयः पर्येषणता ' चित्तस्यानाविलता ' नीवरणानां[4] विष्कम्भनता ' आपत्तिषु निःशरणज्ञानं ' अकौकृत्यता ' अपर्युत्थानता । प्रतिपत्तिसारता ' धर्मनिम्नता[5] धर्मप्रवणता धर्मप्राग्भारता[5] । पराक्रमसंपन्नता आदीप्तशिरश्चैलोपमता ज्ञानपर्येष्ट्या ' तन्मयविहारिता । अशिथिलशीलता ऽनिक्षिप्तधुरता विशेषगामिता संगणिकाविवर्जनमेकारामता ऽरण्याभिमुखमनस्कारता आर्यवंशसंतुष्टि[ः]धुतगुणेष्वचलनता धर्मारामरतिरतता लौकिकमन्त्रास्मरणता लोकोत्तरधर्मपर्येष्टिता स्मृत्यप्रमोषता ' अर्थगत्यनुग[6][90 b]मता । मत्या मार्गानुलोमता । धृत्या संवरप्रत्ययैर्ज्ञाना-

1) A new form: Tib. (119 a 5) ཡོང་སུ་འཇལ་བ་ Cf. infra l. 6.

2) Here the Tib. has two mere *ākāras* referring to preserving [what is heard] in one's consciousness (ཤེས) and 'in sūtras of true purport' (ངེས་པའི་དོན་གྱི་མདོ་སྡེ་ལ་).

3) See Senart, Mhv. I. 587.

4) Pali form; cf. Ch. s. v., and likewise s. v. *vikkhambana*. Tib. སྒྲིབ་པ་རྣམས་ 'the obscurations (depravities) of the mind' — five in number, as in the Pali authorities.

5) . . 5) A stock-phrase in Buddh. literature for intense earnestness; cited by Ch. from Jāt. [I] 11[.15], and to be replaced (on MS. authority) in Lal.-v. 216 ad fin., where Rāj. Mitra's text reads wrongly °*pracaraṇo*.

6) *gatyārthagatyanugamatā* MS.; Tib. དོན་རྟོགས་པའི་རྗེས་སུ(sic)་འགྲོ་བ་ 'following up the perception of the meaning'.

नुगमः[1]। ह्रीरपत्राप्यालंकारता। ज्ञानानुगमनसारता। अज्ञानविधमनता। अविद्यामोह-तमस्तिमिरपटलपर्यवनद्धस्य प्रज्ञाचक्षुर्विशुद्धिः। सुविशुद्धबुद्धिता। बुद्धिविस्तीर्णता। अ-संकुचितबुद्धिता प्रभिन्नबुद्धिता। प्रत्यक्षबुद्धिता। अपराधीनगुणता। स्वगुणैरमन्यनता। परगुणपरिकीर्तनता। सुकृतकर्मकारिता। कर्मविपाकानुद्धुरता। कर्मपरिशुद्धिज्ञान-मिति॥[2]

किं श्रोतव्यं। उक्तं भगवता ज्ञानवैपुल्यसूत्रे। सार्थकानि शास्त्राणि शिक्षितव्या-नि। अपार्थकानि परिवर्जयितव्यानि। तद्यथा। लोकायतशास्त्राणि दण्डनीतिशास्त्राणि काखो[3]र्दशास्त्राणि वादविद्याशास्त्राणि कुमारक्रीडाशास्त्राणि जम्भकविद्याशास्त्राणि॥ पे॥ यान्यपि तदन्यानि कानिचिन्मोक्षप्रतिकूलानि शास्त्राणि संमोहाय संवर्तन्ते तानि स-र्वाणि बोधिसत्त्वयानसंप्रस्थितेन परिवर्जयितव्यानीति॥

एवं श्रुतवता चित्तं शोधयितुमरण्यमाश्रयणीयं। कथं पुनराशयसंपन्नस्याप्युग्रदत्तपरि-पृच्छायां गृहमनुज्ञातं। यत्वत्तो ऽप्य[4]सामर्थ्यात्। परदारादिष्वपि तर्हि नापत्तिः स्यात्। न तेषामसामर्थ्ये ऽपि प्रकृतिदुष्टत्वाद्गृहावासस्य च प्रज्ञप्तिसावद्यत्वादिति॥

॥ इति शिक्षासमुच्चये वीर्यपारमिता परिच्छेदो दशमः॥ १०॥

1) °*gamahrīr*° MS. I follow the Tib. in dividing the clauses.

2) The Tib. adds as the end of this quotation: བཙུན་པ་ཤཱ་རིའི་བུ་ (*bhadanta Çāriputra*) བྱང་ཆུབ་སེམས་དཔའ་རྣམས་ཀྱི་ (*bodhisatvānām*) ཡེ་ཤེས་ཀྱི་ཚོགས་ (*jñāna-sambhārah* ut supra) མི་ཟད་པ་ཞེས་གསུངས་སོ (*na parihīyate* (?) *iti*).

3) On the meaning 'a magical performance for procuring . . death', and for other spellings of this word see Hörnle, Bower, MS. Pt. VI (really an extract from Pañca-rakshā) p. 227, n. 8. Tib. བྱད་སྟེམ 'imprecation'. For the whole passage cf. Minaev. Journ. Publ. Instr. 1871. № 11 p. 97 and S. d'Oldenburg «Записки» VIII, 60—61.

4) This syllable a sec. manu.



# XI.

## अरण्यसंवर्णनं नामैकादशः परिच्छेदः॥

तदेवमुग्रदत्तपरिपृच्छाविधिना गृहदोषान्भावयित्वा श्रुतवता चित्तं शोधयितुमरण्य-माश्रयणीयमिति स्थितं॥ तथा चोक्तं चन्द्रप्रदीपसूत्रे।

न जातु कामान्प्रतिषेवमाणाः पुत्रेषु दारेषु जनित्व तृष्णां।
गृहं च सेवित्व जुगुप्सनीयमनुत्तरां प्राप्स्यति सो ऽग्रबोधिम्॥
ये काम वर्जेन्ति यथा ऽग्निकर्षू पुत्रेषु दारेषु जनित्व तृष्णां।
उत्त्रस्त गेहादभिनिष्क्रमन्ति न दुर्लभा तेष्वियमग्रबोधिः॥
न कश्चि बुद्धः पुरिमेण आसीदनागतो भेष्यति यो ऽवतिष्ठते।
येहि स्थितैरेव अगारमध्ये प्राप्ता इयं उत्तम अग्रबोधिः॥
प्रहाय रा[91 a]ज्यं यथ खेटपिण्डं वसेदरण्येषु विवेककामः।
क्लेशान् प्रहाय[1] विनिहत्य मानं बुध्यन्ति बोधिं विरजामसंस्कृताम्॥ पे॥
अन्नेहि पानेहि च चीवरेहि पुष्पेहि गन्धेहि विलेपनेहि।
नोपस्थिता भोन्ति नरोत्तमा जिना यथ प्रव्रजित्वा चरमाणधर्मान्॥
यश्चैव बोधिं प्रतिकाङ्क्षमाणः सत्त्वार्थ निर्विण्ण कुसंस्कृतातः[2]।
अरण्याभिमुख[3] सप्त पदानि गच्छेद्द अयं ततः पुण्यविशिष्ट भोति॥

यदि पुनर्विसभागसत्त्वानुनयात्परिषत्कामतया वा लाभादिकामतया वा विवेकप्रवे-शे विलम्बेत। तदर्थमत्रैवोक्तं।

1) So MS. against metre: read *prahāya kleçān*.

2) Cf. *kusaṃgatam* 'schlechte Verbindung' quoted from Mbh. by B. & R.

3) Though metrically irregular, these words preserve the sense; Tib. དགོན་པར་ཕྱོགས་ཏེ (120 b 5). With *sapta padāni* cf. 167. 3.

न विज्ञ बालेहि करोन्ति विग्रहं सत्कृत्य बालान्परिवर्जयन्ति।
ममान्तिके चे---ति[1] प्रदुष्टचित्ता न बालधर्मेहि करोन्ति संस्तवम्॥
न विज्ञ बालान करोति सेवनां विदित्व बालान स्वभावसंततिम्।
कियच्चिरं बालसुसेविता पि पुनो ऽपि ते भोन्ति अमित्रसन्निभाः॥
5 न विज्ञ बालेषिह विश्वसन्ति विज्ञाय बालान स्वभावसंततिम्।
स्वभावभिन्ना प्रकृतीय बालाः कुतो ऽस्ति मित्रं हि पृथग्जनानां॥
सहधार्मिकेनो[2] वचनेन उक्ताः क्रोधं च दोषं च अप्रत्ययं च।
प्राविष्करोन्ती[3] इमि बालधर्मा इममर्थ विज्ञाय न विश्वसन्ति॥
बाला हि बालेहि समं समेन्ति यथा अमेध्येन अमेध्य सार्द्धम्।
10 विज्ञः पुनर्विज्ञजनेन सार्द्धं समेन्ति सर्पिर्यथ सर्पिमण्डे॥

तथा च पुनरत्रैवमाह।

सूसुखिताः सद ते नरलोके येषु प्रियाप्रिय नास्ति कहिंचित्।
ये च न कन्दरके ऽभिरमन्ते श्रामणकं सुसुखं[4] अनुभोन्ति॥
येषु ममापि तु नास्ति कहिंचित्' येषु परिग्रहु सर्वशु नास्ति।
15 खड्गसमा[5] विचरन्तिमु[6] लोकं गगने पवन[7] यथेव व्रजन्ति॥

1) The Tib. renders as if the reading were: *'mamāntike te* [sc. bālāḥ] *pradushṭacittā' iti* [*matvā*] *vijño na karoti'*.

2) Cf. Pali *sahadhammika* (e. g. Mahāvagga, VI. 31. 4). *-eno* (if genuine, compare *saṃvṛtasyo* below) must be coordinated with the Prakrit instr. *-enaṃ*.

3) This confirms the reading, questioned by Böhtlingk (W.K.F., VII. 362), of Divy. 201 (not 210).23.

4) Unmetrical; but certified by the Tib. རབ་བདེ་ (121 a 3). Qu. correct to °*ikāṃ sukhām*?.

5) This illustrates the usage of *khaḍga* = *pratyekabuddha* recorded in lexx.; cf. B. R. s. v. Compare also Suttanip. 6—12; Mhv. I. 357—8.

6) i. e. *vicarant' ime*.

7) The metre is quite irregular; but the substantial correctness of the text is shown by the Tib. ནམ་ཁའ་ལ་ནི་རླུང་ལྟར་ (121 a 4).



स्युः सुखिता वत ते नरलोके येष न सज्जति मानस लोके।
वायुसमं सद तेषिह चित्तं नो च प्रियाप्रिय विद्यति संगो॥
अप्रिय ये दुखितेहि निवासो येऽपि प्रिया दुखितेहि[1] वियोगो।
अत्त उभे अपि तेहि जहित्वा ते सुखिता नरये रत धर्मे॥

5 पुनरत्रैवोक्तम्।

[2]भवति सततमल्पकृत्ययोगी पृथु गुण दोषत सर्वि वर्जयित्वा।
न विवदति [91 b] कदाचि युक्तयोगी इमि गुण तस्य भवन्त्यरण्यवासे॥
सद भवति निविष्ट संस्कृतेऽसौ न भवति तस्य पृहा कहिंचि लोके।
न च भवति विवृद्धिरास्रवाणां वनवसतोऽस्य भवन्ति आनुशंसाः॥
10 अधिकरण[3] न तस्य जातु भोती सद उपशान्तरतो विवेकचारी।
वचसि मनसि काय संवृतस्यो बहुगुण तस्य भवन्त्यरण्यवासे॥
[4]भवति अनुकूल तस्य मोक्षो लघु प्रतिविध्यति सोऽधिमुक्ति शान्ताम्।
वनिचरि[5] धिमुक्ति सेवतोऽस्य इमि गुण भोन्त्यरण्यवासि सर्वे॥

पुनराह।

15 वनषण्ड[6] सेवथ विविक्त सदा विजहित्व ग्रामनगरेषु रतिम्।
अद्वितीयखड्गसम भोथ सदा न चिरेण लप्स्यथ समाधिवरम्' इति॥

आर्यराष्ट्रपालसूत्रे[7]ऽप्याह।

1) *dukhutehi* MS.

2) Metre: *Pushpitāgrā*.

3) Tib. རྩོད་ '[question for] dispute'; cf. Pali usage.

4) Metre not identified, but differing from the preceding by one short syllable only.

5) marg. *vasato*°.

6) Metre: *Pramitākshara*.

7) Cf. 54. 16; MS. *Rāstra*°. Tib.: ཡུལ་འཁོར་སྐྱོང་གིས་ཞུས་པའི་མདོ་ = *R.* °*paripṛcchā-sūtra*.

त्यक्त्वा[1] गेहमनन्तदोषगहनं चित्तानपेक्षाः सदा।
तेऽरण्ये रतिमाप्नुवन्ति गुणिनः शान्तेन्द्रियाः सूरताः[2] ॥
न स्त्रीसंभव नैव चापि पुरुषैस्तेषां क्वचिद्विद्यते।
एकाकी विहरन्ति खड्गसदृशाः शुद्धाशया निर्मलाः ॥
5 लाभैर्नापि च तेषु हर्ष स्वमनो[3] लीयन्त्यलाभैर्न च।
अल्पेच्छा इतरेतरैरभिरता मायाकुहावर्जिताः[4] '[5] ति ॥

उग्रदत्तपरिपृच्छायामप्याह। सत्वसंसर्गो मे न कर्तव्यो न हि मयैकसत्वस्य कुशलमूलानि संजनयितव्यानीत्यादि ॥

यदि पुनः श्रुतवानिमां क्षणसंपदमासाद्य लाभादौ सक्तः चित्तं न शोधयेत्स एवैकः ' स-
10 देवके लोके वञ्चितः स्याद् ॥

उक्तं ह्यार्यरत्नकूटे। तद्यथा काश्यप कश्चिदेव पुरुषो महता उदकार्णवेनोह्यमान उदकतृष्णया कालं कुर्याद् ' एवमेव काश्यप इहैके श्रमणब्राह्मणा बहून्धर्मानुद्गृह्य पर्यवाप्य न रागतृष्णां विनोदयन्ति ' न द्वेषतृष्णां ' न मोहतृष्णां विनोदयन्ति। ते महता धर्मार्णवेनोह्यमानाः क्लेशतृष्णया कालगता ' दुर्गतिविनिपातगामिनो भवन्तीति ॥

15 तस्मादवश्यमरण्यमाश्रयेत् ॥

तादृशानि[6] च स्थानानि आश्रयेत् ' येषु च स्थानेषु नातिदूरे पिण्डपातगोचरो भवति

1) Metre: *Çārdūlavikrīḍita.*

2) MS. *çū°*; Tib. དུལ agreeing with the meaning *kṛpālu* of Sk. lexx. B² quotes Saddh.-p.; cf. Ch. p. 490.

3) In the MS. this syllable has been deleted and *ni* (?) substitued. If this is really an emendation on metrical grounds, it is unnecessary; cf. *ĭsn*- etc. at 103. 2 supra.

4) ཚུལ་འཆོས་ 'hypocrisy', like *kuhanā* supra 131. 3, 6.

5) In the Tibetan the quotation extends to six lines more (121 b 4—6).

6) From the Tib. (122 a 3) we learn that this paragraph is taken 'from the Ārya-Ratnamegha' འཕགས་པ་དཀོན་མཆོག་སྤྲིན་ལས་; cf. p. 7 n. (2).



नातिसंनिकृष्टे ' येषु पानीयानि भवन्त्यच्छानि शुचीनि निर्मलान्यल्पायासानि सुखपरिभोगानि या[92 a]नि च स्थानानि वृक्षसंपन्नानि भवन्ति पुष्पसंपन्नानि फलसंपन्नानि पत्रसंपन्नान्यपगतदुष्टश्वापदानि गुहासंपन्नानि प्राग्भारसंपन्नानि सुखपरिसर्प्यकाणि शान्तान्यद्वितीयानि तादृशानि स्थानान्याश्रयेत्। स तेषु स्थानेष्वाश्रितो यदनेन पूर्वपठितं भवति तत्त्रि-
5 भो रात्रैस्त्रिर्दिवसस्य[1] स्वाध्यायति नात्युच्चेन स्वरेण नातिनीचेन नोद्धतैरिन्द्रियैन बहिर्गतेन चित्तेन प्रसादमुपजीवन् ग्रन्थमुपधारयन्निमित्तान्युद्गृह्णन्निर्द्धमपक्रामन्। सचेदारण्यकस्य भिक्षो राजा वोपसंक्रामति राजमात्रो वाऽन्ये वा ब्राह्मणक्षत्रियनैगमजानपदाः ' तेन तेषामादरेण स्वागतक्रिया कर्तव्या। एवं चानेन वक्तव्यं ' निषीद महाराज यथा प्रज्ञप्त आसने। सचेदुपविशति द्वाभ्यामप्युपवेष्टव्यं ' सचेन्नोपविशति उभाभ्यामपि नोपवेष्ट-
10 व्यं। सचेच्चञ्चलेन्द्रियो भवति उत्कर्षयितव्यं[2]। तस्य ते महाराज लाभाः सुलब्धा यस्य ते भूप्रदेशे शीलवन्तो गुणवन्तो बहुश्रुताः श्रमणब्राह्मणाः प्रतिवसन्ति ' अनुपद्रुताश्चौरभटादिभिः ॥ सचेत् स्थिरो भवति विनीतः प्रशान्तेन्द्रियो भव्यश्च भवति धर्मदेशनायाः ततोऽस्य विचित्रा धर्मदेशना उपसंहर्तव्या। सचेद्विचित्रां न प्रियायते ' संवेगानुकूला धर्मदेशना उपसंहर्तव्या ' सचेत्संवेग[ानुकूलां][3] न प्रियायते उदारोदाराणि तथागतमाहात्म्यानि उ-
15 पदेष्टव्यानि। ब्राह्मणक्षत्रियनैगमजानपदानामप्युपसंक्रामतां यथानुरूपाः क्रिया उपसंहर्तव्या। स एवं बहुश्रुतः सन्प्रतिबलो भवति धार्मश्रवणिकानां[4] चित्तमाराधयितुं ' ते च सत्वास्तस्यान्तिके प्रीतिं च प्रसादं च प्रामोद्यं च प्रतिलभन्त इति ॥

1) *tribhir divasasya* MS.; but Tib. ཉེར (read ཉིན)་ལན་གསུམ་དུ་ (122 a 6).

2) Tib. བསྐུལ་བར་བྱའོ་ 'should exhort' (?).

3) Supplied from the Tib. which has སྐྱོ་བ་དང་མཐུན་པ་, as in the previous clause. For the first word Jäschke gives 'weariness'; but the meaning is probably rather 'in accord with the impression made on him'; cf. Ch. s. v. *saṃvego.*

4) A new form; cf. Ch. s. v. *dhamma-savanam.*

उग्रदत्तपरिपृच्छायामप्याह । पुनरपरं गृहपते प्रव्रजितेन बोधिसत्वेनारण्ये प्रतिवस-
ता एवमुपपरीक्षितव्यं। किमर्थमहमरण्ये प्रतिवसामि ' न केवलमरण्यवासेन श्रमणो भ-
वति ' बहवो ऽप्यत्रादान्ता अविनीता अयुक्ता अनभियुक्ताः प्रतिवसन्ति । तद्यथा ' मृ-
ग[92b]वानरपक्षिसंघचौरचण्डालाः प्रतिवसन्ति ' न च ते श्रमणगुणसमन्वागता भवन्ति '
5 अपि तु खलु पुनरहं यस्यार्थायारण्ये प्रतिवसामि स मया ऽर्थः परिपूरयितव्यो यदुत श्रा-
मण्यार्थः ॥ पे ॥ पुनरपरं गृहपते प्रव्रजितेन बोधिसत्वेनारण्ये विहरता एवमुपपरीक्षित-
व्यं । किमर्थमहमरण्यमागतः । तेनैवं मीमांसयितव्यं ' भयभीतोऽस्म्यहमरण्यमागतः।
कुतो भयभीतः ' संगणिकाभयभीतः ' संसर्गभयभीतो रागद्वेषमोहभयभीतो मानमदम्रक्षपरि-
दाहभयभीतो लोभेर्ष्यामात्सर्यभयभीतः रूपशब्दगन्धरसस्पर्ष्टव्यभयभीतः । सो ऽहंकार-
10 ममकारभयभीतः ' औद्धत्यविचिकित्साभयभीतः ' स्कन्धमारभयभीतः ' क्लेशमारभयभी-
तो ' मृत्युमारभयभीतो ' देवपुत्रमारभयभीतः ' अनित्ये नित्य इति विपर्यासभयभीतो ऽना-
त्मन्यात्मेति विपर्यासभयभीतो ऽशुचौ शुचिरिति विपर्यासभयभीतो ' दुःखे सुखमिति
विपर्यासभयभीतः ' चित्तमनोविज्ञानभयभीतो ' निवरणावरणपर्युत्थानभयभीतः ' सत्कायदृ-
ष्टिभयभीतः पापमित्रभयभीतो ' लाभसत्कारभयभीतो ऽकालमन्त्रभयभीतो ऽदृष्टे दृष्टमिति
15 भयभीतो ऽश्रुते श्रुतमिति भयभीतो ऽमते मतमिति भयभीतो ऽविज्ञाते विज्ञातमिति भय-
भीतो ऽश्रमणे श्रमणमदभयभीतो ऽन्योन्यविद्वेषणभयभीतः कामधातुरूपधात्वरूप्य-
[1]धातुभयभीतः सर्वभवगत्युपपत्तिभयभीतो निरयतिर्यग्योनिपितृविषयभयभीतः संक्षे-
पेण सर्वेभ्यो ऽकुशलेभ्यो मनसिकारेभ्यो भयभीत एभ्यो ह्यहमेवंरूपेभ्यो भयभैरवेभ्यो
भीतोऽरण्यावासमुपगतः ॥ पे ॥ पुनरपरं गृहपते प्रव्रजितेन बोधिसत्वेनारण्यवासस्थितेन
20 भीतेन वा त्रस्तेन वा एवं शिक्षितव्यं । यानि कानिचिद्भयान्युत्पद्यन्ते सर्वाणि तान्यात्म-
ग्राहत उत्पद्यन्ते ॥ पे ॥ सचेत्पुनरहमरण्ये प्रतिवसन्नात्मग्राहं परित्यजेयं नात्माभिनि-
वेशं नात्मपरिग्रहं नात्मनिदानं नात्मतृष्णां नात्मसंज्ञां नात्मवादोपादानं नात्म[93a]दृ-

1) See M. Vyutp. § 155 and Ch. s. v. *dhātu*.



ष्टिं नात्माधिष्ठानं नात्मपरिकल्पनां नात्मरक्षां परित्यजेयं ' निरर्थको मेऽरण्यवासः स्यात् ।
अपि तु खलु पुनर्गृहपते नास्त्यात्मसंज्ञिनो ऽरण्यवासो ' नास्ति परसंज्ञिनः ॥ पे ॥ अर-
ण्यवासो नाम गृहपते उच्यते सर्वधर्मेष्वसंभववासः सर्वधर्मेष्वसंगवासः ॥ पे ॥[1] तद्यथा गृह-
पते ऽरण्ये तृणगुल्मौषधिवनस्पतयः प्रतिवसन्तो न बिभ्यति नोत्त्रस्यन्ति न संत्रस्यन्ति न
5 संत्रासमापद्यन्ते । एवमेव गृहपते प्रव्रजितेन बोधिसत्वेनारण्ये विहरता तृणगुल्मौषधि-
वनस्पतिकाष्ठकुड्यवदात्मप्रतिभासवत्संज्ञा काये उत्पादयितव्या ' मायासमता चित्तस्यो-
त्पादयितव्या । कोऽत्र बिभेति ' कोऽस्मिन्नुत्त्रस्यति । तेन भयभीतेन वा त्रस्तेन वा एवं
योनिशः काय उपपरीक्षितव्यः। नास्त्यत्र काये आत्मा वा सत्वो वा जीवो वा पोषो[2] वा पु-
द्गलो वा मनुजो वा मानवो वा ' अभूतपरिकल्प एष यदुत भयं नाम । स मया ऽभूतपरि-
10 कल्पो न परिकल्पयितव्यः। तेन यथारण्ये तृणगुल्मौषधिवनस्पतयः प्रतिवसन्ति अममा
अपरिग्रहाः ' एवमेवाममेनापरिग्रहेणारण्यमेव सर्वधर्मा इति ज्ञात्वा उपसम्पद्य विहर्त-
व्यं । तत्कस्य हेतोः । रणच्छेदो ऽरण्यवासो ऽममो ऽपरिग्रहः ॥ पे ॥ पुनरपरं गृहपते प्र-
व्रजितेन बोधिसत्वेन बुद्धानुज्ञातोऽरण्यवास इति ज्ञात्वाऽरण्ये वस्तव्यं । अत्र हि शुक्लध-
र्मपरिपूरिर्भवति । उपस्तब्धकुशलमूलः पश्चाद्ग्रामनगरनिगमराष्ट्रराजधानीष्ववतीर्य[3] धर्मं
15 देशयिष्यामि ॥ पे ॥ सचेत्पुनर्गृहपते प्रव्रजितो बोधिसत्व उद्देशस्वाध्यायार्थं गणमवतर-
ति । तेन तत्र सगौरवेण भवितव्यं सप्रतीसेनाचार्योपाध्यायेषु स्थविरमध्यनवकेषु भिक्षुषु
प्रदक्षिणभवि[4]तव्यमनलसेन स्वयंकारिणा ऽपरोपतापिना न च तेनोपस्थानगुरुकेण भ-
वितव्यं ' एवं चानेनोपपरीक्षितव्यं । तथागतोऽप्यर्हन्सम्यक्संबुद्धः सदेवस्य लोकस्य स-

1) Probably there is another lacuna here, not however greatly affecting the sense. (Tib. 124 a. 1—6).

2) A prakritic form not hitherto found in literature; see however M. Vyutp. § 207 — a section founded in part on this passage or on another closely resembling it.

3) Apparently a stock-phrase in Buddhist books: see Saddh.-p. cited by B. & R. s. v. *nigama*; also Lal.-v. 571. 19.

4) *pra* added in margin (cf. *pradakshiṇīya* Vajracch. 34. 11); but the addition is not required, cf. *dakshiṇīya* infra.

मारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः पूजितो दक्षिणीयः सर्वसत्त्वानां। सोऽपि तावन्न कस्यचित्सकाशादुपस्थानं[1] स्वीकरोति ' किं [93b] पुनरस्माभिरशिक्षितैः शिक्षितुकामैः। अपि तु वयमेव सर्वसत्त्वानामुपस्थायका भविष्यामः। वयमेव परेषामुपस्थानपरिचर्यां करिष्यामो न च पुनः कस्यचित्सकाशादुपस्थानपरिचर्यां स्वीकरिष्यामः। तत्कस्य हेतोः। उपस्थानगुरुकस्य हि गृहपते भिक्षोर्गुणधर्मानुग्रहो नश्यति। येषां च संग्रहं करोति तेषामेवं भवति। उपस्थानहेतोरेषो ऽस्माकं संग्रहं करोति॥

पुनरत्रैवाह। सचेत्पुनर्गृहपते आरण्यको बोधिसत्त्वो धर्मश्रवणार्थिक आचार्योपाध्यायदर्शनार्थिको वा ग्लानपरिपृच्छको वा ग्रामान्तिकं शयनासनमागच्छेत्तेन सायमागमनाय प्रक्रमणाय च चित्तमुत्पादयितव्यं। सचेत्पुनरस्य परप्रतिबद्ध उद्देशः स्वाध्यायो वा तेन विहारे प्रतिवसता ऽरण्यप्रवणचित्तेन भवितव्यं। एष एव तस्यारण्यवासो यत्सर्ववस्तुष्वरण्यसंज्ञा धर्मपर्येष्ट्या चातृप्ततेति॥

आर्यरत्नराशिसूत्रे ऽप्युक्तं। यदि पुनरस्य तत्रारण्यायतने विहरतो ऽप्राप्तफलपृथग्जनस्य व्याडमृगा आगच्छेयुः ' तेन तत्र न भयं न त्रास उत्पादयितव्यः ' एवं च चित्तमुत्पादयितव्यं। पूर्वमेवाहमुत्सृष्टकायजीवितो ऽरण्यवासमुपगतो ' न मयात्र भेतव्यं। नोत्त्रसितव्यं[2]। अपि तु मैत्रीमुत्पादयि[त्वा][3] दोषं विवर्जयिष्यामि भयमपनयिष्यामि। यद्येवमपि कृत्वा ते व्याडमृगा मां जीविताद्व्यपरोप्य भुञ्जीरन् ' तेन मयैवं चित्तमुत्पादयितव्यं। लाभा मे सुलब्धा यस्य मे ऽसारात्कायात्सारमादत्तं भविष्यति। न पुनरिमे व्याडमृगाः शक्या मयामिषेण तोषयितुं मम मांसं भक्षयित्वा सुखस्पर्शं[4] विहरिष्यन्ति॥ पे॥ यदि पुनस्तत्रारण्यायतने विहरतो ऽमनुष्या उपसंक्रमिष्यन्ति सुवर्णा वा दुर्वर्णा वा ' तेन न तत्रानुनेतव्यं न प्रतिहन्तव्यं। यदि पूर्वबुद्धदर्शिन्यो देवता आरण्यकं भिक्षुमुपसंक्रम्य

1) °*cicchakāçād* MS.

2) *notra*° MS; cf. Pali forms, J.P.T.S. 1887, p. 116.

3) Last syllable obliterated; for the form see 113.13, 130.18 above, and compare Whitney § 990 ad fin.

4) Cf. Senart, Mhv. I. 623 and Lal.-v. 357.12.



प्रश्नं परिपृच्छेयुः ' तत्र तेनारण्यकेन भिक्षुणा यथाशक्ति यथाबलं यथाधर्माधिगमाय तासां देवतानां [94a] धर्मो देशयितव्यः। यदि पुनस्तावद्गम्भीरान् प्रश्नान् परिपृच्छेयुर्यान् स आरण्यको भिक्षुर्न शक्नुयाद्विसर्जयितुं ' तेन निर्मानेन भूत्वा वाग्भाषितव्या ऽशिक्षितो न परिभवितव्यः। युञ्जिष्यामि[1] घटिष्ये बुद्धशासने ' भविष्यति स कालः स समयो यदा ऽधिगतान्धर्मान् श्रुत्वा सर्वकथां विसर्जयिष्यामि। अपि तु प्रतिभातु ते। वयं धार्मश्रवणिका इति॥ पे॥ तेन तत्रारण्यायतने प्रतिवसता तृणगुल्मौषधिवनस्पतीनां निमित्तं ग्रहीतव्यं ' कथमेते भवन्ति। यथैषां भावनामस्वामिकानाममनामपरिग्रहाणामेवं निश्चेष्टानां[2] निर्व्यापाराणां भवत्युत्पादो भङ्गश्च। न चैषां कश्चिदुत्पादयिता ' न निरोधयिता। एवमेवायं कायस्तृणकाष्ठकुड्यप्रतिभासोपमो ऽस्वामिको ऽममो ऽपरिग्रहो निश्चेष्टो निर्व्यापारो हेतुप्रत्यययुक्त्या उत्पद्यते। हेतुप्रत्ययवैकल्यान्निरुध्यते। न पुनरत्र कश्चिद्धर्मः परमार्थत उत्पद्यते वा निरुध्यते वेति॥

पुनश्चोक्तं। तेन तत्रारण्यायतने विहरता एवं चित्तमुत्पादयितव्यं। यद्यप्यहमरण्यमागत एको ऽद्वितीयो ' न मे कश्चित्सहायो यो मां सुकृतं दुष्कृतं वा चोदयेत्। अपि तु खलु पुनः सन्तीमे देवनागयक्षा बुद्धाश्च भगवन्तो ये मम चित्ताशयं जानन्ति। ते मम साक्षिणः। सो ऽहमिहारण्यायतने प्रतिवसन्नकुशलचित्तस्य वशं गच्छामि। यदि पुनरहमियद्दूरमागत एको ऽद्वितीयो ऽसंस्तब्धो ऽममो ऽपरिग्रहः कामवितर्कं वा वितर्कयेयं ' व्यापादं विहिंसावितर्कं वा वितर्कयेयमन्यं वा ऽकुशलवितर्कं वितर्कयेयं ' निर्विशेषो भवेयं संसर्गसंगणिकाभिरतैः सत्त्वैः ' ते च मे देवनागयक्षा विसंवादिताः[3] बुद्धाश्च भगवन्तो ऽनभिराद्धा[4] भविष्यन्तीति॥ ॥

इति शिक्षासमुच्चये अरण्यसंवर्णनो नामैकादशः परिच्छेदः॥

1) Cf. Dh.-pada 281.5. Both form and usage savour rather of Pali than of Sanskrit origin.

2) This word is added in the margin with the previous three epithets; compare Bodhicary.-ṭikā p. 310 ad fin.

3) In the margin apparently referring to this place the following words occur: *buddhāç ca bhagavanto 'nāttamanasaḥ syuḥ | tat tathāham karishyāmi yathā me devatā nāvadhāyishyanti.* According to the Tib., this sentence or one like it should form the last words of the chapter.

4) The negative syllable has been wrongly deleted in the MS. མི་མཉེས་པ་ Tib.

# XII.

## चित्तपरिकर्म द्वादशः परिच्छेदः ॥

तदेवमरण्ये वसन् समाधानाय युज्यते ॥

उक्तं हि भगवत्यां। स तेषामेव सत्वानामर्थाय ध्यानपारमितायां चरन्नविक्षिप्तचित्तो भवति। तत्कस्य हेतोः। [94 b] तथा ह्यस्यैवं भवति। लौकिकी ध्यानोपपत्तिरपि तावद्विक्षिप्तचित्तस्य दुर्लभा ' कः पुनर्वादो ऽनुत्तरा सम्यकसंबोधिः। तस्मान्मया ऽविक्षिप्तचित्तेन भवितव्यम् ' यावन्नानुत्तरां सम्यकसंबोधिमभिसंबुद्धेयमिति ॥

पुनरस्यामुक्तं। पुनरपरं सुभूते बोधिसत्वो महासत्वः प्रथमचित्तोत्पादमुपादाय ध्यानपारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्ध्यानं समापद्यते। स चक्षुषा रूपाणि दृष्ट्वा न निमित्तग्राही भवति नानुव्यञ्जनग्राही। यतो ऽधिकरणमस्य चक्षुरिन्द्रियेणासंवरसंवृतस्य विहरतो ऽभिध्यादौर्मनस्ये अन्ये वा पापका अकुशला धर्माश्चित्तमनुप्राप्नुयुः। तेषां संवराय प्रतिपद्यते। रक्षति चक्षुरिन्द्रियम्। एवं श्रोत्रेण शब्दान् श्रुत्वा ' घ्राणेन गन्धान् घ्रात्वा ' जिह्वया रसानास्वाद्य ' कायेन स्प्रष्टव्यानि स्पृष्ट्वा ' मनसा धर्मान्विज्ञाय न निमित्तग्राही भवति ' नानुव्यञ्जनग्राही। यतो ऽधिकरणमस्य मन इन्द्रियेणासंवरसंवृतस्य पापकाश्चित्तमनुप्राप्नुयुः। तेषां संवराय प्रतिपद्यते ' रक्षति मन इन्द्रियं। स गच्छन्नपि तिष्ठन्नपि निषण्णोऽपि शयानोऽपि भाषमाणोऽपि समाहितावस्थामसमाहितावस्थां [न][1] विजहाति। स भवत्यहस्तलोलः ' अपादलोलो ऽमुखलोलो ऽप्रकीर्णवाक् ' अविक्षिप्तेन्द्रियो ऽनुद्धतो ऽनुन्नतो ऽचपलो ऽनलसो ऽसंभ्रान्तकायो ऽसंभ्रान्तचित्तः ' शान्तकायः शान्तवाक् शान्तचित्तः ' रहस्यरहसि वा कल्पितेर्यापथः संतुष्टः ॥ पे ॥ सुभरः सुपोषः। सूपास्यः कल्याणाचारगोचरः। संगणिकया ऽपि विवेकगोचरः। लाभे ऽलाभे च समो निर्विकारः।

---

1) Tib. མི་འདོར་རོ (126. b. 5.)



अनुन्नतोऽनवनतः। एवं सुखे दुःखे ' स्तुतौ निन्दायां ' यशस्ययशसि ' जीविते मरणे च समो निर्विकारो ऽनुन्नतो ऽनवनतः। एवं शत्रौ मित्रे च ' मनापवर्तिनि ***[1] ' आर्येष्वनार्येषु ' शब्देषु संकीर्णेष्वसंकीर्णेषु ' प्रियाप्रियेषु च रूपेषु समो निर्विकारः ' अनुन्नतोऽनवनतः ' अनुरोधविरोधापगतः। तत्कस्य हेतोः। तथा [95 a] हि स स्वलक्षणशून्यानसंभूताननिष्पन्नाननभिनिर्वृत्तान् सर्वधर्मान्पश्यतीति विस्तरः ॥

तत्र लीने मनसि मुदिता भावनयोत्तेजनं कुर्यात्। उद्धते[2] त्वनित्यतामनसिकारैः प्रशमः ॥

उभयप्रतिपक्षार्थं चार्यराष्ट्रपालोक्तां गाथां स्मरेत्।

बहु कल्पकोटीभि कदाचि बुद्धो उत्पद्यते लोकहितो महर्षि।
लब्धोऽधुना स प्रवरः क्षणोऽद्य त्यजति प्रमादं यदि मोक्तुकाम ' इति ॥

तथा ' मयोपमं वितथमेतत्स्वप्नोपमं च संस्कृतमवेत्य न चिराद्भविष्यति वियोगः सर्वप्रियैः। न नित्यमिह कश्चित् ' उद्युज्य यथा घटत नित्यं पारमितासु भूमिषु बलेषु। मा जातु स्रंसय वीर्यं यावन्न बुध्यथा प्रवरबोधिम्। इति ॥

आर्यललितविस्तरेऽप्युक्तं।[3]

ज्वलितं त्रिभुवं जरव्याधिदुःखैर्मरणाग्निप्रदीप्तमनाथमिदम्।[4]
[5]भवनिःशरणे सद मूढ जगद्भ्रमति भ्रमरो यथा कुम्भगतः ॥

---

1) The second and contrary word (*amana-āpa*°?) has been lost. Tib. ཡིད་དུ་འོང་བ་དང་ཡིད་དུ་མི་འོང་བ་དང་ (127. a. 2.)

2) Tib. སྐྱོད་པར་གྱུར་ན Cf. p. 120, n. 2.

3) The subjoined extract has been collated with the MS. Hodgson № 7 (H.) of the R. As. Soc. (London), f. 130. a, with which Camb. Add. 2195 (C.) f. 85. b practically agrees; and with the printed edition of Rājendralāla Mitra (R.) p. 204. 8. Obvious corruptions are not recorded, especially where Rāj. Mitra has printed in defiance of the metre — here the simple anapaestic *Toṭaka*.

4) Our MS. (A.) quite unmetrically: *jvālitam tribhuvanam . . dushkhair.*

5) *na ca niḥs*° R; but *bhava*° is supported by the Tib. Lal.-v. (Foucaux, i. 155, ii. 169).

अध्रुवं त्रिभवं शरदभ्रनिभं नटरङ्गसमा जगि जन्मच्युतिः।
गिरिनद्यसमं लघुशीघ्रजवं व्रजतायु जगे यथ विद्यु नभे ॥
भुवि देवपुरे त्रिअपायपथे[1] भवतृष्णअविद्यवशा जनता।
परिवर्त्तिषु पञ्चगतिष्वबुधा यथ कुम्भकरस्य हि चक्र भ्रमी ॥
प्रियरूपवरैः सद स्निग्धरुतैः शुभगन्धरसैर्वरस्पर्शसुखैः।
परिषिक्तमिदं कलिपाश जगत् मृगलुब्धकपाशि यथैव कपि[2] ॥
सभयाः सरणाः सद वैरकराः बहुशोकउपद्रव कामगुणाः।
असिधारसमा विषपत्रनिभाः जहितार्यजनैर्यथ मीढघटः ॥
स्मृतिमोषकरास्तमसीकरणा[3] भयहेतुकरा दुखमूल सदा।
भवतृष्णलताय विवृद्धिकराः सभयाः सरणा[4] सद कामगुणाः ॥
यथ अग्निखदाः[5] ज्वलिताः सभयाः तथ काम इमे विदितार्यजनैः।
महपङ्कसमा असिशूलसमा मधुदिग्ध इव क्षुरधारसमा ॥
यथ सर्पशिरो यथ मीढघटः तथ काम इमे विदिता विदुषाम्।
तथ शूलसमा द्विजपेशिसमा यथ श्वानकरं किशवैर तथो-[6]
दकचन्द्रनिभा इमि कामगुणाः प्रतिबिम्ब[7] इवा गिरिघोष यथा।
प्रतिभाससमा नटरङ्गनिभा तथ स्वप्नसमा विदितार्यजनैः ॥

---

1) Cf. 54, note 4.

2) *yathaiva hi baddha kapi* H., with an extra anapaest; °*kapmi* A. R.'s reading is neither metre nor sense.

3) Our text (A.) alone agrees with the Tib.; all the Skt. texts of the Lal.-v. (cf. Foucaux ii. 170, n. 1.) being corrupt here.

4) *çaraṇāḥ* (!) R.; above he reads the same form *maraṇā.*

5) 'Höllenofen', Böhtl. WKF. (quoting Kāraṇḍa-vy.); but Tib. དགས་སྡུག་ 'fire-pits' (Jäschke; cf. Foucaux), as if from √*khan.* Compare Prākṛt *khaḍḍā*, *khaya* from the same root. The *agikha(ṃ)dha* of Açoka's fourth edict is probably distinct.

6) *tathā* | *daka* A; *udakac*° R. *udac*° H.

7) So H and A a sec. m., originally °*vīkshya.*



क्षणिकाव[95 b]सिका इमि कामगुणाः तथ मायमरीचिसमा अलिको-[1]
दकबुद्बुदफेनसमा वितथाः परिकल्पसमुत्थित बुद्ध बुधैः ॥
प्रथमे वयसे वररूपधरः प्रिय इष्टमतो इय बालचरो।
जरव्याधिदुखैर्हततेजवपुं विजहन्ति मृगा इव शुष्कनदीम् ॥
धनधान्यवरो बहुद्रव्यबलो प्रिय इष्टमतो इय बालचरो।
परिहीणधनं पुन कृच्छ्रगतं विजहन्ति नरा इव शून्यटवीम् ॥
यथ पुष्पद्रुमो सफलो व द्रुमो नरुदानरतः तथ प्रीतिकरः।
धनहीनु जरार्दितु याचनको भवते तद अप्रियगृध्रसमः ॥
प्रभुद्रव्यबलो वररूपधरः प्रियसङ्गमनेन्द्रियप्रीतिकरः।
जराव्याधिदुखार्दितु क्षीणधनो भवते तद अप्रियमृत्युसमः ॥
जरया जरितः समतीतवयो द्रुम विद्युहतो व यथा भवति।
जरजीर्ण अगार यथा सभयो जरनिःशरणं लघु ब्रूहि मुने ॥
जर शोषयते नरनारिगणं यथ मालुलता[2] घन शालवनम्[3]।
जर वीर्यपराक्रमवेगहरो जर पङ्कनिमग्न यथा पुरुषो ॥
जर रूप सुरूपविरूपकरी जर तेजहरी बलस्थामहरी।
सद सौख्यहरी परिभावकरी जर मृत्युकरी जर ओजहरी ॥
बहुरोगशतैर्घनव्याधिदुखैः उपसृष्टु जगज्ज्वलनेव[4] मृगाः।
जर व्याधिगतं प्रसमीक्ष्य[5] जगत् दुखनिःशरणं लघु देशय ही ॥

---

1) *alika* as in Pali and elsewhere (Mhv. II. 71. 2) in *gāthās.*

2) Cf. Dhammapada, 162.

3) *balam*, H.

4) Our Tib. version has མི་ཡིར་རི་དགས་ showing the same corruption (*mi* for *me*) noted by Foucaux in his Tibetan text of the Lal.-v. (ii. 171, note 3).

5) A. is corrupt here reading *vyādhi-sukhā çasamīkshya*; °*dhiçatam* H. The text before the Tib. translator apparently read °*jitam.*

शिशिरे हि यथा हिमधातु महं तृणगुल्मवनौषधि ओजहरो।
तथ ओजहरो अयु[1] व्याधि जगे परिहायति इन्द्रियरूपबलम्॥
धनधान्यमहार्थक्षयान्तकरः परिभावकरः[2] सद व्याधि जगे[3]।
प्रतिघातकरः प्रियद्वेषकरः परिदाहकरो यथ सूर्यु नभे॥
5 मरणं च्यवनं च्युति कालक्रिया प्रियद्रव्यजनेन वियोगु सदा।
अपुनागमनं च असंगमनं द्रुमपत्रफला नदिस्रोतु यथा॥
मरणं वशितानवशीकुरुते[4] मरणं हरते नदि दारु यथा।
असहायनरो व्रजतेऽद्वितियः[5] स्वककर्मफलानुगतो विवशः॥
मरणं ग्रसते बहु प्राणिशतान् मकरो व जलाकरि[6] भूतगणान्।
10 गरुडो उरगं मृगराज गज ज्वलनो व तृणौषधिभूतगणम्। इति॥

राजाववादकसूत्रे[7]ऽप्याह। तद्यथा महाराज चतसृभ्यो दिग्भ्यश्चत्वारः पर्वता आगच्छेयुर्दृढाः। [96a] सारवन्तोऽखण्डा अच्छिद्रा असुषिराः सुसंवृता एकघना नभ[:] स्पृशन्तः पृथिवीं च उल्लिखन्तः सर्वतृणकाष्ठशाखापर्णपलाशादि सर्वसत्त्वप्राणिभूतानि निर्मथ्नन्तस्तेभ्यो न सुकरं जवेन वा पलायितुं बलेन वा द्रव्यमन्त्रौषधिभिर्वा निवर्तयितुम्। एवमेव 15 महाराज चत्वारीमानि महाभयान्यागच्छन्ति येषां न सुकरं जवेन वा पलायितुं बलेन

1) *ayu* for *ayam*. Tib. འདི; *bahu . . jarā* R., *ahu . . jaro* H.

2) So also Tib. *paritāpa* R. C.

3) *jarā* R.

4) °*tāmav*' A. C. °*ta na v*° R.

5) °*tīyaḥ* MSS. and text. Cf. Mhv. II. 134. 7 where several MSS. give the unmetrical Sanskrit form.

6) °*āhari* H. R.

7) A dialogue (cf. 9. 12) between Buddha and Prasenajit, king of Koçala; Nanjio 988, KF. 263. Cf. M. Vyutp. 65. 105; Minaev quotes part of this extract (*Recherches*, p. 88) in illustration of the phrase *anagātabhayāni* of the Bhabra edict of Açoka. A portion of the present extract is also cited in the Bodhicary.-ṭikā pp. 385 sqq. (ed. Poussin), cited below as 'B'.



द्रव्यमन्त्रौषधैर्वा निवर्तनं कर्तुम्। कतमानि चत्वारि। जरा[1] व्याधिर्मरणं विपत्तिश्च॥ जरा महाराज आगच्छति यौवनं प्रमथमाना। व्याधिर्महाराज आगच्छत्यारोग्यं प्रमथमानः। मरणमागच्छति जीवितं प्रमथमानं। विपत्तिर्महाराजागच्छति सर्वाः संपत्तीः प्रमथमाना। तत्कस्य हेतोः। तद्यथा महाराज सिंहो मृगराजो रूपसंपन्नो जवसंपन्नः सुजातनखदंष्ट्राकरालो मृगगणमनुप्रविश्य मृगं गृहीत्वा यथाकामकरणीयं करोति। स च मृगोऽतिबलं 5 व्याडमुखमासाद्य विवशो भवति। एवमेव महाराज विद्धस्य मृत्युशल्येनापगतमदस्यापरायणस्य मर्मसु छिद्यमानेषु मुच्यमानेषु सन्धिषु मांसशोणिते परिशुष्यमाणे परितप्ततृषितविह्वलवदनस्य करचरणविक्षेपाभियुक्तस्याकर्मण्यस्यासमर्थस्य लालासिङ्घाणकपूयमूत्रपुरीषोपलिप्तस्य ईषज्जीविताविशेषस्य कर्मभवात्पुनर्भवमालम्बानस्य यमपुरुषभयभीतस्य कालरात्रिवशगतस्य चरमाश्वासप्रश्वासेषूपरुध्यमानेषु एकाकिनोऽद्वितीयस्यासहायस्येमं 10 लोकं जहतः परलोकमाक्रामतो महापथं व्रजतो महाकान्तारं प्रविशतो महागहनं समवगाहमानस्य महान्धकारं प्रतिपद्यमानस्य महार्णवेनोह्यमानस्य[2] कर्मवायुना[3]ह्रियमाणस्यानिमित्तीकृतां दिशं गच्छतो नान्यत्त्राणं नान्यच्छरणं नान्यत्परायणमृते धर्मात्। धर्मो हि महाराज तस्मिन्समये त्राणं लयनं शरणं परायणं भवति। तद्यथा शीतार्तस्याग्निप्रतापः। अग्निमपगतस्यानिर्वापणं। उष्णार्तस्य शैत्यं। अध्वानं प्रतिपन्नस्य शी[96b]तलं 15 छायोपवनं। पिपासितस्य शीतलजलं। बुभुक्षितस्य वा[4] प्रणीतमन्नं। व्याधितस्य वैद्यौषधिपरिचारकाः। भयभीतस्य बलवन्तः सहायाः। साधवः प्रतिशरणा भवन्ति। एवमेव महाराज विद्धस्य मृत्युशल्येनापगतमदस्यात्राणस्याशरणस्यापरायणस्य नान्यत्त्राणं नान्यत्परायणमन्यत्र धर्मात्। तस्मात्तर्हि ते महाराजानित्यतानुदर्शिना भवितव्यं क्षयव्ययानुदर्शिना भवितव्यं मरणभयभीतेन। धर्मेणैव ते महाराज राज्यं कारयितव्यं नाधर्मेण। 20

1) Cf. Aṅguttaran. II. 121 (§ 119).

2) °*ohya*° B.

3) Cf. supra 70. 15. °*na niya*° B.

4) *cā* MS.

तत्कस्य हेतोः। अस्यापि ते महाराजात्मभावस्यैवं सुचिरमपि परिरक्षितस्य सुचिरमपि
शुचिना प्रणीतेन खादनीयभोजनीयास्वादनीयेन संतर्पितस्य संप्रचारितस्य[1] ' क्षुत्पिपा-
सापरिगतस्य कालक्रिया भविष्यति। एवं काशिककौशेयदुकूलपत्त्रोर्णाक्षौमादिभिर्वस्त्रवि-
शेषैराच्छादितस्य चरमशयनावस्थितस्य त्रिविधस्वेदाम्बुक्लिन्नमलिनवसनावृतस्य काल-
5 क्रिया भविष्यति। एवमपि ते महाराज स्नानानुलेपनवासधूपपुष्पसुरभिगन्धस्यात्मभाव-
स्य न चिरेण दुर्गन्धता भविष्यति। एवं स्त्र्यागारमध्यगतस्यापि ते स्त्रीगणपरिवृतस्य
नानावाद्यगीततूर्यनाद्यैरुपगीयमानस्य सुमनसः क्रीडतो रममाणस्य परिचारयतो मरणभ-
यभीतस्यातीव दुःखदौर्मनस्याभ्यां कालक्रिया भविष्यति। एवमपि ते महाराज गृहेषूप-
लेपनोपलिप्तेषु सुस्थापितार्गलेषु सुपिहितवातायनेषु बहुगन्धधूपपुष्पतैलवर्तिप्रज्वालि-
10 तेष्वासक्तपट्टदामकलापेषु मुक्तकुसुमावकीर्णेषु गन्धघटिकानिर्धूपितेषु अन्यस्तपादपीठप-
टिकास्तरणगोणिकास्तरणकाचलिन्दिक[2]प्रावरणसान्तरोत्तरपटिकोभयकृतोपधानेषु पर्य-
ङ्केषु शयित्वा ' पुनश्च शृगालकाकगृध्रमृतकडेव[3]रमांसास्थिकेशरुधिरवशाकुले परमबीभ-
त्से श्मशाने गतचेष्टस्यात्मभावः पृथिव्यामवशः शेष्यते। एवमपि ते महाराज गजस्कन्धा-
श्वपृष्ठरथाभिरूढस्य शङ्खपटहेष्वाहन्यमानेषु छत्त्रेण धार्यमाणेन बालव्यजनेन वीज[य]-
15 [97 a]मानस्यानेकहस्त्यश्वरथपदातिभिरनुयातस्याञ्जलिशतसहस्रैर्नमस्क्रियमाणस्य ' नि-
र्गमनमनुभूय न चिरान्निश्चेष्टस्य मृतशयनाभिरूढस्य चतुर्भिः पुरुषैरुत्क्षिप्तस्य दक्षिणेन न-
गरद्वारेण निर्णीतस्य मातापितृभ्रातृभगिनीभार्यापुत्रदुहितृवयस्यदासीदासकर्मकरपौरु-
षेयैः शोकगतहृदयैर्विक्षिप्तकेशैरुत्क्षिप्तभुजैः सोरस्ताडं परमकरुणं ' हा पुत्र हा नाथ
हा तात हा स्वामिन्नित्याक्रन्दमानैः पौरजानपदैः सपरिभावदृश्यमानस्य श्मशानं नीतस्य
20 पुनः काकगृध्रश्वशृगालादिभिर्भक्षितस्य तान्यस्थीन्यग्निना वा दग्धानि पृथिव्यां वा निखा-

---

1) Cf. Senart, Mhv. I. 303.4 and note.

2) Name of a kind of down. Cf. Lal.-v. cited by B. & R. s. v. *kākaciñcika*.

3) = *cadaver*. Divy. 39.11.



नितानि अद्भिर्वा क्लिन्नानि वातातपवर्षैर्वा चूर्णीकृतानि दिग्विदिक्षु प्रक्षिप्तानि तत्रैव
पूतभवमायास्यन्ति। एवमनित्याः सर्वसंस्कारा एवमध्रुवा इति विस्तरः॥

तत्र क्लेशः प्राधान्येन रागद्वेषमोहा यस्यैषामेकतरस्य तावत्प्रतिपक्षमादौ भावयेत्त-
न्निदानं च वर्जयेत्॥

तत्रार्यरत्नमेघे तावदाह। स रागस्य प्रतिपक्षं भजते। रागोत्पत्तिप्रत्ययांश्च वर्जय- 5
ति। कतमश्च स रागस्य प्रतिपक्षः। कतमे च ते रागोत्पत्तिप्रत्ययाः। अशुभाभावना रागस्य
प्रतिपक्षः ' जनपदकल्याणी रागोत्पत्तिप्रत्ययः। कतमा च सा ऽशुभाभावना। यदुत [1]सन्त्य-
स्मिन्काये केशा रोमाणि नखा दन्ता रजो मलं त्वक् मांसास्थि स्नायुः शिरा वृक्का[2] हृदयं
प्लीहकः क्लोमकः ' अन्त्राण्यन्त्रगुणा आमाशयः पक्वाशयः। औदर्यकं[3] [4]यकृत्पुरीषमश्रु स्वेदः
खेटः सिङ्घाणकं [5]वसा लसीका मज्जा मेदः पित्तं श्लेष्मा पूयं शोणितं मस्तकं मस्तकलुङ्गं 10
प्रस्रावः ' एषु च वस्तुषु बोधिसत्त्व उपपरीक्षणजातीयो[6] भवति[1]। तस्यैवमुपपरीक्षमाण-
स्यैवं भवति। योऽपि तावत्स्याद्बालो मूढः अभव्यो[7] ऽकुशलः सोऽपि तावदेतानि वस्तूनि

---

1) . . 1) This passage is quoted in the Bodhicaryāvatāra-ṭīkā (p. 295) as if from the main work (*uktaṃ Çikshāsamuccaye*). It is, however, a stock-list; cf. M. Vyutp. § 189 and Buddh. Triglotte f. 32.

2) Compare the list of 32 *ākāras* in Khuddaka Pāṭha § 3 (J.R.A.S. 1869, p. 311, 326); *pṛkkā* MS. (cf. 114. n. 1 supra); Tib. མཁལ་མ་. *Bukkā* Bodhic.-ṭīkā — a reading due apparently to the corruption of Bengali MSS. In the corresponding Pali text *vakkaṃ* immediately precedes *hadayam*.

3) *audarīyakam* (?), M. Vyutp.; *audārī* Trigl. The meaning is doubtless 'bladder' («Wasserbauch»); cf. B. & R. s. v. *udara*. Our Tib. version (132 a 3) however has ཕོད་ཀ་ (= *linga*).

4) *sakrit* MS.

5) *vaçā* MS., a form elsewhere found; $B^2$ s. v. vaçā (3).

6) So Bodhic.-ṭīkā; °*kshamāṇajā*° MS.

7) Tib. མི་བསལ་པ་ 'an incurable fool (?)'. Compare the French usage of 'impossible' of persons.

ज्ञात्वा रागचित्तं नोत्पादयेत्। प्रागेव तत्प्रज्ञजातीयः। एवं हि बोधिसत्त्वो ऽशुभाभावनाब-
हुलो भवतीति ॥

भगवत्यामप्युक्तं (1)। पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापार[97 b]मितायां चर-
न्निममेवं कायं यथाभूतं प्रजानाति। तद्यथापि नाम सुभूते गोघातको वा गोघातकान्तेवासी
5 वा गां हत्वा तीक्ष्णेन शस्त्रेण चत्वारि फलकानि कृत्वा प्रत्यवेक्षते स्थितो ऽथवा निषण्णः।
एवमेव सुभूते बोधिसत्त्वः प्रज्ञापारमितायां चरन्निममेव कायं धातुशो यथाभूतं प्रजानाति।
अस्त्यस्मिन्काये पृथिवीधातुरब्धातुरपि तेजोधातुरपि वायुधातुरपीति। पे ॥

पुनरप्याह। (2) तद्यथापि नाम सुभूते कर्षकस्य मूतोडी (3) पूर्णा नानाधान्यानां शालीनां
व्रीहीणां तिलानां तण्डुलानां मुद्गानां माषाणां यवानां गोधूमानां मसूराणां सर्षपाणां।
10 तानेतान् चक्षुष्मान्पुरुषः प्रत्यवेक्षमाणः। एवंजातीयादयं शालिरयं व्रीहिरमी तिला अ-
मी तण्डुला अमी मुद्गा अमी माषा यवा अमी गोधूमा अमी मसूरा अमी सर्षपा इति ॥ ए-
वमेव बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्निममेव कायमूर्ध्वं पादतलादधः केशम-
स्तकनखरोमत्वक् रोमपर्यन्तं पूर्णं नानाप्रकारस्याशुचेर्यथाभूतं प्रत्यवेक्षते। सन्त्यस्मिन् काये
केशा रोमाणि नखा यावन्मस्तकं मस्तकलुङ्गमक्षिगूथं कर्णगूथमिति ॥ पे ॥ (4) पुनरपरं सु-
15 भूते बोधिसत्त्वः श्मशानगतः पश्यति नानारूपाणि मृतशरीराणि श्मशाने ऽपविद्धानि शव-
शयने उज्झितानि एकाहमृतानि वा द्व्यहमृतानि वा त्र्यहमृतानि वा चतुरहमृतानि वा प-

1) See my note in J.R.A.S. 1898, p. 870, where it is shown that the present extract is closely related to a passage of the (Mahā-) Satipaṭṭhāna-sutta contained in two *nikāyas*. See Majjh.-n. I. p. 57 = Dīgha-n., sutta 22 (ed. Colombo, 1883, with Sinh. *sanna*, and translated in Warren's Buddhism, p. 360).

2) Cf. Mahāsatip. s. p. 25 med. (= Warren 359 fin).

3) Tib. ཛང 'store-room'. Warren (l. c.) translates the corresponding Pali *mūtolī* 'vessel'. The meaning is probably a (two-mouthed) bag (*malla*) as the Sinhalese *sanna* on the passage explains it. Possibly the Vedic *mūta* 'basket' is cognate. The word occurs again at 104. b where the Tib. rendering is the same.

4) See Mahāsatip. sutta, p. 30.6 (= Warren Buddhism, 360).



ञ्चाहमृतानि वा व्याध्मातकानि (1) विनीलकानि विपूयकानि विपद्मकानि (1)। स इममेव कायं
तत्रोपसंहरति। अयमपि काय एवंधर्मा एवंस्वभावः। एतां धर्मतामव्यतिवृत्त इति ॥ एवं
हि सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्धा काये कायानुदर्शी विहर-
ति ॥ पे ॥ पुनरपरं यदा मृतशरीराणि श्मशाने उत्सृष्टानि पश्यति। षड्रात्रमृतानि का-
कैर्वा खाद्यमानानि कुररैर्वा गृध्रैर्वा श्वभिर्वा शृगालैर्वा ततोऽन्यैर्वा नानाविधैः प्राणकजातैः 5
खाद्यमानानि [98 a] स इममेव कायं तत्रोपसंहरति। अयमपि काय एवंधर्मा एवंस्वभावः।
एतां धर्मतां न व्यतिवृत्त इति ॥ पुनरपरं यदा मृतशरीराणि पश्यति श्मशाने उत्सृष्टानि
विखादितान्यशुचीनि दुर्गन्धानि। स इममेव कायं तत्रोपसंहरतीति पूर्ववत् ॥ पे ॥ पुनर-
परं यदा पश्यति मृतशरीराणि शिवपथिकायाम (2) स्थिसंकलिकां (3) मांसशोणितम्रक्षितां स्नायु-
विनिबद्धां। स तत्रेममेव कायमिति पूर्ववत् ॥ पुनरपरं यदा मृतशरीराणि पश्यति शिव- 10
पथिकायामस्थिसंकलीभूतानि अपगतमांसशोणितस्नायुबन्धनानि। स इममेव कायमि-
ति पूर्ववत् ॥ पुनरपरं यदा पश्यति शिवपथिकायामस्थीनि दिग्विदिक्षु क्षिप्तानि। यद्उ-
तान्येन पादास्थीनि। अन्येन जङ्घास्थीनि। अन्येन चोर्वस्थीनि। अन्येन श्रोणिकटाहकं (4)।

1) These four adjectives clearly form part of a stock-description of a corpse in Buddhist works; see M. Vyutp. § 52. 1—4; *vinīlaka-saṃjñā* | *vipūyaka-s.* | *vipaḍumaka* (v. l. °*padu*°)-*s.* | *vyādhmātaka-s.* With this the Tib. (132. b. 6) partly agrees: རྣམ་པར་བོ་པ་འམ་ (for བམ་པ་ 'rotten'?) | རྣོར (རྣམ་པར་) བསྔོས་པ་ (exactly = *vinīlaka* 'quite livid') | རྣམ་པར་རྣགས་པ་ 'putrid'?) | རྣམ་པར་འབུས་པ་. The last exactly equals *vyādhmātaka*, and I therefore emend our MS. which reads *'dhmātakāni*. The Pali has *uddhumātakam*. As to the form or meaning of *vipaṭmaka* there seems to be little certainty; 'von Würmern angefressen' B² (Nachtr.). The Pali has no equivalent. Ten classes of corpses in the Visuddhi-magga (Warren, Buddhism p. 292; pictures (!) in the Colombo ed. pp. 695 sqq.

2) The Pali is *sīvathikā*, occurring at Pāraj. I. 10.13, a passage which otherwise illustrates the present. See also J.R.A.S. sup. cit., p. 873, n. 3.

3) See Senart Mhv. I. 387. The form *saṃkalībhūta* below, not hitherto found, confirms Senart's derivation and his observation as to the want of genuineness in the equivalent Pali form °*saṃkhalikā*).

4) Tib. (133. a. 6) འདོད་མོ, a form not in lexx., but prob. equiv. to Pali *kaṭa* (*cunnus*). The Sinh. version of the corresponding Pali however (ed. cit. p. 36.11) renders by (Sinh.) *kaṭī*, which means 'hip' like Sk. *kaṭa*.

अन्येन पृष्ठवंशमन्येन पार्श्वकास्थीनि ' अन्येन ग्रीवास्थीनि ' अन्येन बाह्वस्थीनि '[1] स इममेवं कायमुपसंहरतीति पूर्ववत् ॥ पे ॥ पुनरपरं यदा पश्यति शिवपथिकायामस्थीन्यनेकवार्षिकाणि वातानुपरिशोषितानि शङ्खसन्निभानि ' इममेव कायं तत्रोपसंहरतीति पूर्ववत्। अयमपि काय एवंधर्मा एवंस्वभाव एतां धर्मतां न व्यतिवृत्त इति ॥ पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदा पश्यति शिवपथिकायामस्थीन्यनेकवार्षिकाणि तिरोभूतानि नीलानि कपोतवर्णानि पूतीनि चूर्णकजातानि पृथिव्यां पांसुनासमसमीभूतानि स इममेव कायं तत्रोपसंहरति अयमपि काय एवंधर्मा एवंस्वभावः ' एतां धर्मतां न व्यतिवृत्त[2] इति ॥

एष तावत्समासतो रागस्य समुदाचारप्रतिपक्षः। द्वेषस्य मैत्री प्रतिपक्षः ' अप्रियसत्त्वादर्शनं च ' तेन वा सह भोजनाद्येकार्थतयाप्रीत्युत्पादनं तत्र परसुखस्याशंसा प्रार्थना तृष्णाऽभिनन्दनं मैत्री। कामरागप्रत्युपकारहेतुभ्यामक्लिष्टः स्नेह इत्यर्थः ॥

सा त्रिविधा ऽक्षयमतिसूत्रे ऽभिहिता। सत्त्वारम्बणा मै[98b]त्री प्रथमचित्तोत्पादिकानां बोधिसत्त्वानां। धर्मारम्बणा चर्याप्रतिपन्नानां बोधिसत्त्वानां। अनारम्बणा मैत्री अनुत्पत्तिकधर्मक्षान्तिप्रतिलब्धानां[3] बोधिसत्त्वानामिति ॥

पुनर्बुद्धारम्बणा बोधिसत्त्वारम्बणा श्रावकप्रत्येकबुद्धारम्बणा सत्त्वारम्बणा च। तत्र सत्त्वारम्बणायाः पूर्वं प्रिये सत्त्वे हितसुखोपसंहारान् ध्यानमभ्यस्य ' तत्समे मैत्रीमुपसंहरेत्। ततः परिचितेषु ' तत उदासीनेषु ' ततः समीपवासिषु ' ततः स्वग्रामवासिषु '

1) The MS. adds another *anyena*, but no word appears to be missing.

2) = Mahāsatip. sutta, p. 38, Warren p. 362.

3) Tib. (133. b. 6) མི་སྐྱེ་བའི་ཆོས་ལ་བཟོད་པ་ཐོབ་པ་ 'partaking in patient adherence to the principle of non-rebirth'; compare Jäschke p. 498. b. and Wassiliev, 140 (151). Other passages where the phrase occurs, with varying translations by European scholars are given at Dh.-s. p. 63 (CVII).



एवं परग्रामे च। एवं यावदेकां दिशमधिमुच्य स्फरित्वोपसंपद्य विहरति[1]। एवं दशसु दिक्षु। बुद्धाद्यारम्बनायास्त्वयं[2] प्रयासो[3] नास्ति ॥

सा च वज्रध्वजपरिणामनायामुक्ता[4]। स बोधिसत्त्वचर्यायां चरन् यावन्ति कानिचिद्दृश्यन्ते रूपाणि मनोज्ञानि वा प्रतिकूलानि वा '[5] एवं शब्दा गन्धा रसा स्प्रष्टव्या धर्मा मनोज्ञा वा प्रतिकूला वा ' अनवद्या विशुद्धाः कल्याणोदारप्रभास्वरा वा येन सौमनस्यं जायते ' सुखमवक्रामति ' प्रसादो जायते ' प्रीतिः संभवति ' प्रामोद्यं संतिष्ठते ' हर्षः प्रादुर्भवति ' दौर्मनस्यं निवर्तते ' चित्तकल्यता प्रादुर्भवति ' चित्तं कर्मण्यं भवति ' आशयो मृदुभवति ' इन्द्रियाणि प्रह्लादं गच्छन्ति । सततसुखं संवेदयमान एवं परिणामयति ' सर्वबुद्धानामेतया परिणामनया भूयस्या मात्रया ते बुद्धा भगवन्तो ऽचिन्त्येन बुद्धविहारसुखेन समन्वागता भवन्त्वतुल्येन बुद्धसमाधिसुखेन सुसंगृहीता भवन्त्वनन्तसुखेन भूयस्या मात्रयोपस्तब्धा भवन्तु ' अप्रमाणेन बुद्धविमोक्षसुखेन समन्वागता भवन्तु ' अप्रमेयेण बुद्धप्रातिहार्यसुखेन[6] सुसंगृहीता भवन्तु ' अचिन्त्येन बुद्धासंगविहारसुखेन[7] सुपरिगृहीता भवन्तु। दुरासदेन बु-

1) The whole clause forms part of a Buddhistic *locus communis* on *maitrī*; see M. Vyutp. lxix. 5 (where read with Böhtlingk W.K.F., Nachtr. 7, *sphăritvā* 'sich verbreiten über').

2) *°ālamb°* (here only) MS.

3) སྦྱོར་བ་ 'procedure' (*prayāma?*).

4) K.F. 211 (30), a Tibetan title only, with which however our Tib. version substantially agrees. Regarding the conjectured identity of the work cited above p. 22.5, it should be noted that here the Tib. title ends with ཡོངས་སུ་བསྔོ་བ་, the proper equivalent of *pariṇāmanā* (cf. infra 1), not as there with མདོ = *sūtra*.

5) The MS. here reads: *vā evam* | *pe* | *evaṃ*. I have deleted the first *evaṃ* (in margin only) and the *peyālam*, which break the sense and have no equivalent in the Tib. (134. a. 3).

6) Dh.-s. § 133.

7) Cf. Senart, Mhv. I. 399.

द्धवृषभित[1]सुखेनाभिच्छन्ना भवन्तु । अप्रमेयेण बुद्धबलसुखेनात्यन्तसुखिता भवन्तु । सर्ववेदि-तशान्तेनानुत्पत्तिसुखेनाधिकारसुखा भवन्तु । असंगविहारसततसमाहितेन तथागतसुखेना-द्वयसमुदा[99 a]चारेणाविकोपितसुखा भवन्तु ॥ एवं बोधिसत्त्वस्तत्कुशलमूलं तथागतेषु प-रिणामय्य बोधिसत्त्वेषु परिणामयति । यदिदमपरिपूर्णानामभिप्रायाणां परिपूरणाय परिणा-मयति । अपरिशुद्धानां सर्वज्ञताध्याशयानां परिशुद्धये । अपरिनिष्पन्नानां सर्वपारमितानां परिनिष्पत्तये । वज्रोपमस्य बोधिचित्तोत्पादस्याधिष्ठानाय । अनिवर्त्यस्य सर्वज्ञतासंनाह-स्याप्रतिप्रश्रब्धये । बोधिसत्त्वानां[2] कुशलमूलानां मार्गणतायै । सर्वजगत्समतास्थितस्य म-हाप्रणिधानस्य परिपूरये । सर्वबोधिसत्त्वविहाराणामधिगमाय । सर्वबोधिसत्त्वेन्द्रियाणां तीक्ष्णाभिज्ञतायै । सर्वबोधिसत्त्वकुशलमूलानां सर्वज्ञतास्पर्शनतायै ॥ स एवं तत्कुशलमूलं बोधिसत्त्वानामर्थाय परिणामय्य बुद्धशासनावचरेषु[3] सर्वश्रावकप्रत्येकबुद्धेषु तत्कुशलमूल-मेवं परिणामयति । ये केचित्सत्त्वा एकाच्छटासंघातमात्रमपि[4] बुद्धशब्दं शृण्वन्ति । धर्मशब्दं वा आर्यसंघपर्युपासनं वा कुर्वन्ति तेषां तत्कुशलमूलमनुत्तरायै सम्यक्संबोधये परिणामयति बुद्धानुस्मृतिपरिपूर्यै परिणामयति । धर्मानुस्मृतिप्रयोगतायै परिणामयति । आर्यसंघगौ-रवाय परिणामयति । अविरहितबुद्धदर्शनतायै परिणामयति । चित्तपरिशुद्धये परिणाम-यति । बुद्धधर्मप्रतिवेधाय[5] परिणामयति । अप्रमेयगुणप्रतिपत्तये परिणामयति । सर्वाभिज्ञा-कुशलपरिशुद्धये परिणामयति । धर्मविमतिविनिवर्तनाय परिणामयति । यथा बुद्धशास-नावचरेषु परिणामयति । श्रावकप्रत्येकबुद्धेषु च तथा स बोधिसत्त्वः सर्वसत्त्वेषु तत्कुशल-

1) *vrishabhita* (°*tā* MS.) occurs only in Mhv. II. 277.8, in the sense of a «deed of bull-like prowess». Tib. ཁྱུ་མཆོག་ཏུ་གྱུར་པའི་བདེ་བ་ «the joy of becoming the leader of the herd».

2) *sukhānāṃ* MS.; but the Tib. has the unvarying equivalent of *bodhisattva*.

3) 'Abiding in the commands . .' a somewhat extended usage of *avacara*; cf. Senart, Mhv. I. 397.

4) Divy. 142.11.

5) 'penetration' Senart, Mhv. I. 443.



मूलं परिणामयति[1] ॥ यदिदं नैरयिकमार्गविनिवर्तनाय परिणामयति । तिर्यग्योनिव्यवच्छे-दाय परिणामयति । यमलोकोपच्छेदसुखाय परिणामयति । निरवशेषसर्वापायगत्युपपत्ति-व्यवच्छेदाय परिणामयति ॥ तेषां च सर्वसत्त्वानामनुत्तरबोधिच्छन्दविवर्धनतायै परि-णा[99 b]मयति । अध्याशयसर्वज्ञताचित्तलाभाय परिणामयति । सर्वबुद्धधर्माप्रतिक्षेपाय प-रिणामयति । अत्यन्तसुखसर्वज्ञताभूमिसंवर्तनाय[2] परिणामयति । अत्यन्तसर्वसत्त्वविशुद्धये परिणामयति । सर्वसत्त्वानामनन्तज्ञानाधिगमाय परिणामयति । पे ॥ तस्य यत्किंचिच्ची-वरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यगमनागमनशरीरोपस्थाननिषद्यादिनिषेवणायत-नानां प्रवर्तनकर्म ईर्यापथाधिष्ठानमीर्यापथस्याविकोपनं कायकर्म वाक्कर्म मनस्कर्म सुच-रितं षण्णामिन्द्रियाणां संवरः स्वशरीराच्छादनमर्दनस्नानकर्म । अशितपीतखादितं संमि-ञ्जित[3]प्रसारितावलोकितविलोकितसुप्तजागरितस्वशरीरगतोपस्थानं सर्वमेतद्बोधिसत्त्वस्य सर्वज्ञतालम्बनप्रयुक्तस्य न किंचिदपरिणामितं सर्वज्ञतायां सर्वसत्त्वहितसुखचित्तस्य ॥ पे ॥ सर्वजगत्परित्राणमनसो नित्योद्युक्तकुशलमूलस्य मदप्रमादव्यतिवृत्तस्य ॥ पे ॥ सर्व-क्लेशपराङ्मुखस्य सर्वबोधिसत्त्वानुशिक्षणाचेतसः सर्वज्ञतामार्गाप्रतिहतस्य ज्ञानभूमिनिषे-वणस्य पण्डितसंवासाभिरतस्य । पे ॥ मधुकर इव कुशलमूलसंभरणस्य सर्वजगदुच्चलि-तसन्तानस्यानभिनिविष्टसर्वसंस्कारस्य । पे ॥ अन्तशः श्वस्वपि तदन्येष्वपि तिर्यग्योनिगते-ष्वेकौदनो[4]न्मिञ्जित[5]मेकालोपं वा परित्यजति । सुगतावुपपत्तिषु तत्सर्वं तेषामेव हिताय तेषामेव परिमोचनाय परिणामयति । तस्यास्तिर्यग्योनेस्तस्माद्दुःखार्णवात्तस्माद्दुःखो-पादानात्तस्माद्दुःखस्कन्धात्तस्माद्दुःखावेदनायाः[6] । तस्माद्दुःखोपचयात्तस्माद्दुःखाभिसंस्का-

1) From this point onwards the MS. reads *parināmayati.*

2) The noun-form is new in this sense: for *saṃvartate* ('conduce to') in connexion with the *bhūmis* cf. Mhv. I. 77. 3—5.

3) Cf. Trenckner, Majjh.-n. I. p. 533.2 and Divy. 473. 6—8; °*miñjata* MS.

4) *odana* MS.

5) M. Vyutp. § 33.24.

6) °*shkayā v*° marg.

रात्तस्माद्दुःखनिदानात्ततो दुःखमूलात्तस्माद्दुःखायतनात्तेषां सत्वानां विनिवर्तनाय परि-
णामयति तदारम्बणेन च सर्वसत्वारम्बणीकरोति मनसिकरोति ' तत्र कुशलमूले पूर्वङ्ग-
मीकरोति। यदिदं सर्वज्ञतायां परिणामयति। [100 a] बोधिचित्तोत्पादेन प्रतिगृह्णाति।
तत्र कुशलमूलमुपनयति ' संसारकान्ताराद्विनिवर्तयति ' अनावरणेन बुद्धसुखेनाभिमुखी-
5 करोति ' संसारसागरादुन्मज्जयति। बुद्धधर्मप्रयुक्तया मैत्र्या स्फरतीत्यादि[1]॥

इमाश्च सुवर्णभासोक्ता[2] मैत्रीकरुणागर्भा गाथाः सत्त्वा आदरतः समन्वाहृत्य भावयित-
व्या अन्तशो वचसापि॥

[3]सुवर्णभासोत्तमदुन्दुभेन शाम्यन्तु दुःखास्त्रिसहस्र[4]लोके।
अपायदुःखा यमलोकदुःखा दारिद्र्यदुःखाश्च इह त्रिलोके॥
10 अनेन चो दुन्दुभिघोषनादिना शाम्यन्तु सर्वव्यसनानि लोके।
भवन्तु सत्वा ह्य[5]भयाहृता तथा[5] यथाभयाः शान्तभयाः मुनीन्द्राः॥
यथैव सर्वार्यगुणोपपन्नाः संसारसर्वज्ञमहासमुद्राः।
तथैव भोन्तू[6] गुणसागराः प्रजाः समाधिबोध्यङ्गगुणैरुपेताः॥
अनेन चो दुन्दुभिघोषनादिना भवन्तु ब्रह्मस्वर[7] सर्वसत्वाः।
15 स्पृशन्तु बुद्धत्ववराग्रबोधिं प्रवर्तयन्तू शुभधर्मचक्रम्[8]॥

1) Transitive here (intrans. 98.b. supra). Tib. ཁྱབ་པར་བྱེད་. Pali *pharati* has a similar double usage,

2) The following extract is selected from the beginning (pp. 9—11) and end (pp. 18—21) of the same chapter (4) from which a quotation was made above p. 160. Cf. *ibid.* note 5.

3) See p. 9 fin. of the printed edition (P.).

4) °*sāh*° A.

5)..5) These five aksharas are deleted in A.; I have restored them from B. and P., which reads: *samasta satvā hṛdayāharā yathā tathā tayā çāntabhayā munīndra.*

6) *bhāntu* P.

7) so A.B.; °*meçvara* P.

8) *cakradharmam* A. For *ū* final elongated, cf. *bhontū* above, and *daçasū* below.



तिष्ठन्तु कल्पानि अचिन्तियानि देशेन्तु धर्मं जगतो हिताय।
हनन्तु क्लेशान् विधमन्तु दुःखान् समेन्तु रागं तथ दोष मोहम्॥
ये सत्व तिष्ठन्ति अपायभूमौ आदीप्तसंप्रज्वलितास्थिगात्राः।
शृण्वन्तु ते दुन्दुभिसंप्रवादितं नमोऽस्तु बुद्धाय भणन्तु वाचम्॥
[1]जातिस्मराः सत्वा भवन्तु सर्वे जातीशतं जातिसहस्रकोट्यः। 5
[2]अनुस्मरन्तू सततं मुनीन्द्रान् शृण्वन्तु[2] तेषां वचनं ह्युदारं॥
[3]अनेन चो दुन्दुभिघोषनादिना लभन्तु बुद्धेहि समागमं सदा।
विवर्जयन्तू खलु पापकर्म चरन्तु कुशलानि[4] शुभक्रियाणि॥
सर्वत्र क्षेत्रेषु च सर्वप्राणिनां सर्वे च दुःखाः[5] प्रशमन्तु लोके।
ये सत्व विकलेन्द्रिय अङ्गहीनाः ते सर्वि सकलेन्द्रिय[6] भोन्तु सांप्रतम्॥ 10
ये व्याधिता दुर्बलक्षीणगात्रा निस्त्राणभूताः शयिता दिशासु[7]।
ते सर्वि मुच्यन्तु च व्याधितो लघु लभन्तु चारोग्य बलेन्द्रियाणि॥
ये[8] राजचौरभट[9] तर्जित वध्यप्राप्ता नानाविधैर्भयशतैर्व्यसनोपपन्नाः[10]।
ते स[100b]र्वि सत्व व्यसनागतदुःखिता हि मुच्यन्तु तैर्भयशतैः परमैः सुघोरैः॥

1) See p. 18.17 of the edition = f. 11. b. 5 of B (see p. 160, n. 5) = 10. b of the MS., a fragmentary palm-leaf copy, cited at p. 162 n. 2 and hereinafter called D.

2) B. and P. have first persons (*anusmareyam*, *çṛṇvīya*, etc.) throughout this passage.

3) *anena cāham kuçalena karmaṇā labheya buddhehi*° B.

4) – resolved to ⏑⏑, here and below, 218, 1. 2.

5) So A. D.; *pāpāḥ* B.; *rogāḥ* P.

6) *kuçalendr*° B.

7) So A. sec. man.; the original reading was *çayita daça* (?) *dikṣu*; *niçrāṇa*° *daça diçāsu* P.; *nistrāṇabhuktāç ca daça diçāsu* D.

8) Metre for this stanza Vasantatilaka.

9) °*samatarj*° P.; *saṭha* D.

10) °*padhānā* D.

ये ताडिता बन्धनबद्धपीडिता विविधेषु व्यसनेषु च संस्थिता[1]ह्रि ।
अनेक आयाससहस्र आकुला[2] विचित्रभयदारुणशोकप्राप्ताः ॥
ते सर्वि मुच्यन्त्विह बन्धनेभ्यः संताडिता मुच्यिषु[3] ताडनेभ्यः ।
वध्याश्च संयुज्यिषु जीवितेन व्यसनागता निर्भय भोन्तु सर्वे ॥
5 ये सत्व तुत्तर्षपिपासपीडिता लभन्तु ते भोजनपानचित्रम् ।
अन्धाश्च पश्यन्तु विचित्ररूपां बधिराश्च[4] शृण्वन्तु मनोज्ञघोषान् ॥
नग्नाश्च वस्त्राणि लभन्तु चित्रां दरिद्रसत्वाश्च निधिं लभन्तु ।
प्रभूतधनधान्यविचित्ररत्नैः सर्वे च सत्वाः सुखिनो भवन्तु ॥
मा कस्यचिद्भावतु दुःखवेदनाः सौख्यान्विताः[5] सत्व भवन्तु सर्वे ।
10 अभिरूपप्रासादिकसौम्यरूपा अनेक सुख संचित नित्य भोन्तु ॥
मनसान्नपानाः[6] सुसमृद्धपुण्याः सह चित्तमात्रेण भवन्तु तेषां ।
वीणा मृदङ्गाः पणवाः सुघोषकाः उत्सा सराः पुष्करिणी तडागाः ॥
[7]सुवर्णपद्मोत्पलपद्मिनीश्च सह चित्तमात्रेण भवन्तु तेषाम् ।
गन्धं च माल्यं च विलेपनं च वासश्च चूर्णं कुसुमं विचित्रम् ॥
15 त्रिष्कालवृक्षेभि[8] प्रवर्षयन्तु गृह्णन्तु ते सत्व भवन्तु हृष्टाः[9] ।
कुर्वन्तु पूजां दशसू[10] दिशासु अचिन्तियां सर्वतथागतानाम् ॥

---

1) *daça sthitāni* P.
2) *vyākulā* P.; *āyāsabhayasamākulā* D.
3) For the termination cf. 92.12; *mucyantu ca tāḍanānte* D.
4) *°pān dhīrā* D.
5) *sudarçanāḥ* P.
6) *manaçanta pārāḥ* P.
7) The text shows considerable variation and abridgement compared with that of P., 20.11 and 21.1.
8) So D.P.; *°kṣāhi* A.
9) *tushṭāḥ* P.
10) *°su* libri omnes; but cf. p. 216, note 12, and 217. 8 above.



स बोधिसत्वानथ श्रावकाणां धर्मस्य बोधि प्रतिसृष्टि तस्य[1] ।
नोचां गतिं सत्व विवर्जयन्तु भवन्तु अष्टाक्षणवीतिवृत्ताः[2] ॥
आसादयन्तू जिनराजमुत्तमं[3] लभन्तु बुद्धेह्नि समागमं सदा ।
सर्वा स्त्रियो नित्य नरा[4] भवन्तु शूराश्च वीरा विदुपण्डिताश्च ॥
5 ते सर्वि बोधाय चरन्तु नित्यं चरन्तु ते पारमितासु षट्सु ।
पश्यन्तु बुद्धान्दशसू दिशासु रत्नद्रुमेन्द्रेषु[5] सुखोपविष्टान् ।
वैडूर्यरत्नासनसंनिषण्णान् धर्मांश्च शृण्वन्तु प्रकाश्यमानान्[6] ' इति ॥
एषा संक्षेपतो मैत्री ॥ द्वेषसमुदाचारप्रतिपक्षः ॥
मोहानुशयस्य प्रतीत्यसमुत्पाददर्शनं प्रतिपक्षः ॥
10 तत्र प्रतीत्यसमुत्पादः शालिस्तम्बसूत्रे[7]ऽभिहितः । तत्राध्यात्मिकस्य प्रतीत्यसमु-

---

1) This is the reading of P., with which B. (v. l. *pratisaṃshṭi*) agrees; *bodhi raja nirmala susthitasya* A.: *°nirma su || sthit°* D.

2) *ashṭāngikavithiv°* B. P.; *°angikavīta°* D.; *ashṭākshaṇa-vyativ.* A. The genuineness of *akshaṇa* is vouched for by the Tib. མི་ཁོམ་ (137 b. 2).

3) Tib. དཔ་བའི་རྒྱལ་པོ་དམ་པ་ *kṣaṇarājam°* A.; *jinarājamūrtim* P. B.

4) *°tyaratā* P.

5) *ratnottama[-]vṛkshasukh°* B. P.; *dānāditoyaiḥ suçodhayitvā* D.

6) So P. (p. 21, *fin*); *te dharma prakāçayantu* D.

7) *°stambhasūtre* MS. I adopt the form which agrees with the Tib. (137. b. 5) ས་ལུ་ལྗང་པའི་མདོ་. Compare KF. 261 'riz verdoyant'. In M. Vyutp. lxv. 77, two of Minaev's authorities read *°stambaka.* The Bodhicar.-ṭīkā pp. 257, 309 (cf. 239. 15 369. 11.) cites portions of this passage calling the work at p. 309 *Çālistamba-puñja.* Nanjio mentions a Çāli-'sambhava'-s.° 280 (tr. before A.D. 420) etc. But '-sambhava' is apparently an error in the Chinese 'authorized' list; for *so-tān-mo* (Nanjio 867) represents *stamba.* In the Mādhyamika-vṛitti Ch. XVI, p. 209 (ed. B.T.S.I.) the present passage is cited at length. The more important variants of that text (M.) are cited below.

त्पादस्य [101 a] हेतूपनिबन्धः[1] कतमः ।[2] यदिदमविद्याप्रत्ययाः संस्कारा यावज्जातिप्रत्ययं
जरामरणमिति । अविद्या चेन्नाभविष्यन्नैव संस्काराः प्राज्ञास्यन्त । एवं यावद्यदि जातिर्ना-
भविष्यन्न जरामरणं प्राज्ञास्यत । अथ सत्यामविद्यायां संस्काराणामभिनिर्वृत्तिर्भवति ।
एवं यावज्जात्यां सत्यां जरामरणस्याभिनिर्वृत्तिर्भवति । तत्राविद्याया नैवं भवति ' अहं
5 संस्कारानभिनिर्वर्तयामीति । संस्काराणामप्येवं न भवति । वयमविद्ययाभिनिर्वृत्ता
इति । एवं यावज्जात्या नैवं भवति ' अहं जरामरणमभिनिर्वर्तयामीति । जरामरणस्यापि
नैवं भवति ' अहं जात्या निर्वृत्त इति । अथ च सत्यामविद्यायां संस्काराणामभिनिर्वृत्तिर्भ-
वति प्रादुर्भावः । एवं यावज्जात्यां सत्यां जरामरणस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः ॥ एव-
माध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धो द्रष्टव्यः ॥ कथमाध्यात्मिकस्य प्रती-
10 त्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्य इति ' [षण्णां धातूनां समवायात् । कतमेषां षण्णां
धातूनां समवायात् ।][3] यदिदं पृथिव्यप्तेजोवाय्वाकाशविज्ञान[4]धातूनां समवायादाध्यात्मिक-
स्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः ॥ तत्राध्यात्मिकस्य प्रतीत्यसमुत्पा-
दस्य पृथिवीधातुः कतम इति ' योऽयं कायस्य संश्लेषतः कठिनभाव[5]मभिनिर्वर्तयत्ययमु-
च्यते पृथिवीधातुः । यः कायस्यानुपरिग्रह[6]कृत्यं करोति अयमुच्यते ऽब्धातुः । यः
15 कायस्याशितपीतभक्षितं परिपाचयति अयमुच्यते तेजोधातुः । यः कायस्याश्वासप्रश्वास-

1) The attachment of cause to cause (in the chain); Tib. འབྲེལ་པ.

2) Çāntideva, as shown by the readings of both A. and Tib., cites the opening clause with undue brevity. The exordium in M. runs more clearly thus: *evam ādhyātmiko* (°*ke* edition) *'pi pratītyasamutpādo dvābhyām eva kāraṇābhyām utpadyate | katamābhyāṃ dvābhyām | hetūpanibandhataḥ pratyayopanibandhataç ca | tatrādhyātmikasya pratītyasamutpādasya hetūpanibandhaḥ katamaḥ | yad idam avidyāpratyayāḥ saṃskārāḥ saṃskārapr° vijñānam,* — and so on, going through the chain.

3) This clause omitted in A., is supplied from M. and Tib. (138. a. 2).

4) Dh.-s. § 58; cf. Pitāputrasamāgama ap. Bodhic.-ṭīk. 327.3 and infra ff. 108-9.

5) So also Tib. སྦྱ་བའི་དངོས་པོ་; *saṃçleshātmake 'pi na bhāvam* M.

6) A new form. Tib. (138. a. 5) ལུས་སྡུད་པ་ 'body-aggregation'.



कृत्यं करोत्ययमुच्यते वायुधातुः । यः कायस्यान्तःसौषिर्यभावमभिनिर्वर्तयत्ययमुच्यते आ-
काशधातुः । यो नामरूपमभिनिर्वर्तयति [1]नडकलापयोगेन पञ्चविज्ञानकायसंप्रयुक्तं [2]सास्रवं
च मनोविज्ञानम् अयमुच्यते विज्ञानधातुः ॥ असत्सु प्रत्ययेषु कायस्योत्पत्तिर्न भवति ।
यदाध्यात्मिकः पृथिवीधातुरविकलो भवत्येवमप्तेजोवाय्वाकाशविज्ञानधातवश्चाविकला
भवन्ति । ततः सर्वेषां समवायात्कायस्योत्पत्तिर्भवति ॥ तत्र पृथिवीधातोर्नैवं भवति ' अहं 5
कायस्य कठिनभाव[3]मभिनिर्वर्तयामीति । अब्धातोर्नैवं भवति ' अहं कायस्यानुपरिग्रहकृ-
त्यं करोमीति । तेजोधातो[101 b]र्नैवं भवति ' अहं कायस्याशितपीतखादितं परिपाच-
यामीति । वायुधातोर्नैवं भवति ' अहं कायस्याश्वासप्रश्वासकृत्यं करोमीति । आकाशधा-
तोर्नैवं भवति ' अहं कायस्यान्तः सौषिर्यं करोमीति । विज्ञानधातोर्नैवं भवति ' अह-
मेभिः प्रत्ययैर्जनित इति । अथ च सत्स्वेषु प्रत्ययेषु कायस्योत्पत्तिर्भवति । तत्र पृथिवीधा- 10
तुर्नात्मा न सत्त्वो न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न पुमान्न नपुंसकं । न चाहं ' न मम '
न चाप्यन्यस्य कस्यचित् । एवमब्धातुस्तेजोधातुर्वायुधातुराकाशधातुर्विज्ञानधातुर्न सत्त्वो
न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न पुमान्न नपुंसकं न चाहं न मम न चाप्यन्यस्य
कस्यचित् ॥ [4]तत्राविद्या कतमा[5] । [6]या एषेव षट्सु धातुष्वेक[7]संज्ञा पिण्ड[8]संज्ञा नित्यसंज्ञा
ध्रुवसंज्ञा शाश्वतसंज्ञा सुखसंज्ञा आत्मसंज्ञा सत्त्वजीवमनुजमानवसंज्ञा ' अहंकारममकार- 15

1) Tib. (138. a. 7) སྦུ་གུ 'reed'. Doubtless the arteries are meant; cf. *nāḍī*. In M. this whole sentence is chaotic.

2) New to literature; but see Mahendra on Hemac. Anekārthas. II. 253: *āsravaḥ karmabandhahetuḥ kriyāhiṃsādiḥ | tena saha vartate yaḥ skandhaḥ çarīrabhavāpanno rūparasādisamūhaḥ sa sāsravaskandhaḥ.*

3) *Falsa lectio* repeated in M.

4) The following passage is cited in Bodhic.-ṭīkā p. 258 (cited as 'B').

5) *karma* M.

6) *eshām eva shaṇṇāṃ dhātūnām* B. M.

7) *aikyas*° B.

8) So too the Tib.: རིལ་པོ. *susaṃjnā* M. (which I do not understand); om. B.

संज्ञा। एवमादिविविध[म्][1]ज्ञानम् इयमुच्यते ऽविद्येति। एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः प्रवर्तन्ते। तत्र ये रागद्वेषमोहा विषयेष्वमी उच्यन्ते संस्कारा इति। वस्तुप्रतिविज्ञप्तिर्विज्ञानं। विज्ञानसहजाश्चत्वारो[2] ऽरूपिण उपादानस्कन्धास्तन्नाम [-रूपं][3]।[4] चत्वारि च महाभूतानि चोपादाय उपादाय रूपमैकध्यमभिसंक्षिप्य तन्नामरूपं।[4] नामरूपसंनिश्रि-
5 तानीन्द्रियाणि षडायतनं। त्रयाणां धर्माणां संनिपातः[5] स्पर्शः। स्पर्शानुभवना वेदना।[6] वेदनाध्यवसानं तृष्णा। तृष्णा वैपुल्यमुपादानं। उपादाननिर्जातं[7] पुनर्भवजनकं कर्म। भवः। तद्धेतुकस्कन्धप्रादुर्भावो जातिः। स्कन्ध[8]परिपाको जरा वि[9]नाशो मरणं। म्रियमाणस्य मूढस्य स्वाभिष्वङ्गस्यान्तर्दाहः शोकः। लाल[10]प्यनं परिदेवः। पञ्चविज्ञानकायसंप्रयु-
क्तमशातानु[11]भवनं दुःखं।[12] मनसिकारसंप्रयुक्तं मानसं दुःखं दौर्मनस्यम्। ये चान्य एवमादय
10 उपक्लेशा[13]स्त उपायासाः॥ पे[14]॥

[15]पुनरपरं तत्त्वे ऽप्रतिपत्तिः मिथ्या प्रतिपत्तिः अज्ञानमविद्या। एवमविद्यायां सत्यां

---

1) °*dhajñā*° MS.; but (*m*) *ajñā* must be restored from B. and the Tib. མི་ཤེས་པ (139. a. 2).

2) *sahetavas* M.

3) supplied from B. and M. and Tib.

4) . . . 4) This clause is omitted in B. and Tib. After *copādāya* M. reads: ***rūpaṃ tac ca nāma*** । *ekamadhyam* [sic] *abhis*°.

5) The same word is used and also illustrated in Mil.-P. 60.10—24.

6) op. cit. 60.25.

7) ***tat*** *punarbhave janakakarmabhave hetukaḥ ska*° M.

8) *jātyabhinirvṛttānāṃ skandhānāṃ parip.* B.

9) *jīrṇasya skandhasya vin*° M.

10) Noun-form new. I do not undertand M.'s reading: *çokocchamālopamaṃ paridevaḥ*. The Tib. (139. a. 6) seems to have had some form like *lālapyana*. I understand the rendering to mean: «the uttering of lamentation is the telling to oneself ཚིག་ཏུ་སྨྲ་བ one's state arising from sorrow». *çokārthalapanaṃ* B.

11) Cf. Senart, Mhv. I. 373, and B. R. s. v. 3. शात.

12) *dushkamanasik*° MS. The Tib. separates the sentences (139. a. 7).

13) 'ein kleiner *kleça*' B²; but the Tib. ཉེ་བའི་ཉོན་མོངས་པ and the explanation of *upāyāsa* by Buddhaghosa in Vis.-M. xvii (ap. Warren, Buddhism 191) suggest nearness and intensity as the force of *upa*-.

14) For the omission see B. 259. 3—10 (= M. p. 210).

15) The following passage is also quoted in B. at pp. 309 sqq.



त्रिविधाः संस्काराः अभिनिर्वर्तन्ते। पुण्योपगा अपुण्योपगा आनिञ्ज्यो[1][102 a]पगाश्चेम उच्यन्ते ऽविद्याप्रत्ययाः संस्कारा इति। पुण्योपगानां संस्काराणां पुण्योपगमेव विज्ञानं भवति। अपुण्योपगानां संस्काराणामपुण्योपगमेव विज्ञानं भवति। आ[2]निञ्ज्योपगानां संस्काराणामा[2]निञ्ज्योपगमेव विज्ञानं भवति। इदमुच्यते संस्कारप्रत्ययं विज्ञानमिति। एवं नामरूपं।[3] नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रियाः प्रवर्तन्ते। तन्नामरूपप्रत्ययं 5
षडायतनमित्युच्यते। षड्भ्य आयतनेभ्यः षट् स्पर्शकायाः प्रवर्तन्ते ऽयं षडायतनप्रत्ययः स्पर्श इत्युच्यते। यज्जातीयः स्पर्शो भवति तज्जातीया वेदना प्रवर्तते। इयं स्पर्शप्रत्यया वेदनेत्युच्यते। यस्तां वेदयति विशेषेणास्वादयति। अभिनन्दत्यध्यवस्यत्यधितिष्ठति।[4] सा वेदनाप्रत्यया तृष्णेत्युच्यते। आस्वादनाभिनन्दनाध्यवसानं।[5] मा मे प्रियरूपशातरूपैर्वियोगो भवत्विति। अपरि[6]त्यागो भूयो भूयश्च प्रार्थना। इदं तृष्णाप्रत्ययमुपादानमित्यु- 10
च्यते।[7] एवं प्रार्थयमानः पुनर्भवजनकं [8]कर्म समुत्थापयति कायेन वाचा मनसा। अयमुपादानप्रत्ययो भव इत्युच्यते। या कर्मनिर्जाता[नां][9] स्कन्धानामभिनिर्वृत्तिः सा भवप्रत्यया जातिरित्युच्यते। यो जात्यभिनिर्वृत्तानां स्कन्धानामुपच[10]यपरिपाकाद्विनाशो भवति। तदिदं

---

1) For this form (= Pali *ānejja*) cf. Senart Mhv. I. 399; Lal.-v. cited in B². *anaṃhyop*° M.; *ānandopa*° B. With this triple division compare the classes of *karma* cited from Buddhaghosa (Vis.-M. xvii.) by Warren, Buddhism, 179—80.

2) . . . 2) Here MS. *āni*°.

3) *tad eva vijñānapratyayaṃ nāmar*° B. and so M. Here M. (p. 211.1) adds the following clause which doubtless occurs in the original (Çālistamba-) sūtra, but, as the Tib. (139. b. 6) shows, was not quoted by our author from it: *vedanādayo 'rūpiṇaç cattāraḥ* [sic] [,] *saṃskārās tatra tatra bhave nāmayantīti nāma'* । *saha rūpaskandhena ca 'nāmarūpam' ceti nāmarūpam ucyate.*

4) *adhyavasāye tishṭhati* M.

5) °*vasāyasthāna* । *ātmapriya*° *mā bhavatu* B.

6) *nityam aparityāgo bhaved* M.

7) The clause: *yatra vastuni . . . prārthayate sa* here added in M. (211. 8, 9.) is not reproduced in the Tib.

8) *kāryam utthā*° B.

9) So B.

10) འཕེལ་བ (140. a. 4) 'increase, development'; *upanayana* M.; *upaparipākād* [sic] B.

जातिप्रत्ययं जरामरणमुच्यते ॥ पे[1] ॥ [एवमयं द्वादशाङ्गः प्रतीत्यसमुत्पादो ऽन्योन्यहेतुको ऽन्योन्यप्रत्ययतो ' नैवानित्यो न नित्यो ' न संस्कृतो नासंस्कृतो[2] ' न वेदयिता ' न क्षयधर्मो न निरोधधर्मो ' न विरागधर्मो[3] ' अनादिकालप्रवृत्तो ऽनुच्छिन्नो ऽनुप्रवर्तते नदीस्रोतवत् ॥ अथ चेमान्यस्य द्वादशाङ्गस्य प्रतीत्यसमुत्पादस्य चत्वारि अङ्गानि संघातक्रि-
5 यायै हेतुत्वेन प्रवर्तन्ते। कतमानि चत्वारि। यदुत ' अविद्या तृष्णा कर्म विज्ञानं च ।] तत्र विज्ञानं बीजस्वभावत्वेन हेतुः ' कर्म क्षेत्रस्वभावत्वेन[4] हेतुः। [5]अविद्या तृष्णा च क्लेशस्वभावत्वेन हेतुः[5]। कर्मक्लेशा विज्ञानबीजं संजनयन्ति। तत्र कर्म विज्ञानबीजस्य क्षेत्रकार्यं करोति। तृष्णा विज्ञानबीजं स्नेहयति। अविद्या विज्ञानबीजमवकिरति [' [6]असतां येषां प्रत्ययानां बीजस्याभिनिर्वृत्तिर्न भवति[6]] ॥ तत्र कर्मणो नैवं भवति ' अहं विज्ञानबीजस्य
10 क्षेत्रकार्यं करोमीति। तृष्णाया अपि नैवं भवति ' अहं विज्ञानबीजं स्नेहयामीति। अविद्याया अपि नैवं भवति ' अहं विज्ञानबीजमवकिरामीति। विज्ञानबीजस्यापि नैवं भवत्यहमेभिः प्रत्ययैर्जनित इति। [7]अपि तु विज्ञानबीजे कर्मक्षेत्रप्रतिष्ठिते तृष्णास्नेहाभिष्यन्दिते ऽविद्यावकीर्णे [102b] तत्र तत्रोत्पत्त्यायतनसन्धौ[8] मातुः कुक्षौ विरोहति। नाम-

---

1) Here both A. and B. have *peyālam*, omitting the passage in brackets. The omission, however cannot be due to Çāntideva, as the Tib. (140. a. 4—6) in this case reproduces the text preserved in M. (211. 12), which I accordingly print, taking of course the former as my chief guide here.

2) *nāsaṃsk°* not in M.; but the Tib. has འདུས་བྱས་མ་ཡིན་འདུས་མ་བྱས་མ་ཡིན། adding རྒྱུ་མེད་པ་མ་ཡིན་རྐྱེན་མེད་པ་མ་ཡིན, *i. e.* «is not without *hetu* nor *pratyaya*».

3) འགོག་པའི་ཆོས

4) *kshayasv°* M.

5) . . . 5) Om. B. *avidyā vāyu jala tṛshṇā* A.

6) . . . 6) Supplied from Tib. and M.

7) The first part of this clause is somewhat shortened from the text as given in M. (211. 25—26). *°bījam . . . °kīrṇaṃ virohati.* B.

8) *prati [sandhau]* marg. Cf. M.



रूपाङ्कुरस्याभिनिर्वृत्तिर्भवति। स च नामरूपाङ्कुरो न स्वयंकृतो न परकृतो नोभयकृतो नेश्वरादिनिर्मितो न कालपरिणामितो न चैककारणाधीनो नाप्यहेतुसमुत्पन्नः। अथ च मातापितृसंयोगादृतुसमवायादन्येषां च प्रत्ययानां समवायादास्वादानुप्रविद्धं[1] विज्ञानबीजं मातुःकुक्षौ नामरूपाङ्कुरबीजमभिनिर्वर्तयति ' अस्वामिकेषु धर्मेष्वममेष्वपरिग्रहेष्वप्रत्यर्थिकेष्वाकाशसमेषु[2] मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात् ॥ [3]तद्यथा पञ्चभिः 5
कारणैश्चक्षुर्विज्ञानमुत्पद्यते। कतमैः पञ्चभिः ॥ चक्षुश्च प्रतीत्य रूपं चालोकं चाकाशं[4] तज्जं च मनसिकारं च प्रतीत्योत्पद्यते चक्षुर्विज्ञानं ॥ तत्र चक्षुर्विज्ञानस्य चक्षुराश्रयकृत्यं करोति। रूपमारम्बणकृत्यं करोति। आलोको ऽवभासकृत्यं करोति। आकाशमनावरणकृत्यं करोति। तज्जमनसिकारः समन्वाहारकृत्यं[5] करोति। असत्स्वेषु प्रत्ययेषु चक्षुर्विज्ञानं नोत्पद्यते॥ यदा चक्षुराध्यात्मिकमायतनमविकलं भवति। एवं रूपालोकाका- 10
शतज्जमनसिकाराश्चाविकला भवन्ति। ततः सर्वसमवायाच्चक्षुर्विज्ञानस्योत्पत्तिर्भवति॥ तत्र चक्षुषो नैवं भवति ' अहं चक्षुर्विज्ञानस्याश्रयकृत्यं करोमीति। रूपस्यापि नैवं भवति ' अहं चक्षुर्विज्ञानस्यारम्बणकृत्यं करोमीति। आलोकस्यापि नैवं भवति। अहमवभासकृत्यं करोमीति। आकाशस्यापि नैवं भवति ' अहं चक्षुर्विज्ञानस्यानावरणकृत्यं करोमीति। तज्जमनसिकारस्यापि नैवं भवति ' अहं चक्षुर्विज्ञानस्य समन्वाहारकृत्यं 15
करोमीति। चक्षुर्विज्ञानस्यापि नैवं भवति ' अहमेभिः प्रत्ययैर्जनित इति। अथ च पुनः सत्स्वेषु प्रत्ययेषु चक्षुर्विज्ञानस्योत्पत्तिर्भवति प्रादुर्भावः। एवं शेषाणामिन्द्रियाणां यथायोगं कर्तव्यं॥ तत्र न कश्चिद्धर्मो ऽस्माल्लोकात्परं लोकं संक्रामति। अस्ति च कर्मफल-

---

1) *°baddham* B.

2) This word, attested by the Tib. མཁའ་དང་མཚུངས་ has been mutilated by the copyist of the text of B.; cf. Poussin p. 311, n. 1.

3) The text from here down to *kartavyam*, l. 18 below omitted by the *peyālam* of B. p. 311.1.

4) *āvaraṇahetutvam* marg.; v. infra.

5) *asamanvāhāra* occurs in Divyāvad.; the present noun-form is new, though the verb is common in Buddh. Sk.

प्रतिविज्ञप्तिः ।[(1)] हेतुप्रत्ययानामवैकल्यात् । यथा[103 a]ग्निरुपादानवैकल्यान्न ज्व-
लति। एवमेव[(2)] कर्मक्लेशजनितं विज्ञानबीजं तत्र तत्रोत्पत्त्यायतनप्रतिसन्धौ मातुः कुक्षौ
नामरूपाङ्कुरमभिनिर्वर्तयति । अस्वामिकेषु धर्मेष्वममेष्वपरिग्रहेष्वप्रत्यर्थिकेष्वाकाशसमेषु
मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात्॥[(3)] तत्राध्यात्मिकः प्रतीत्यसमुत्पादः पञ्च-
5 भिः कारणैर्द्रष्टव्यः॥ कतमैः पञ्चभिः। न शाश्वततो नोच्छेदतो न संक्रान्तितः। परीत्तहेतु-
तो विपुलफलाभिनिर्वृत्तितस्तत्सदृशानुप्रबन्धतश्चेति ॥ कथं न शाश्वततः । यस्मादन्ये
मारणान्तिकाः स्कन्धा अन्य औपपत्त्यंशिकाः। न तु य एव मारणान्तिकाः स्कन्धास्त एवौ-
पपत्त्यंशिकाः स्कन्धा।[(4)] अपि तु मारणान्तिकाश्च स्कन्धा निरुध्यमाना औपपत्त्यंशिकाः
स्कन्धाश्च[(4)] प्रादुर्भवन्ति। अतो न शाश्वततः॥ कथं नोच्छेदतः। न च निरुद्धेषु[(5)] स्कन्धेषु
10 औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति नाप्यनिरुद्धेषु। अपि तु मारणान्तिकाश्च स्कन्धा
निरुध्यन्ते औपपत्त्यंशिकाश्च प्रादुर्भवन्ति । तुलादण्डोन्नामावनामवत्। अतो नोच्छेदतः॥

[कथं न संक्रान्तितः][(6)]। विसदृशात्सत्त्वनिकायाद्धि सभागाः[(7)] स्कन्धा जात्यन्तरे ऽभिनि-
र्वर्तन्ते । अतो न संक्रान्तितः॥ [(8)][कथं परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः][(8)] परीत्तं कर्म

1) *asti ca karmaphalam asti ca vijñaptir hetu°* B.

2) So B., supported by Tib. (141. b. 5); *evam ekakarma°* A.

3) Here B. adds: *evam ādhyātmikasya pratītyasamutpādasya pratyayopanibandho drastavyaḥ*, for which the Tib. has no equivalent. In the next sentence I have added *ādhyātmikaḥ* from B. confirmed by Tib. ནང་གི་ (141. b. 7).

4) . . . 4) This passage is omitted by B., but rendered in the Tib. (142. a. 2).

5) *pūrvani°* B.

6) Inserted from B. and Tib. (འཕོ). *Saṃkrānti* 'transition' [of the *pudgala* from one world to another] gave its name to a Buddhistic school, according to Wassiljev 232 (256).

7) *shabhā°* A. My correction is founded on the Tib. (142 a. 4) སྐལ་པ་མཉམ་པ་ and on the reading of B.: *°yād visabhāgāḥ*, which must be corrected similarly. *ddhi* and *dvi* are very easily confused in Nepalese MSS. The clause in M. runs: *visadṛçāḥ sattvanikāyāḥ sabhāgatāyāṃ satyāṃ jātim abhinirvartayati (°anti?).*

8) . . . 8) Sic Tib. B.



क्रियते । विपुलः फलविपाकोऽनुभूयते । अतः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तिः॥
[कथं तत्सादृशानुप्रबन्धतः[(1)]।] यथा वेदनीयं कर्म क्रियते। तथा वेदनीयो विपाकोऽनुभूयते।
अतस्तत्सदृशानुप्रबन्धतश्चेति ॥[(2)] यः कश्चिद्भदन्त शारिपुत्रेमं प्रतीत्यसमुत्पादं भगवता
सम्यक्प्रणीतमेवं यथाभूतं सम्यक्प्रज्ञया सततसमितमजीवं निर्जीवं[(3)] यथावदविपरीतमजा-
तमभूतमकृतमसंस्कृतमप्रतिघमनावरणं शिवमभयमहार्यमव्ययम[(4)]व्युपशमस्वभावं पश्य- 5
ति। असत्यतस्तुच्छत रिक्ततो[(5)] ऽसारतो ऽघतो ऽनित्यतो दुःखतः शून्यतो ऽनात्मतश्च
समनुपश्यति । स न पूर्वान्तं प्रतिसरति । किमहमभूवमतीते ऽध्वन्याहो स्विन्नाभूवमती-
तेऽध्वनि। को न्वहमभूवमतीतेऽध्वनि॥ अपरान्तं वा पुनर्न प्रतिसरति । किं नु भविष्या-
म्यनागतेऽध्वन्याहो स्विन्न[(6)] भविष्याम्यनागतेऽध्वनि । को नु भविष्यामीति । प्रत्युत्पन्नं
वा पुनर्न प्रतिसरति। किं स्विदिदं कथं स्विदिदं। के सन्तः के भविष्या[103 b]म इति॥[(7)] 10

आर्यदशभूमकेऽप्युक्तं। तत्राविद्यातृष्णोपादानं च क्लेशवर्त्मनो ऽव्यवच्छेदः। संस्कारा
भवश्च कर्मवर्त्मनो ऽव्यवच्छेदः। परिशेषं दुःखवर्त्मनो ऽव्यवच्छेदः। अपि तु खलु पुन-

1) Sic M. B.

2) Here the quotation ends in B. In M., though the opening phrase of the next chapter (Ch. 17, p. 213.5) contains a reminiscence of the following sentence, the quotation is only resumed at the end of the whole work (p. 222.7). The following passage has been collated with a MS. of the Madhy.-vṛitti (Cambr. Add. 1483) called M².

3) *ājīvaṃ nirjīvam* A. with margial gloss *nirātmakam*; but the Tib. has merely སྲོག་མེད་པ་དང་སྲོག་དང་བྲལ་བ་ (142. a. 7) 'without life and bereft of life'; and our reading is confirmed by M. (222.8).

4) So M.; the letters are nearly eaten away in our MS., but the Tib. མི་ཟད་པ makes the reading certain.

5) *°tā 'sārato* M².

6) *çvid* A. hic et infra.

7) In the Tib. the question is somewhat extended, corresponding to the text of the Çālistamba as quoted in M. and M² (= Cambridge MS. of Madhy-vṛ.) *kva santaḥ । kva bhavishyāmaḥ । ayaṃ satvaḥ kuta āgataḥ sa itaḥ cyutaḥ [ityacyu° M.].*

र्यदुच्यते ऽविद्याप्रत्ययाः संस्कारा इति ' एषा पूर्वान्तिक्यपेक्षा[1] ॥ विज्ञानं यावद्वेदनेति ।
एषा प्रत्युत्पन्नापेक्षा । तृष्णा यावद्भव इति ' एषा ऽपरान्तिक्यपेक्षा ऽत ऊर्ध्वमस्य प्रवृत्ति-
रिति । पे ॥ तस्यैवं भवति ' संयोगात्संस्कृतं प्रवर्तते । विसंयोगान्न प्रवर्तते । सामग्र्याः
संस्कृतं प्रवर्तते । विसामग्र्या न प्रवर्तते । हन्त वयमेवं बहुदोषदुष्टं संस्कृतं विदित्वाऽस्य
संयोगस्यास्याश्च सामग्र्या व्यवच्छेदं करिष्यामो ' न चात्यन्तोपशमं सर्वसंस्काराणामधि-
गमिष्यामः सत्त्वपरिपाचनतायै ' इति ॥ इदं संक्षेपान्मोहशोधनं ॥

॥ इति शिक्षासमुच्चये चित्तपरिकर्मपरिच्छेदो द्वादशमः ॥ १२ ॥

## XIII.

## स्मृत्युपस्थानपरिच्छेदः त्रयोदशः ।

एवं कर्मण्यचित्तः स्मृत्युपस्थानान्यवतरेत्[2] ॥
तत्राशुभप्रस्तावेन[3] कायस्मृत्युपस्थानमुक्तम् ॥

तदेव च भेदलेशेन धर्मसंगीतिसूत्रे ऽभिहितं ।[4] पुनरपरं कुलपुत्र बोधिसत्त्व एवं काये
स्मृतिमुपस्थापयति[5] । अयं कायः पादपादाङ्गुलिजङ्घोरुत्रिकोदरनाभिपृष्ठवंशहृदयपार्श्वपा-
र्श्वका[6]हस्ततकलाचीबाह्वंशग्रीवाहनुललाटशिरःकपालमात्रसमूहः कर्मभवकारकोपचितो



नानाक्लेशसंकल्पविकल्पशतसहस्राणामावासभूतो[1] ' बहूनि चात्र द्रव्याणि समवहिता-
नि ' यदुत[2] ' केशरोमनखदन्तास्थिचर्मपिशितवपास्नायुमेदोवशालसीकायकृन्मूत्रपुरीषा-
माशयरुधिरखेटपित्तपूयसिङ्घाणकमस्तकलुङ्गानि ' एवम्बहुद्रव्यसमूहः । तत्कोऽत्र का-
यः । तस्य प्रत्यवेक्षमाणस्यैवं भवति ' आकाशसमो ऽयं कायः ' स आकाशवत् काये स्मृ-
तिमुपस्थापयति । सर्वमेतदाकाशमिति पश्यति । तस्य कायपरिज्ञानहेतोर्न भूयः क्वचि-
त्स्मृतिः प्रसरति । न विसरति ' न प्रतिसरतीति ॥

पुनरुक्तं । अयं कायो न पूर्वान्तादागतो ' न परान्ते संक्रान्तो न पूर्वान्तापरान्तावस्थितो
ऽन्यत्रासद्वि[104 a]पर्याससंभूतः कारकवेदकरहितो नाद्यन्तमध्ये प्रतिष्ठितमूलः ' अस्वा-
मिकः[3] ' अममः ' अपरिग्रहः '[3] आगन्तुकैर्व्यवहारैर्व्यवह्रियते काय इति देह इति भोग
इति आश्रय इति शरीरमिति कुणप इति आयतनमिति । असारको ऽयं कायो मातापि-
तृशोणितशुक्रसंभूतो ऽशुचिपूतिदुर्गन्धस्वभावो रागद्वेषमोहभयविषादतस्कराकुलो नित्यं
शतनपतनभेदनविकिरण[4]विध्वंसनधर्मा ' नानाव्याधिशतसहस्रनीत इति ॥

आर्यरत्नचूडे ऽप्याह । अनित्यो बतायं कायो ऽचिरस्थितिको मरणपर्यवसान इति
ज्ञात्वा न कायहेतोर्विषमया[5] जीवति । सारं चैवादत्ते । स त्रीणि साराण्यादत्ते । कतमानि

---

1) A new form, but attested by the Tib. སྔོན་གྱི་མཐའ་ལ་བལྟོས་པ་ (142. b. 5).

2) The present chapter follows the regular four-fold division of the subject; cf. Dh.-s. § 44 and to the authorities there quoted (p. 44) add the Pali sutta on the subject (Mahāsatipatthāna-s., Dīghan. № 22; tr. Warren, 353 sq. = Majjh-n. № 10 (i. p. 55 ed. P.T.S).

3) °*bhāpra*° MS; Tib. མི་སྡུག་པའི་སྐབས་ནས་

4) The two following extracts occur also in Bodhic. ṭīkā IX. pp. 324-5.

5) *kāyasmṛ* B-ṭ. (but see p. 401 note).

6) So MS.; *pārṣukā* (?) B-ṭ.; cf. Poussin's note 7. The Tib. translates *pārçva-pārçvakā* རྩིབ་ལོགས་དང་། སོག་པ་ (143 a 4): 'rib and scapula'; but in the Buddh. Trigl. f. 33 b *pārçvikaḥ* (*m*) is rendered རྩིབ་མ 'rib'. *pārçvakā* as a fem. though irreg. in form is supported by the Pali *phāsukā*. But taking into account the similarity of *çva* and *çu* in MSS., *pārçukā* seems to me a probable reading, though Senart (Mhv. II. 520) appears to object to the byform *părçukā* which is better attested.

---

1) *āvāso* B-ṭ.

2) This list differs somewhat from the similar series at 209. 8 supra. It begins and ends like the Pali list there cited, and like it consists of 32 numbers.

3) . . . 3) cf. 225. 4. supra.

4) *vikaraṇa* MS.; but cf. Tib. རྣམ་པར་ཐོར་བ (143. b. 5), and Divyāv. 180. 23 and 281. 30 where the compound is closely similar.

5) So MS. Read *vishamatayā* (cf. Divy. 384. 19)? Tib. མི་མཐུན་པའི་འཚོ་མི་སྤྱོད་ 'does not lead a life of inharmoniousness'.

त्रीणि। कायसारं भोगसारं जीवितसारं च। सो ऽनित्यः काय इति सर्वसत्त्वानां दासत्व-
शिष्यत्वमभ्युपगम्य किङ्करणीयतापि उत्सुको भवति। अनित्यः काय इति सर्वकाय दोष-
वङ्क[1]शाठ्यकुहनां न करोति। अनित्यः काय इति जीवितेनाश्वासप्राप्तो जीवितहेतोरपि
पापं कर्म न करोति। अनित्यः काय इति भोगेषु तृष्णाध्यवसानं न करोति। सर्वस्वप-
5 रित्यागीव भवतीति॥ पुनरपरं कुलपुत्र बोधिसत्त्वः काये कायानुदर्शनस्मृत्युपस्थानं[2] भा-
वयन् सर्वसत्त्वकायांस्तत्र स्वकाय उपनिबध्नाति। एवं चास्य भवति। सर्वसत्त्वकाया मया
बुद्धकायप्रतिष्ठानप्रतिष्ठिताः कर्तव्याः। यथा च तथागतकाये[3] नास्रवस् तथा स्वकायधर्म-
तां प्रत्यवेक्षते। सो नास्रवधर्मताकुशलः सर्वसत्त्वकायानपि तल्लक्षणानेव प्रजानाती-
त्यादि॥

10 वीरदत्तपरिपृच्छायामप्युक्तम्[4]। यदुतायं कायो ऽनुपूर्वसमुदागतो ऽनुपूर्वविनाशो पर-
माणुसंचयः शुषिर उन्नामावनामी नवव्रण[5]मुखरोमकूपस्रावी वल्मीकवदाशीविषनिवासः'
अज्ञातशत्रुः[6]' मर्कटवन्मित्रद्रोही' कुमित्रवद्विसंवादनात्मकः। फेनपिण्डवत्प्रकृतिदुर्ब-
लः। उदकबुद्बुद[7]वदुत्पन्नभग्नविलीनः' मरीचि[7]वद्विप्रलम्भात्मकः' कदलीवन्निर्भुज्यमाना-
सारकः[8]' मायावद्वञ्चनात्मकः' राजवदाज्ञाबहुलः' शत्रुवदवतारप्रेक्षी' चोरवदविश्वस-
15 नीयः। वध्यघातकवदननुनीतः[9]। अमित्रवदहितैषी। वधकवत् [104 b] प्रज्ञाजीवितान्त-

---

1) Senart, Mhv. i. 450.

2) ལུས་ཀྱི་རྗེ་སུ་ལྟ་བ་ *anudarçana* (with *falsa lect.* °*nā*) is added in marg.

3) *kāyo* MS.

4) Cf. 34. 16 supra.

5) Cf. the *navadvāro mahāvaṇo* of the verse cited in Mil. 74. 16; *navadvāra* of the body is pre-Buddhistic.

6) The Tib. appears to have read °*çatror markaṭa*°.

7) . . . 7) These two similes occur together at Dhammap. st. 170; cf. Buddhaghosa ad loc. (Fausb. p. 336).

8) *mānushye kadalistambhaniḥsāre . . jalabudbudasannibhe* Yājñ. III. 8.

9) Read probably *anunītaḥ* Tib. རྗེ[ས]སུ་ཆགས་པ་མེད་པ་ 'quite void of love' (144 b 7).



रायकरः' शून्यग्रामवदात्मविरहितः' कुलालभाण्डवद्भेदनपर्यन्तः' मूतोडीव[1]न्नानाशुचिप-
रिपूर्णः' मेदकस्थालीवदशुचिस्रावी॥ पे॥ व्रणवद्घट्टनासहिष्णुः' शल्यवत्तुदनात्मकः[2]'
जीर्णगृहवत्प्रतिसंस्कारधार्यः। जीर्णयानपात्रवत्प्रतिसंस्कारवाह्यः। आमकुम्भवद्यत्ना-
नुपाल्यः॥ पे॥ नदीतटवृक्षवच्चलाचलः' महानदीस्रोतोवन्मरणसमुद्रपर्यवसानः' आगन्तु-
कागारवत्सर्वदुःखनिवासः' अनाथशाला[3]वदपरिगृहीतः' चारकपालवदुत्कोचसाध्यः॥ 5
पे॥ बालदारकवत्सततपरिपाल्यः॥

पुनराह।

एवंविधं कायमचौक्षराशिं' रूपाभिमानो बहु मन्यते यः।
प्रजायमानः स हि बालबुद्धिः विष्ठाघटं याति[4] वहन्विचेताः॥
पूयप्रकारं वहतेऽस्य नासा' वक्त्रं कुगन्धं वहते सदा च। 10
चिक्का[5]स्तथाक्ष्णोः क्रिमिवच्च जन्तोः' कस्तत्र रागो बहुमानता वा॥
अङ्गारमादाय यथा हि बालो' घृष्येदयं यास्यति शुक्लभावम्।
याति क्षयं नैव तु शुक्लभावं बालस्य बुद्धिर्वितथाभिमाना॥
एवं हि यः चौक्षमतिर्मनुष्यः चौक्षं करिष्येऽहमिदं शरीरम्।
सूद्वर्तितं तीर्थशताभिषिक्तं याति क्षयं मृत्युवशादचौक्षम्[6]॥ 15

---

1) See p. 210, note 3.

2) Cf. S. Paul's σκόλοψ τῇ σαρκὶ ἵνα . . κολαφίζῃ 2 Cor. xii. 7.

3) The Kāçikā on Pāṇ. II. 4. 24 cites without explanation the forms *anāthasabhā* and *anāthakuṭī*, which would seem to be analogous.

4) *jāti* MS.; but Tib. (144. b, 5) འགྲོ

5) Cf. B² and Apte s. v. *cikkaṇa*. चिपका occurs in Marathi in the sense of the 'gum' of the eyes; and the Chinese version of the sūtra (as Mr. Watters tells me) speaks of 'bleared eyes' in this passage.

6) The original sūtra, as Mr. Watters informs me from an examination of the Chinese version, passes at this point into prose, and gives a list of 44 ways of regarding the body.

तथा प्रभङ्गुरः[1]। प्रस्रवन्बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यो नव व्रणमुखैर्यावत्। आ-
वासो बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यः ' अशीतिक्रिमिकुलसहस्राणाम्॥ पे॥[2] परभोजनो
बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यः ' वृकशृगालश्वपिशिताशिनां। यन्त्रोपमो बोधिसत्त्वेन
कायः प्रत्यवेक्षितव्यः ' अस्थिस्नायुयन्त्रसंघातविनिबद्धः। अस्वाधीनो बोधिसत्त्वेन कायः
5 प्रत्यवेक्षितव्यः अन्नपानसंभूत[3] इति विस्तरः॥

तत्रैव ज्ञेयं। वेदनास्मृत्युपस्थानं तु यथा तावदार्यरत्नचूडसूत्रे[4]। इह कुलपुत्र बोधि-
सत्त्वो वेदनासु वेदनानुपश्यनास्मृत्युपस्थानं भावयन् वेदितसुखाश्रितेषु सत्त्वेषु महाकरुणां
प्रतिलभते। एवं च प्रतिसंशिक्षते[5]। तत्सुखं यत्र वेदितं नास्ति स सर्वसत्त्ववेदितप्रहाणाय
वेदनासु वेदनास्मृत्युपस्थानं भावयति। वेदितनिरोधाय च सत्त्वानां संनाहं संनह्यति।
10 आत्मना च वेदि[105 a]तनिरोधं नार्पयति ' स यां कांचिद्वेदनां वेदयते तां सर्वां महाकरु-
णापरिगृहीतां वेदयते ' स यदा सुखां वेदनां वेदयते तदा रागचरितेषु सत्त्वेषु महाकरुणां
प्रतिलभते आत्मनश्च रागानुशयं[6] प्रतिजहाति। यदा दुःखां वेदनां वेदयते तदा द्वेषचरितेषु
सत्त्वेषु महाकरुणां प्रतिलभते आत्मनश्च दोषानुशयं प्रजहाति। यदा ऽदुःखासुखां वेदनां
मोहचरितेषु सत्येषु महाकरुणां प्रतिलभते ' आत्मनश्च मोहानुशयं प्रजहाति। स सुखायां
15 वेदनायां नानुनीयते ' अनुनयसमुद्घातं[7] चार्जय[8]ति। दुःखायां वेदनायां न प्रतिहन्यते प्रति-

1) This form is cited by B. & R. from [M.-] Vyutp. In Mhv. III. 338. 1 Senart prefers (cf. contra varr. lectt., p. 337 ad fin.) the form *prabhaṅguṇa*' comparing Pali *pabhaṅguṇa* (also °*ṅgu*).

2) This indicates the passing over of fourteen similitudes (nos. 16-28) in the original list.

3) This similitude, which recalls the famous «man ist was man isst» is no. 32 only in the full list.

4) With this extract compare and contrast (in respect of Mahāyāna-teaching) M. Satipp. s. § 17 = Majjh. i. 59.

5) For the *parasmaip.* v. Mhv. II. 314. 16.

6) བག་ལ་ཉལ་བ, cf. Wassiljev p. 241 (265) n. 2 'propensity', as in Pali.

7) 'Removal' as in Pali, M. Vyutp. 82. 6.

8) °*ārpyayati* MS., a sec. m.



घसमुद्घातं चार्जय[1]ति। अदुःखासुखायां वेदनायां नाविद्यागतो भवति ' अविद्यासमुद्घातं
चार्जयति। स यां काञ्चिद्वेदनां वेत्ति सर्वां तामनित्यवेदितां वेत्ति ' सर्वां तां दुःखवेदितां
वेत्ति ' अनात्मवेदितां वेत्ति। स सुखायां वेदनायामनित्यवेदितो भवति ' दुःखायां
वेदनायां शल्यवेदितो भवति ' अदुःखासुखायां वेदनायां शान्तिवेदितो भवति। इति हि
यत्सुखं तदनित्यं यद्दुःखं सुखमेव तत्। यददुःखासुखं तदनात्मकमित्यादि॥ 5

आर्याक्षयमतिसूत्रेऽप्युक्तं। दुःखया वेदनया स्पृष्टः सर्वपापाक्षणोपपन्नेषु सत्त्वेषु महा-
करुणामुत्पादयति॥ पे॥[2] अपि तु खलु पुनरभिनिवेशो वेदना परिग्रहो वेदनोपादानं
वेदनोपलम्भो वेदना विपर्यासो वेदना विकल्पो वेदनेत्यादि॥

धर्मसंगीतिसूत्रेऽप्युक्तं॥

[3]वेदनानुभवः प्रोक्तः ' केनासावनुभूयते। 10
वेदको वेदनादन्यः[4] पृथग्भूतो न विद्यते॥
एवं स्मृतिरुपस्थेया वेदनायां विचक्षणैः।
यथा बोधिस्तथा ह्येषा शान्ता शुद्धा प्रभास्वरा[5]॥

एतत्समासतो वेदनास्मृत्युपस्थानम्॥

चित्तस्मृत्युपस्थानं तु यथार्यरत्नकूटे[6]। स एवं चित्तं परिगवेषते[7] ' कतरत्तु चित्तं। 15
रज्यति वा दुष्यति वा मुह्यति वा[8] ' किमतीतमनागतं[8] प्रत्युत्पन्नं वेति। तत्र यदतीतं

1) *aryayati* MS.; see below.
2) This clause is also quoted in Bodhic.·ṭīkā (IX.) 336. 3.
3) Cf. Bodhic.-ṭ., ibid.
4) *vedanā vedyā* Bṭ.; but our reading is supported by the Tib. (145 b. — 146). For *vedanād* (masc. or neutr.) comp. Mhv. III. 448. 13 (var. lect.) and the Pali *vedanam*.

5) *svabhāvataḥ* Bṭ.; but Tib. འོད་གསལ་.

6) This extract is quoted in Bodhic. ṭikā 338. 3 sqq. with the introductory phrase *Āryaratnakūṭādishv abhihitam*, as if to mark a quotation from a sūtra of the Ratnakūṭa-class, possibly the Ratnacūḍa.. See p. 235 note 1 below.
7) *gavesh*° Bṭ.
8) *cittaṃ sarāgaṃ* . . . *sadosaṃ* . . . *samohaṃ*. M. Satipp. s. § 18; Majjh. i, 59 ad fin.

तत्क्षीणं । यदनागतं तदसंप्राप्तं ' प्रत्युत्पन्नस्य स्थितिर्नास्ति । चित्तं हि काश्यप नाध्या-
त्मं न बहिर्धा नोभयमन्तरेणोपलभ्यते । चित्तं हि काश्यपा[1]रूप्यमनिदर्शनमप्रतिघमविज्ञप्ति-
[1]कमप्रतिष्ठम[105 b]निकेतं । चित्तं हि काश्यप सर्वबुद्धैर्न दृष्टं ' न पश्यन्ति न द्रक्ष्यन्ति
यत्सर्वबुद्धैर्न दृष्टं । न पश्यन्ति न द्रक्ष्यन्ति ' कीदृशस्तस्य प्रचारो द्रष्टव्यः । अन्यत्र वित-
थपतितया संज्ञया धर्माः प्रवर्तन्ते । चित्तं हि काश्यप मायासदृशमभूतपरिकल्पनया[2] वि-
विधामुपपत्तिं[3] परिगृह्णाति ॥ पे ॥ चित्तं हि काश्यप नदीस्रोतःसदृशमनवस्थितमुत्पन्नभ-
ग्नविलीनं । चित्तं हि काश्यप दीपार्चिःसदृशं हेतुप्रत्ययतया प्रवर्तते । चित्तं हि काश्यप
विद्युत्सदृशं क्षणभङ्गानवस्थितम्[4] । चित्तं हि काश्यपाकाशसदृशमागन्तुकैः क्लेशैरुपक्लि-
श्यते[5] । पे ॥ चित्तं हि काश्यप पापमित्रसदृशं सर्वदुःखसंजननतया । पे । चित्तं हि काश्यप
मत्स्यबडिशसदृशं दुःखे सुखसंज्ञया । तथा नीलमक्षिकासदृशमशुचौ शुचिसंज्ञया । चित्तं
हि काश्यप प्रत्यर्थिकसदृशं[6] विविधकारणाकरणतया । चित्तं हि काश्यप ओजोहारयक्षसदृशं[7]
सदा विवरगवेषणतया ' एवं चोरसदृशं सर्वकुशलमूलमुषणतया । चित्तं हि काश्यप
रूपारामं पतङ्गनेत्रसदृशम् । चित्तं हि काश्यप शब्दारामं संग्रामभेरीसदृशं । चित्तं हि
काश्यप गन्धारामं वराह इवाशुचिमध्ये । चित्तं हि काश्यप रसारामं रसावशेषभोक्तृ-
चेटीसदृशं । चित्तं हि काश्यप स्पर्शारामं मक्षिकेव तैलपात्रे । चित्तं[8] हि काश्यप परिगवे-
ष्यमाणं न लभ्यते । यन्न लभ्यते तन्नोपलभ्यते । यन्नोपलभ्यते तन्नैवातीतं नानागतं न
प्रत्युत्पन्नं । यन्नैवातीतं नानागतं न प्रत्युत्पन्नं तत् त्र्यध्वसमतिक्रान्तं । यत्त्र्यध्वसमतिक्रान्तं
तन्नैवास्ति न नास्तीत्यादि ॥

1) . . . 1) M. Vyutp. § 101. 51-53. 76.
2) °panatayā Bṭ.
3) སྐྱེ་བ་ (re-)birth, as in Pali.
4) cf. Jñānaçrī ap. Sarvadarç. p. 15 (tr. Cowell p. 20).
5) *kleçopakleçair upalipyate* Bṭ.
6) རྒོལ་བ་ (146. b. 4) Pali *paccatthika* 'enemy'.
7) cf. Mhv. I. 253 1-3.
8) See also the somewhat abbreviated quotation in Madhy-vṛ. 11. 17.



आर्यरत्नचूडसूत्रे[1]ऽप्याह । स[2] चित्तं परिगवेषमाणो नाध्यात्मं चित्तं समनुपश्यति । न ब-
हिर्धा चित्तं समनुपश्यति । न स्कन्धेषु चित्तं समनुपश्यति । न धातुषु चित्तं समनुपश्य-
ति । नायतनेषु चित्तं समनुपश्यति । स चित्तमसमनुपश्यंश्चित्तधारां पर्येषते । कुतः चित्त-
स्योत्पत्तिरिति । तस्यैवं भवति आलम्बने सति चित्तमुत्पद्यते । तत्किमन्यदालम्बनम्[3] ।
अथ यदेवालम्बनं तदेव चित्तं । यदि तावदन्यदालम्बनमन्यच्चित्तं ' तद्द्वि[4]चित्तता भविष्य-
ति । अथ यदेवालम्बनं तदेव चित्तं । तत्कथं चित्तं चित्तं समनुपश्यति । न हि चित्तं चित्तं
समनुपश्यति । तद्यथा न तयैवासिधारया [106 a] सैवासिधारा शक्यते छेत्तुम् । न तेनैवा-
ङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं स्प्रष्टुं शक्यते । नैव चित्तेन तदेव चित्तं शक्यते द्रष्टुम् ॥ पे ॥ पुन-
रपरं कुलपुत्र यदुपद्रुतप्रद्रुतानवस्थितप्रचारस्य वानरमारुतसदृशस्य । पे ।[5] दूरंगमचा-
रिणो ऽशरीरस्य लघुपरिवर्तिनो विषयलोलस्य षडायतनगोचरस्यापरापरसंप्रयुक्तस्य
चित्तस्यावस्थानामेकाग्रता ऽशरणमविशरणं[6] शमथैकाग्रता ऽविक्षेप इयमुच्यते चित्तस्य स्मृ-
तिरिति ॥

1) This passage is quoted in Bodhic. ṭikā p. 261, where the °*ratnabhūta*° of La V.-Poussin's transcript (v. note 3) should probably be corrected to °*cūḍā*°. Though similar in style, as we see from the foregoing extract, the Ratnakūṭa and Ratnacūḍa are distinct works, and the latter is doubtless the same as the Ratnacūḍaparipṛcchā (cf. Abhidh.-koça ap. Poussin l. c.), though here called by the Tib. མདོ་ not ཞུས. It should however be noted that Ratnakūṭa is not only the name of one or more sūtras, but also of the division or class of sūtras to which the Ratnacūḍa belongs (K. F. 212—14, 218; Nanjio 23, 23(47)).
2) *svac*° Bṭ.
3) As to the spelling of this difficult word I have decided, since our text is composed of elements varying in their origin, to follow the MS. in each passage. The Tib. equivalent is unvarying, viz. དམིགས. The MSS. of the Mhv. give little help; see esp. I. 120. 10 and II. 260. 15 with the notes thereon. For the reading compare Tathāgataguhya-sūtra ap. Madhy-vṛ. pp. 128-9. At p. 129. 22 of that text read apparently: *evam evālambanataç cittaṃ jvalati ' anālambanataḥ çāmyati.*
4) *tadvi*° MS.; but cf. Bṭ. and Tib. (147. a. 6).
5) The Tib. (147. b. 1) preserves two further similes: of a river-current and of an oil-lamp.
6) So MS.; but Tib. མི་འགྲོ་བ། རྣམ་པར་མི་འགྲོ་བ་, as if from सरण. Cf. infra निःसर° 236, 7.

आर्याक्षयमतिसूत्रेऽप्युक्तं। विठपनायां मया योगः करणीयः[1]। इयं च चित्तधर्मता न विहातव्या। तत्र कतमा चित्तधर्मता। कतमा विठपना। मायोपमं चित्तमियमुच्यते चित्तधर्मता। यत्पुनः सर्वस्वं परित्यज्य सर्वबुद्धक्षेत्रपरिशुद्धये परिणामय[त]ीतीयमुच्यते विठपनेत्यादि ॥

5 धर्मस्मृत्युपस्थानं तु ॥

यथा तावद्[2]त्राह। धर्मे धर्मानु[3]दर्शी विहरन्बोधिसत्वो न कञ्चिद्धर्मं समनुपश्यति। यतो न बुद्धधर्मा यतो न बोधिः ' यतो न मार्गो ' यतो न निःसरणं। स सर्वधर्मानिःसरणामिति विदित्वा ऽनावरणं ना[4]म महाकरुणासमाधिं समाप[5]द्यते। स सर्वधर्मेषु सर्वक्लेशेषु च कृत्रिमसंज्ञां प्रतिलभते। निःक्लेशा एते धर्मा। नैते सक्लेशाः। तत्कस्य हेतोः। तथा

10 ह्येते नीतार्थे समवसरन्ति ' नास्ति क्लेशानां संचयो ' न राशीभावः ' न रागभावो न द्वेषभावो न मोहभाव ' एषामेव क्लेशानामवबोधाद्बोधिः। यत्स्वभावाश्च क्लेशास्तत्स्वभावा बोधिरित्येवं स्मृतिमुपस्थापयतीति ॥

आर्यरत्नचूडे ऽप्युक्तम्। इह कुलपुत्र बोधिसत्वस्य धर्मे धर्मानुपश्यना स्मृत्युपस्थानेन विहरत एवं भवति। धर्मा एवोत्पद्यमाना उत्पद्यन्ते। धर्मा एव निरुध्यमाना निरु-

15 ध्यन्ते ॥ न पुनरत्र कश्चिदात्मभावे सत्वो वा जीवो वा जन्तुर्वा पोषो [6]वा पुरुषो वा पुद्गलो वा मनुजो वा यो जायते वा जीर्यते वा च्यवते वोत्पद्यते वा। एषा धर्माणां धर्मता ' यदि समुदानीयन्ते ' समुदागच्छन्ति। अथ न समुदानीयन्ते न समुदागच्छन्ति। यादृशाः समुदानी-

1) *ṇīyam* MS.

2) For *atraiva*; *i. e.* in the same sūtra དེ་ཉིད་ལས་. The same passage is quoted in Bodhic. ṭīkā (IX.) 339. 3-11.

3) °*ānupaçyī* Bṭ.

4) om. Bṭ.

5) *pratilabhate* Bṭ.

6) This form occurs in the similar enumeration at M. Vyutp. § 207.



यन्ते तादृशाः समुदागाच्छन्ति कुशला वा ऽकुशला वा [106 b] [1]अनिञ्ज्या वा। नास्ति धर्माणां समुदानेता। न चाहेतुकानां धर्माणां काचिदुत्पत्तिरित्यादि ॥

तत्रैवाह। स कियद्गम्भीरानपि धर्मान्प्रत्यवेक्षमाणस्तां सर्वज्ञताबोधिचित्तानुस्मृतिं न विजहाति ॥

आर्यललितविस्त[2]रसूत्रेऽप्युक्तम्। 5

[3]संस्कार अनित्य अध्रुवा आमकुम्भोपमभेदनात्मकाः।
परके[4]लिकयाचितोपमाः पांशुनगरोपमता च कालिका ॥
संस्कार प्रलोप धर्मिमे[5] वर्षकालि चलितं विलेप[6]नं।
नदिकूल [7]इवा सवालुकं प्रत्ययाधीन स्वभावदुर्बलाः ॥
[8]संस्कार प्रदीप अर्चिवत् क्षिप्रउत्पत्ति निरोधधर्मकाः। 10
अनवस्थितमारुतोपमाः फे[9]नपिण्डावदसारदुर्बलाः ॥

1) I preserve the ă of the MS. (cf. *ăniṅgya*) though in Mhv. *āniñja* and *āniñjya* occur as adj.

2) This extract has been collated with two Cambridge MSS., Add. 2195 (the oldest MS. known, called C) fol. 86. b. and Add. 2194 (D.) f. 83. c. It has also been compared with Foucaux's text (p. 158) and translation (p. 172), with the printed text (P.) p. 209. 2 and with the extracts in the Bodhic.-ṭīkā (Bṭ) 341.

3) Metre: Vaitālīya with the first syllable of the second *pāda* regarded as common (*āmăkūmbh*°, *sārvăsāmsk*°).

4) So C. P. *keraka* A. Tib. (148. b. 7) with which Foucaux's text agrees) རྫུས. Possibly the meaning is 'trick' or 'charm; 'la fortune empruntée à un autre' Foucaux.

5) i. e. *dharm' ime*; cf. p. 47, n. 4.

6) *lepane* A. After the caesura ‒⏑⏑⏑ for the more usual ⏑⏑⏑‒. *kāli tāñca lepanāṃ* C.

7) So all the MSS.

8) Compare Bodhic. ṭīkā 341. 15 sqq. (cf. p. 402).

9) Scan *phĕna*. The reading *phalapiṇḍa* in Mdhy.-vṛ. 205. 3, 10 cited by Poussin p. 402 is erroneous; cf. M.-Vyutp. p. 43, n. 2. A similar corruption (*phana*°) is found also in C.

संस्कार निरीक्ष शून्यकाः कदलीस्कन्धसमा निरीक्षतः[1] ।
मायोपम चित्तमोहना बालोल्लापनरिक्तमुष्टिवत्[2] ॥
[3]हेतूभि च प्रत्ययेभि वा सर्व संस्कारगतं प्रवर्तते ।
अन्योन्यप्रतीत्यहेतुतः तदिदं बालजनो न बुध्यते ॥
5 यथ मुञ्ज प्रतीत्य बल्बजं रज्जु व्यायामबलेन वर्तिता ।
घटियन्त्र सचक्र वर्तते तेष्वेकैकशु[4] नास्ति वर्तना ॥
तथ सर्वभवाङ्गवर्तनी[5] अन्योन्योपचयेन[6] निःश्रिता ।
एकैकशु तेष[7] वर्तनी पूर्वापरान्ततो[8] नोपलभ्यते ॥
बीजस्य[9] सतो[10] यथाङ्कुरो न च यो बीज[11] स चैव अङ्कुरो[12] ।
10 न च[13] अन्य ततो न चैव तत् ' एवमनुच्छेद अशाश्वत धर्मता ॥

---

1) So A. *a sec. manu*, a reading greatly preferable to that of Rāj. Mitra w(ith wh. C. agrees) or of Poussin, as it corresponds with the Tib. བརྟགས་ན «quand on l'examine».

2) See Poussin p. 341, n. 12. C.'s reading *-uktā* (for *riktā* or *ṛktā*) explains the origin of *ulkā* in P.

3) So rightly (for metre) C.; for lengthened *u* (in finals, however) compare p. 216, n. 8 above.

4) So A; for var. lectt. cf. Bṭ. C. with P.

5) All the MSS. have °*nī* (°*inī* C. Bṭ.), here and below, as contrasted with °*nā* above; cf. contra Poussin, p. 342, n. 2.

6) *anyamanyopa* C. P. Poussin's correction to °*ppacaya* is not supported by the Tib., wh. has ཚོགས་པ.

7) So A. C.; cf. Poussin p. 342, n. 1. *teshu* P. D.

8) ⏑⏑⏑ for ⏑⏑⏑ (normally ⏑⏑⏑; see above); scan *tatŏ* or read *tata* with C.; °*rāntanta* D. °*rāntaṃ* P.

9) The two following stanzas and also the three (239. 6-10) *cakṣuç ca*° are marked for omission (but not obliterated) in the MS. (A.), and are accordingly omitted in the transcript. Possibly their exclusion was due to some reader of the Bodh.-ṭīkā, where (with many others) they are omitted. Their omission is however not sanctioned by our Tib. version (148. b. 5), which agrees throughout with Foucaux's Tib. text of the Lal.-v. As to an omission in the Tib., see below, p. 240.

10) *sati syāt* marg.

11) *so vījasya* A.

12) *saṃkramas tu na cintyaḥ* marg.

13) All the texts of the Lal.-v. omit *anya*, and are otherwise corrupt. The



संस्कार अविद्यप्रत्ययाः ते च[1] संस्कार न सन्ति तत्त्वतः ।
संस्कार अविद्य चैवहि शून्य एते प्रकृती[2] निरीहकाः ॥
मुद्रात्प्रतिमुद्र दृश्यते मुद्रसंक्रान्ति न चोपलभ्यते ।
न च तत्र न चैव सान्यतो[3] एवं संस्कारनुच्छेदशाश्वताः[4] ॥
चक्षुश्च प्रतीत्य रूपतः[5] चक्षु[6] विज्ञानमिहोपजायते । 5
न च चक्षुषि रूपनिश्रितं रूपसंक्रान्ति न चैव चक्षुषि ॥
नैरात्म्यशुभाश्च[7] धर्मिमे ते[8] पुनरात्मेति शुभाश्च कल्पिताः ।
विपरीतमसद्विकल्पितं चक्षुविज्ञान[6] ततोपजायते ॥
विज्ञान[9] निरोधसंभवं विज्ञ उत्पादव्ययं[10] विपश्यति ।
[11]अकहिञ्चि गतमनागतं शून्य मायोपम[12] योगि पश्यति ॥ 10

---

above reading of A. is fully confirmed by the sense, and by the Tib. texts, which have: དེ་ལས་གཞན་མིན་དེ་ཡང་མ་ཡིན་ནོ. In the second pāda scan *ĕvam* (⏑⏑⏑⏑ for ⏑⏑⏑).

1) *tĕ; te saṃsk*° C. D. P.

2) So C.; cett. (contra metrum) °*tī*.

3) So A., Bṭ. (342. 4) and Tib.; all the Lal.-v. texts are corrupt.

4) The reading of Bṭ. *eva(ṃ) saṃskāra u(c)cheda çāçvatāḥ* is metrical justifiable, but is unsupported by the Tib., which implies *anucch*° and *a-çaçv*°. If the above reading be accepted, we must read and scan: *ĕvă(ṃ) saṃskār' ănŭ(c)ched' ăçāçv*°. The reading of C. D. °*saṃskārānu*° becomes thus the unmetrical correction of a scribe who did not understand the Pali-Prakritic elision.

5) *pratirūpataḥ sadā* A.

6) *cakshur* MSS.

7) i. e. *nairātmya-açubhāç ca* (cf. Tib.) *dharmā ime. dharmi ye* C. D. P.

8) Scan *tĕ* (⏑⏑⏑⏑ for ⏑⏑⏑). For this reading (confirmed by Tib.), C. D. P. have *na punar*°.

9) *na vijñāna virodh*° A.

10) *vijñānotpāda*° C. A.

11) *akahaṅgatam* A.

12) So A., with Tib.; C. D. P. have the corruption *yo vip*°.

अरणिं[1] यथ [107 a] चोत्तरारणिं हस्तव्यायामत्रयेभि संगतिं[1]।
इति प्रत्ययतो ऽग्नि जायते जातु कृतुकार्यु लघू[2] निरुध्यते ॥
अथ पण्डितु कश्चि मार्गते कुत यमागतु[3] कुत्र याति वा।
विदिशो दिशि सर्व मार्गतो न[4] गतिर्नाप्यगतिश्च लभ्यते ॥
5 स्कन्धायतनानि धातवः तृष्णा अविद्या[5] इति कर्मप्रत्ययाः।
सामग्रि तु सत्वसूचना सा च[6] परमार्थतु नोपलभ्यते[7] ॥
कण्ठोष्ठ प्रतीत्य तालुकं जिह्व परिवर्तिरवर्ति[8] अक्षरा।
न च कण्ठगता न तालुकैः अक्षरैकैक[9] तु नोपलभ्यते ॥
सामग्रिप्रतीत्यतश्च सा वाचमनबुद्धिवशेन निश्चरी।
10 मनवाच अदृश्यरूपिणी बाह्यतोऽभ्यन्तरि नोपलभ्यते ॥
उत्पादव्ययं विपश्यतो वाचरुतघोषस्वरस्य पण्डिताः।
क्षणिकां वशिकां[10] तदीदृशीं सर्ववाचः[11] प्रतिश्रुतकोपमाः ॥

1) . . . 1) Accusatives governed by *paçyati* in last stanza; unless *pratyayato* is to be understood as equivalent to *pratītya* in the similar passage below (l. 7).

2) *laghu* C. P.; °*ghur* Bṭ., corrected by Poussin to °*ghuṃ*. Cf. 216, n. 8.

3) *yam* for *ayam*; Tib. (both versions) འདི་ནི་ Poussin's *yo* = *vāyu* seems far-fetched.

4) So A.; *nāgati nāsya gatiç ca* C.P Bṭ The Tib. must have had some reading ***nāgatir*** (translated as if *na āgatir*) *nāpi gati*°.

5) *avidyă ti* Poussin, for metre; but *trīshṇă ăvī*° (–⏑⏑⏑) is not more irregular for ––⏑– than ⏑⏑⏑– noted above. With *vĭdy*° compare *ădv*° at 195. 16.

6) Poussin, omits this word for metre; but see last note.

7) At this point ends chapter XIII in our Tib. version; and also the citation from Lal.-v. in Bṭ.

8) *avartti* (omitted in defiance of metre by C. P.) apparently stands for *āvartate*. Foucaux: བྱུང་ 'naît'.

9) °*kas tu* MSS. P.

10) B² quotes the meaning 'empty' for this. Foucaux's Tib. translator appears to have read *kshaṇikā-rasikāṃ*.

11) *sarvārthāç ca* A.



यथ तन्त्रि[1] प्रतीत्य दारु च हस्तव्यायामत्रयेभि[2] संगतिम्।
तुणवीणसुघोषकादिभिः शब्दो निश्चरते तदुद्भवः ॥
अथ पण्डितु कश्चि मार्गते कुतो ऽयमागतु कुत्र याति वा।
विदिशो दिश सर्वमार्गतः शब्दमनागमनं न लभ्यते ॥
5 तथ हेतुभि प्रत्ययेभि च सर्वसंस्कारगतं प्रवर्तते।
योगी पुन भूतदर्शनात् शून्य संस्कार निरीह पश्यति ॥
स्कन्धायतनानि धातवः शून्यअध्यात्मिक शून्यबाह्यकाः।
सत्वात्मविविक्तनालयाः[3] धर्माकाशस्वभावलक्षणाः ॥

लोकनाथव्याकरणेऽप्युक्तम्[4] ॥

10 शून्या अनामका धर्माः नाम किं परिपृच्छसि।
शून्यता न क्वचिद्देवा न नागा नापि राक्षसाः ॥
मनुष्या वाऽमनुष्या वा सर्वे तु एष विद्यते।
नाम्ना हि नामता शून्या नाम्नि नाम न विद्यते ॥
अनामकाः सर्वे धर्माः नाम्ना तु परिदीपिताः ॥
15 यो हि स्वभावो नाम्नो वै न स दृष्टो न च श्रुतः।
न चोत्पन्नो निरुद्धो वा कस्य नामेह पृच्छसि ॥
व्यवहारकृतं नाम प्रज्ञप्तिर्नामदर्शिता।
रत्नचित्रो ह्ययं नाम्ना रत्नोत्तमपर इति ॥

॥ इति शिक्षासमुच्चये स्मृत्युपस्थानपरिच्छेदस्त्रयोदशः ॥

1) °*ntra* C. P. °*ntrī* A.
2) cf. note 21 supra.
3) *satvā viviktam anālayāḥ* C. D. P.; the Tib. (Foucaux, text 160. 13) implies a reading like ours, which must be understood: *sarv' ātmavivikt' anālayāḥ*.
4) This quotation is not reproduced in the Tib. version, in which the Chapter ends at the point above noted. The work now cited is apparently not known, unless it be identical with the original of K. F. p. 256, no. 3.

## XIV.

## आत्मभावपरिशुद्धिः परिच्छेदश्चतुर्दशः ॥

उक्तानि स्मृत्युपस्थानानि। एवं योग्यचित्तो[1] दशसु दिक्षु शेष[107 b]स्य जगतो दुष्ख-सागरोद्धरणाभिसंबोध्युपायो व्योमपर्यन्त[2]त्रैकाल्यसर्वधर्मवशवर्तित्वायैव तु पुनः सर्वधर्म-
5 शून्यताम[1]वतरेत्। एवं हि पुद्गलशून्यता सिद्धा भवति। ततश्च छिन्नमूलत्वात् क्लेशा न समुदाचरन्ति ॥

यथोक्तमार्यतथागतगुह्यसूत्रे[3]। तद्यथापि नाम शान्तमते वृक्षस्य मूलछिन्नस्य सर्वशा-खा पत्रपलाशाः[4] शुष्यन्ति। एवमेव शान्तमते सत्कायदृष्ट्युपशमात्सर्वक्लेशा उपशाम्य-न्तीति ॥

10 शून्यताभावनानुशंसास्त्वपर्यन्ताः ॥

यथा तावच्चन्द्रप्रदीपसूत्रे[5]।

सो ऽसौ शिक्ष[6] न जातु त्रशती[7] सुगतानां।
सोऽसौ शूरु न जातु इस्त्रिणां वशमेती।

---

1 ... 1) The Tib. (149.a.6) seems to imply a reading like *yogyacittatayā çūnyatām*, omitting the intervening and rather complicated phrase.

2) °*mā*.

3) This passage is also quoted in the Bodhic.-ṭīkā (IX.) 317. 21 and Mādhy.-vṛtti 129. 7.

4) So A. The word is both neuter (as in Skt.: cf. Bodhic.-ṭ., l. c., note 8) and masc. in Pali.

5) Metre ⏓––⏑⏑–⏑–⏑– | ⏑⏑–– || not identified, but corresponding with the first pāda of Upasthitapracupita. As to the sūtra see Tāranātha, tr. Schiefner, p. 156.

6) *sikshāsu* (?) marg. (gloss.).

7) Tib. འདོར 'reject'. qu. correct *trasyate*?



सो ऽसौ सासनि प्रीति विन्दते सुगतानां।
योऽसौ धर्मस्वभाव जानती सुप्रशान्तं ॥
सोऽसौ नेह चिरेण भेष्य[ति] द्विपदेन्द्रः।
सोऽसौ वैद्यभिषक्[1] भेष्यते सुखदाता।
5 सोऽसौ उद्धरि शल्य सर्वशो दुःखितानां[2]।
योऽसौ धर्मस्वभाव जानती सुप्रशान्तं ॥
सोऽसौ क्षान्तिबलेन उद्गतो नरचन्द्रः।
सोऽसौ लोष्टकदण्ड ताडितो न च कुप्यो।
सोऽसौ छिद्यति अङ्गमङ्गशो न च क्षुभ्यो[3]।
10 योऽसौ धर्मस्वभाव जानती सुप्रशान्तं ॥
नासौ दुर्गतिषू पतिष्यती अनुव्यञ्जन।
नित्यं लक्षणधारि[4] भेष्यती अभिरूपः।
पञ्च्यो[5] तस्य अभिज्ञ भाविता इमि नित्यं।
पुरतः सो सुगतान स्थास्यती स च शूर ' इत्यादि ॥

भगवत्यामप्युक्तं[6]। पुनरपरं शारिपुत्र बोधिसत्वेन महासत्वेन बुद्धकायं निष्पादयि- 15

---

1) So the MS. (which has been corrected here) against metre and sandhi. A short syllable such as *ca* has dropped out.

2) MS., as usual, *dushkh*°.

3) *kshubhī* or *kshusī* MS. The Tib., both here in and at the end of the previous line represents some form equivalent to *kshubhyati* — འཁྲུག་མི་འགྱུར.

4) *i.e. nityam anuvyañjana lakshaṇadhārī* The Tib. has (149.b.4) ། དེ་ནི་ནམ་ཡང་ངན་འགྲོར་སྐྱེ་བར་འགྱུར་མ་ཡིན། རྟག་ཏུ (= *nityaṃ*)°.

5) མངོན 'conspicuous' (149.b.5.). A derivative from √*pac* 'vyaktīkaraṇe' (Dhp.), a root not hitherto found uncompounded.

6) Compare the closely similar language of the extract from the Mahatī Prajñāpāramitā, f. 120a infra.

तुकामेन द्वात्रिंशन्महापुरुषलक्षणान्यशीतिं चानुव्यञ्जनानि प्रतिलब्धुकामेन सर्वत्र जा-
तौ जातिस्मरतां बोधिचित्ताविप्रणाशतां बोधिसत्त्वचर्याऽसंप्रमोषतां प्रतिलब्धुकामेन
सर्वपापमित्रपापसहायान् विवर्जयितुकामेन सर्वबुद्धबोधिसत्त्वकल्याणमित्राण्यारागयितु[1]-
कामेन सर्वमारमारकायिकदेवतानिर्जेतुकामेन सर्वावरणीयानि शोधयितुकामेन सर्वध-
5 र्मानावरणतां प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यं। पुनरपरं शारिपुत्र बोधिस-
त्त्वेन महासत्त्वेन ये दशसु दिक्षु बुद्धा भगवन्तस्तिष्ठन्ति ते मे वर्णं भाषेर[108 a]न्निति प्रज्ञा-
पारमितायां शिक्षितव्यं। पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेनैकचित्तोत्पादेन पूर्व-
स्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून्समतिक्रमितुकामेन। पे। एवं सर्वदिक्षु
प्रज्ञापारमितायां शिक्षितव्यमित्याद्यत्र विस्तरः॥

10 तत्र यथा निरात्मानश्च सर्वधर्माः' कर्मफलसंबन्धाविरोधश्च निःस्वभावता च यथा-
दृष्टसर्वधर्माविरोधश्चः' तथा पितृपुत्रसमागमे दर्शितम्। [2]षड्धातुरयं महाराज पुरुषः
षट्स्पर्शायतनः' अष्टादशमनउपविचारः। [3]षड्धातुरयं महाराज पुरुष इति। न खलु पुन-
रेतद्युक्तं। किं वैतत्प्रतीत्योक्तं[3] षडिमे महाराज धातवः। कतमे षट्। तद्यथा पृथिवीधा-
तुरब्धातुस्तेजोधातुर्वायुधातुराकाशधातुर्विज्ञानधातुश्च। इमे महाराज षड् धातवः॥ यावत्
15 षडिमानि महाराज स्पर्शायतनानि। कतमानि षट्। चक्षुः स्पर्शायतनं रूपाणां दर्शनाय।
श्रोत्रं स्पर्शायतनं शब्दानां श्रवणाय। घ्राणं स्पर्शायतनं गन्धारामाघ्राणाय। जिह्वा स्पर्शा-
यतनं रसानामास्वादनाय। कायस्पर्शायतनं स्प्रष्टव्यानां स्पर्शनाय। मनःस्पर्शायतनं धर्मा-
णां विज्ञानाय। इमानि च महाराज षट् स्पर्शायतनानि॥ पे॥ अष्टादशेमे महाराज मनउप-
विचाराः। कतमे ऽष्टादश। इह पुरुषश्चक्षुषा रूपाणि दृष्ट्वा' सौमनस्यदौर्मनस्योपेक्षास्थानी-
20 यान्युपविचरति। एवं श्रोत्रादिषु वाच्यं। तेन प्रत्येकमिन्द्रियषट्केन सौमनस्यादित्रयाणां

1) cf. 30. n. 3 supra, also Senart, Mhv. III. 472. The Tib. has མཉེས་པར་བྱ་བ་ 'to give pleasure to'.

2) This passage is cited in Bodhic.-ṭīkā ('B') 326 fin — 328.

3) . . . 3) The readings of B. are defective throughout these clauses.



भेदा[द][1]ष्टादश मनउपविचारा भवन्ति। पे। कतमश्च महाराजाध्यात्मिकः पृथिवीधातुः।
यत्किंचिदस्मिन्काये ऽध्यात्मं कक्खटत्वं[2] खरगतमुपात्तं। तत्पुनः कतमत्। तद्यथा। केशा
रोमाणि नखा दन्ता इत्यादि। अयमुच्यते ऽध्यात्मिकः पृथिवीधातुः॥ कतमश्च महाराज
बाह्यः पृथिवीधातुः। यत्किंचिद् बाह्यं कक्खटत्वं खरगतमनुपात्तमयमुच्यते बाह्यः पृथिवी-
धातुः। तत्र महाराजाध्यात्मिकः पृथिवीधातुरुत्पद्यमानो न कुतश्चिदागच्छति निरुध्य- 5
मानो न क्वचित्संनिचयं गच्छति। भवति महाराज स समयो [108 b] यत्स्त्री अध्यात्ममहं
स्त्रीति कल्पयति। साध्यात्ममहं स्त्रीति कल्पयित्वा बहिर्धा पुरुषं पुरुष इति कल्प-
यति। सा बहिर्धा पुरुषं पुरुष इति कल्पयित्वा संरक्ता सती बहिर्धा पुरुषेण सार्धं
संयोगमाकाङ्क्षते। पुरुषो ऽप्यध्यात्मं पुरुषो ऽस्मीति कल्पयतीति पूर्ववत्। तयोः संयोगा-
काङ्क्षया संयोगो भवति। संयोगप्रत्ययात्कललं जायते। तत्र महाराज यश्च संकल्पो[3] यश्च 10
संकल्पयिता' उभयमेतन्न संविद्यते। स्त्रियां स्त्री न संविद्यते। पुरुषे पुरुषो न संवि-
द्यते। इति ह्यसन्नसद्भूतः संकल्पो जातः। सो ऽपि संकल्पास्वभावेन न संविद्यते। यथा
संकल्पस्तथा संयोगो ऽपि कललमपि स्वभावेन न संविद्यते। यच्च स्वभावतो न संविद्यते
तत्कथं कक्खटत्वं जनयिष्यति। इति हि महाराज संकल्पं ज्ञात्वा कक्खटत्वं वेदितव्यं
[यथा][4] कक्खटत्वमुत्पद्यमानं न कुतश्चिदागच्छति। [5]निरुध्यमानं न क्वचित्संनिचयं गच्छ[5]- 15
तीति। भवति महाराज समयो यदयं कायः श्मशानपर्यवसानो भवति। तस्य तत्कक्खटत्वं
संक्लिद्यमानं निरुध्यमानं न पूर्वां दिशं गच्छति। न दक्षिणां' न पश्चिमां' नोत्तरां' नोर्ध्वं'
नाधो' न तु विदिशं गच्छति। एवं महाराजाध्यात्मिकः पृथिवीधातुर्द्रष्टव्यः। भवति महा-

1) supplied from B.

2) *khakkh°* Poussin, who compares the *kharatvam* of Pañcakrama I. 61 and M. Vyutp. ci. 6. Cf. ct. Mhv. I. 339. 16 (where both *kakkhaṭatva* and *kharatva* occur), Divy. 518. 2 (*khakkh°*) and Pali *kakkhaḷa* (Dh.-sṇi § 648). In non-Buddhistic Sanskrit the word appears to occur only in Harsha-c. (Thomas, JRAS. '99. p. 494).

3) *yaç ca saṃkalpate* B.

4) omitted in A.

5) . . 5) This clause is omitted in B. and Tib.

राज स समयो यदाकाशीभूते लोकसंनिवेशे ब्राह्मं विमानं संतिष्ठते महारत्नमयं । तन्महाराज वाक्खटत्वमुत्पद्यमानं न कुतश्चिदागच्छति । चक्रवाडमहाचक्रवाडाः संतिष्ठन्ते दृढाः सारा एकघना वज्रमयास्तेषामपि कक्खटत्वमुत्पद्यमानं न कुतश्चिदागच्छति । सुमेरवः पर्वतराजानो युगंधरा निमिंधरा ईशाधारा[1] यावत्कालपर्वताः संतिष्ठन्ते । सर्वश्च त्रिसाहस्रमहासाहस्रो लोकधातुः संतिष्ठते । चतुरशीतिर्योजनसहस्राण्युद्वेधेन[2] । मध्ये चाष्टषष्टिं योजनशतसहस्रं महापृथिवी संतिष्ठते । तदपि महाराज कक्खटत्वं समुदागच्छत्[3] कुतश्चिदागच्छति । भवति महाराज स समयो यदा ऽयं लोकः संवर्तते , तदेयं महापृथिवी [109 a] अग्निना वा दह्यते ऽद्भिर्वा क्लिद्यते वायुना वा विकीर्यते । तस्या अग्निना दह्यमानाया मषिरपि न प्रज्ञायते तद्यथा ऽपि नाम सर्पिषो वा तैलस्य वा ऽग्निना दह्यमानस्य न मषिर्न छायिका[4] प्रज्ञायते एवमेवास्यास्त्रिसाहस्रमहासाहस्राया लोकधातोरग्निना दह्यमानाया नैव मषिर्न छायिकावशिष्टा प्रज्ञायते । एवमद्भिर्लवणविलयवद्वायुना वैरम्भ[5]वाताभिहतशकुन्तवत्पृथिव्यां न किंचिदवशिष्टं प्रज्ञायत इति पठ्यते । तत्र महाराज पृथिवीधातोरुत्पादो ऽपि शून्यः व्ययो ऽपि शून्य उत्पन्नो ऽपि पृथिवीधातुः स्वभावशून्य । इति हि महाराज पृथिवीधातुः पृथिवीधातुत्वेन नोपलभ्यते ऽन्यत्र व्यवहारात् । सो ऽपि व्यवहारो न स्त्री न पुरुषः । एवमेवैतन्महाराज यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यं । तत्र कतमो ऽब्धातुः , यदिदमस्मिन् काये ऽध्यात्मं प्रत्यात्ममापः । अब्गतं , अप्त्वं स्नेहः । स्नेहगतं स्नेहत्वं द्रवत्वमुपगतमुपात्तं ॥ तत्पुनः कतमत् । तद्यथा । अश्रु[6] स्वेदः खेटः सिङ्घाणकं

1) The exact form seems doubtful. See M.-Vyutp. § 194. 5 and Minaev's crit. note ad loc. with the whole passage. Compare also Mhv. II. 300. 17—19 and Jāt. VI. 125. 13.

2) Mhv. I. 196. 2.; Pali *ubbedha*.

3) °*an* MS.

4) The form *chārikā* (from *kshāra*) occurs in Pali and at Mhv. II. 325. 9 (*mashiṃ chārikāṃ vā*) ubi varr. lectt. *cchāyi vā*, *cchā ikā vā*.

5) Divy. 105. 26. The Pali form is *Verambha* (Jāt. III. 255. 6 or (*si vera lect.*) °*ba* (ibid. III. 484. 10, 30). Cf. J. P. T. S. 1884. p.

6) Cf. 209. 9—11 supra.



वशा लसीका मज्जा मेदः पित्तं श्लेष्मा पूयः शोणितं क्षीरं प्रस्राव इत्यादिरयमुच्यते आध्यात्मिको ऽब्धातुः । पे ॥ भवति महाराज स समयो यत्प्रियं दृष्ट्वा ऽश्रु प्रवर्तते । दुःखेन चाभ्याहतस्य धर्मसंवेगेन वा ऽश्रु प्रवर्तते । वातेन वा ऽक्षि प्रस्यन्दते । यावत्स महाराजाब्धातुर्न कुतश्चिदागच्छति । भवति महाराज स समयो यदाध्यात्मिको ऽब्धातुः परिशुष्यति । स परिशुष्यन्निरुध्यमानो न क्वचिद्गच्छति । पे । विवर्तमाने खलु पुनर्लोके समन्ताद्द्वात्रिंशत्पटला अभ्रघनाः संतिष्ठन्ते संस्थाय सर्वावन्तः , त्रिसाहस्रमहासाहस्रं लोकधातुं छादयन्ति । यतः पश्चात्तरकल्पानीषाधारो[1] देवो वर्षति । एवं पञ्च गजप्रमेहो देवो वर्षति , पञ्चाच्छिन्नधारः , पञ्च स्थूलबिन्दुकः । तत इयं महापृथिवी यावद्ब्रह्मलोकादुदकेन स्फुटा भवति । स महाराज तावान्महानब्धातुरुत्पद्यमानो न कुतश्चिदागच्छति । भवति महाराज स समयो यदयं लोकः संवर्तते । संवर्तमाने खलु पुनर्लोके द्वितीयस्य[2] सूर्यस्य प्रादुर्भावो भवति । द्वितीयस्य सू[109 b]र्यस्य लोके प्रादुर्भावादुत्साः सरांसि कुनद्यश्च शुष्यन्ति । एवं तृतीयस्य महोत्सा महानद्यः । चतुर्थस्यानवतप्तं महासरः सर्वेण सर्वमुच्छुष्यति । चतुर्थस्य सूर्यस्य प्रादुर्भावान्महासमुद्रस्य योजनिकमप्युदकं परित्तयं पर्यादानं गच्छति । द्वियोजनिकमपि त्रिचतुःपञ्चदशविंशति-त्रिंशच्चत्वारिंशत्पञ्चाशद्योजनिकमपि यावच्चत्वारिंशद्योजनसहस्रमुदकमवशिष्टं भवति । यावद्द्वितालमात्रं , यावत्कण्ठमात्रं । यावद्गोष्पदमात्रमुदकमवशिष्टं भवति । भवति महाराज स समयो यन्महासमुद्रे पृथितपृथितान्यवशिष्टानि भवन्ति । पे ॥ भवति महाराज स समयो यन्महासमुद्रे ऽङ्गुलिस्नेह[3]मात्रमप्युदकं नावशिष्टं भवति । स महाराज तावानब्धातुर्निरुध्यमानो न क्वचिद्गच्छति । पे । तस्य खलु पुनर्महाराजाब्धातोरुत्पादो ऽपि शून्यः । व्ययोऽपि शून्यः तिष्ठन्नपि सोऽब्धातुः

1) Name of a Nāga in M. Vyutp. § 168. 24. The other names seem not to occur.

2) This passage is closely related to Aṅg.-n. VII. lxii. §§ 3—6 (PtIV. p. 100). Plurality of suns was a common notion from Vedic times onwards: cf. Ṛv. X. 88. 18 et al. ap. B. R. s. v. *sūrya*. Other parallels from Pali sources may be found in Minaev's article in Zap. IX. 213. 99.

3) The fluid in a finger-joint is probably meant. The Pali has *aṅgulipabbamattam . . . udakam*.

स्वभावशून्य इति हि महाराजाब्धातुरब्धातुत्वेनोपलभ्यते ऽन्यत्र व्यवहारमात्रात् । सो-
ऽपि व्यवहारो न स्त्री न पुरुषः पूर्ववत् ॥ ० ॥ आध्यात्मिकस्तेजोधातुः कतमः ॥ यत्कि-
ञ्चिदस्मिन्काये तेजस्तेजोगतमूष्म[1]गतमुपगतमुपात्तं । तत्पुनः कतमत् । येनायं काय आत-
प्यते संतप्यते । येन वास्यासितपीतखादितानि सम्यकसुखेन परिपाकं गच्छति । यस्य
चोत्सद[2]त्वाज्ज्वरितो ज्वरित इति संख्यां गच्छति ॥ पे ॥ बाह्यस्तेजोधातुः कतमः । यद्बाह्यं
तेजस्तेजोगतमूष्मगतमुपगतमुपात्तं ' तत्पुनः कतमत् । यन्मनुष्या अरणीसहगतेभ्यो ग[3]भ-
लसहगतेभ्यो वा गोमयचूर्णेन वा कार्पासपिचुनावासमन्वेषन्ते यदुत्पन्नं ग्राममपि दहति
ग्रामप्रदेशमपि दहति यावद्द्वीपं वा कक्षं तृणानां वा दावं वा काष्ठं वा यावद्दहन्पर्येती-
त्यादि । तत्र महाराजाध्यात्मिकस्तेजोधातुरुत्पद्यते न कुतश्चिदागच्छति निरुध्यमानो
न क्वचित्संनिचयं गच्छति । इति ह्यभूत्वा भवति भूत्वा च प्रतिविगच्छति स्वभावरहित-
त्वात् ॥ ० ॥ एवं यत्किञ्चिदस्मिन्काये वायुर्वायुगतं लघुत्वं समुदीरणत्वं ' तत्पुनः कतमत् ।
तद्यथा ऊर्ध्वंगमा वायवो ऽधोगमाः पार्श्वाशयाः पृष्ठाशयाः कुक्षिगमाः शस्त्रकाः [110 a]
क्षुरकाः सूचकाः[4] पिप्पलका वाताष्ठीला[5] वातगुल्मा आश्वासप्रश्वासा अङ्गानुसारिणो वा-
यव[6] इत्यादि । सन्ति बहिर्धा पूर्वे वायवो दक्षिणाः पश्चिमा उत्तरा वायवः सरजसः अरजसः
परीत्ता महद्गता[7] वायव इति । भवति महाराज स समयो यन्महावायुस्कन्धः[8] समुदागतः '

1) *shmāga*° MS., hic et infra.

2) 'Excess' Tib. (153. b. 3) ཁས་ཆེན་: cf. Mhv. II. 319. 21.

3) The original reading is indistinct. The middle syllable has been corrected in the margin to *rdū*. The Tibetan has རྩྭ་ 'grass'. *garmut* and *garmud* occur as plant-names, the former meaning also a kind of grass. *garalaṃ tṛṇapūle* occurs in Hemac.

4) Cf. *sūcibhir iva nistodaḥ* Suçr. Nid. I. 10 (on diseases from *vāta*).

5) °*tāṣṭh*° MS. See Suçr. Nid. I. 22. *ashṭhīlāvad ghanam . . . unnatam ' vātāshṭhīlāṃ vijānīyād.*

6) *vāpaya* MS.; but རླུང་དག་ Tib.

7) Divy. 227. 4; cf. Ch. s. v. *mahanto* ad fin.

8) *mahārājavāyusk*° MS.; but the Tib. has simply རླུང་གི་ཕུང་པོ་ཆེན་པོ་ (154. a. 3).



वृक्षाग्रानपि पातयति । कुड्यानपि पर्वताग्रानपि पातयति । पातयित्वा निरुपादानो विग-
च्छति । यं सत्वाश्चीवरकर्णिकेन[1] वा विधमनकेन[2] वातानुवृत्तने[3] वा पर्येष्यन्ते । यावदयमुच्यते
बाह्यो वायुधातुः । तस्याप्युत्पत्तिः पूर्ववत् ॥ ० ॥ आध्यात्मिक आकाशधातुः कतमः । य-
त्किञ्चिदस्मिन्काये ऽध्यात्मं प्रत्यात्ममुपगतमुपात्तमाकाशगतमिहाभ्यन्तरसंख्याभूतं '
अस्फुटमस्फरणीयं त्वङ्मांसशोणितेन । तत्पुनः कतमत् । यदस्मिन् काये चक्षुः सुषिरमि-[4]
ति वा यावन्मुखं वा मुखद्वारं वा कण्ठं वा कण्ठनाड्या वा येन चाभ्यवहरति यत्र चाव-
तिष्ठते । येन चास्याशितपीतखादितास्वादितमधस्तात्प्रघरति[5] । अयमुच्यत आध्यात्मिक
आकाशधातुः । एवं बाह्येऽपि यदस्फुटमस्फरणीयं रूपगतेनापलिगुद्धं सुषिरभावच्छिद्रं '
अयमुच्यते बाह्यः आकाशधातुः ॥ भवति महाराज स समयो यत्कर्मप्रत्ययादायतनानि
प्रादुर्भवन्ति तान्याकाशधातुं परिचारयन्ति । तत्र संख्या भवत्याध्यात्मिक आकाशधातुरि-
ति । स न कुतश्चिदागच्छति । भवति समयो यद्रूपं बिभर्ति सर्वमाकाशोभवति । तत्कस्य
हेतोः ' अक्षयो ह्याकाशधातुः स्थिरो ऽचलः । तद्यथा महाराजासंस्कृतो निर्वाणधातु[ः] '
एवमेवाकाशधातुः सर्वत्रानुगतो द्रष्टव्यः । तद्यथापि नाम महाराज पुरुष उत्थले देशे
उदपानं वा कुटकं[6] वा कूपं वा पुष्करिणीं वा खानयेत् । तत्किं मन्यसे महाराज यत्तत्रा-
काशः कुतस्तदागतमिति । आह । न कुतश्चिद्भगवन् । भगवानाह । तद्यथापि नाम महा-
राज स पुरुषः पुनरेव तदुदपानं वा यावत्पुष्करिणीं वा पूरयेत् । तत्किं मन्यसे महाराज
यत्तदाकाशं क्वचिद्गतमिति । आह । न क्वचिद्गतं भगवन् । तत्कस्य हेतोः ' न ह्याका-

1) Tib. གོས་ཀྱི་ཐ་མ་ 'the lower part of the robe' probably the lower hem or corner cf. Ch. s. v. *kaṇṇo* and Mahāvagga viii. 11. 1.

2) *bhastrādi* marg. Tib. སྦུད 'bellows'.

3) °*tānavṛ*° MS.

4) The form *çushira* predominates in the MS.

5) cf. Divyāv., Index.

6) Tib. རྫིང 'pond', a word used again for *pushkariṇīṃ*.

श[110b]धातुर्गमने वा आगमने वा प्रत्युपस्थितः। न स्त्रीभावेन न पुरुषभावेन प्रत्युपस्थितः। भगवानाह। इति हि महाराज बाह्याकाशधातुरचलः, अविकारः। तत्कस्य हेतोः, शून्यो ह्याकाशधातुराकाशधातुत्वेन, विरहित आकाशधातुराकाशधातुत्वेन। न पुरुषभावेन न स्त्रीभावेन प्रत्युपस्थितः। एवमेव यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यं ॥ ॥

तत्र कतमो विज्ञानधातुर्या चक्षुरिन्द्रियाधिपतेया। रूपारम्बणप्रतिविज्ञप्तिः। यावदिति[1] हि महाराज या काचिद्वर्णसंस्थानप्रतिविज्ञप्तिरयमुच्यते चक्षुर्विज्ञानधातुः। पे[2]। इति हि या षडिन्द्रियाधिपतेया षड्विषयारम्बणा विषयविज्ञप्तिरयमुच्यते विज्ञानधातुः। स खलु पुनरयं महाराज विज्ञानधातुर्नेन्द्रियनिश्रितो न विषयेष्व आगतो न मध्येऽन्तरस्थायी स नाध्यात्म बहिर्धा नोभयमन्तरेण। स खलु पुनरयं महाराज विज्ञानधातुर्वस्तु प्रतिविज्ञप्य निरुद्धः। स उ[त्प]द्यमानो न कुतश्चिदागच्छति निरुध्यमानो न क्वचिद्गच्छति। तस्य खलु पुनर्विज्ञानधातोरुत्पादोऽपि शून्यः। व्ययोऽपि शून्यः, उत्पन्नोऽपि विज्ञानधातुः स्वभावशून्यः। इति महाराज विज्ञानधातुर्विज्ञानधातुत्वेन शून्यो नोपलभ्यतेऽन्यत्र व्यवहारात्। सोऽपि व्यवहारो न स्त्री न पुरुषः, एवमेतद्यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यं॥ तत्र महाराज कतमच्चक्षुरायतनं। यच्चतुर्णां महाभूतानां प्रसादः[3]। तद्यथा पृथिवीधातोरब्धातोस्तेजोधातोर्वायुधातोर्यावत्, तत्र पृथिवीधातुप्रसादश्चक्षुरायतनं नाब्धातुप्रसादो न तेजोधातुप्रसादो न वायुधातुप्रसादश्चक्षुरायतनं। तत्कस्य हेतोः, न हि पृथिवीधातुप्रसादः कस्यचिद्धर्मायतनं वा आयतनप्रतिलम्भेन वा प्रत्युपस्थितः। एवं यावन्न वायुधातुप्रसादः कस्यचिद्धर्मस्यायतनं वा आयतनप्रतिलम्भेन वा प्रत्युपस्थितः। तत्कस्य

1) This expression denotes an abridgement of the text of the sūtra quoted as reproduced in the Tib., examples of colour (yellow, red, piebald) and condition (tall, short, thick, thin) being there given.

2) The passage omitted is an analogous one respecting perception by the ear (Tib. 155. a. 4—6).

3) Tib. དད་བ 'sphere', a usage not in lexx. SK. or Pali. But compare the parallel passage in Dh.-Sṇi. § 597: *kataman taṃ rūpaṃ cakkhāyatanaṃ? yaṃ cakkhuṃ catunnaṃ mahābhūtānaṃ upādāya pasādo.*



हेतोः, निश्चेष्टा ह्येते धर्मा निष्ठापारा निर्वाणसमा, इति हि महाराज एकैकतो धर्मान्मृग्यमाणान् चक्षुरायतनं नोपलभते[1] ऽन्यत्र व्यवहारात्। तत्कस्य हेतोः, शून्यो हि पृथिवीधातुप्रसादः पृथिवीधातुप्रसादेन। यावच्छून्यो वायुधातुप्रसादो वायुधातुप्रसादेन। ये च धर्माः स्वभावेन शून्याः [111a] कस्तेषां प्रसादो वा क्षोभो वा। येषां न प्रसादो न क्षोभ उपलभ्यते, कथं ते रूपं द्रक्ष्यन्ति। इति ह्यत्यन्ततया चक्षुरायतनं शून्यं चक्षुरायतनस्वभावेन तत्पूर्वान्ततो नोपलभ्यते॥ अपरान्ततोऽपि नोपलभ्यते। अनागमनतां गमनतां चोपादाय स्थानमप्यस्य नोपलभ्यते स्वभावविरहितत्वात्। यच्च स्वभावेन न संविद्यते। न तत् स्त्री न पुरुषः, तेन का मन्यना। मन्यना[2] च नाम महाराज मारगोचरः। अमन्यना बुद्धगोचरः। तत्कस्य हेतोः, मन्यनापगता[3] हि सर्वधर्माः। पे। तत्र महाराज कतमच्छ्रोत्रायतनं, यच्चतुर्णां महाभूतानां प्रसादो, यावदिति हि महाराज सर्वधर्मा विमोक्षाभिमुखा धर्मधातुनियता आकाशधातुपर्यवसाना अप्राप्तिका अव्यवहारा अनभिलाप्या अनभिलपनीयाः। यत्र महाराज इन्द्रियाणि प्रतिहन्यन्ते ते विषया इत्युच्यन्ते। चक्षुर्हि रूपे प्रतिहन्यते तस्माद्रूपाणि चक्षुर्विषया इत्युच्यन्ते। एवं श्रोत्रं शब्देष्वित्यादि। तत्र चक्षू रूपे प्रतिहन्यत इति निपातः। प्रतिहन्यना[4] तेषां निर्दिष्टा। तथा हि चक्षू रूपेषु त्रिविधं निपततीति। अनुकूलेषु शुभसंज्ञया, प्रतिकूलेषु प्रतिघसंज्ञया, नैवानुकूलेषु न प्रतिकूलेषूपेक्षया। एवं मनो धर्मेष्वित्यादि। त इमे विषया मनोगोचरा इत्युच्यन्ते। अत्र हि मनश्चरति, उपविचरति[5]। तस्मान्मनोगोचरा इत्युच्यन्ते। यदेतन्महाराज मनोऽप्रतिकूलेषु रूपेष्वनुनीतं चरति। तेनास्य राग उत्पद्यते। प्रतिकूलेषु रूपेषु प्रतिहतं चरति तेनास्य

1) *bhyate* MS.

2) Not in lexx., rendered སྙེམ་སེམས་ 'pride', or self-consciousness. The equivalent Pali *maññanā* is explained in Dh.-Sṇi § 1116.

3) Compare passages like 221. 5—10 supra.

4) This has somewhat the appearance of a word coined for the occasion; perhaps like *manyanā* above. For the meaning cf. the use of *paṭihan* in Dh.-Sṇi §§ 598 sqq.

5) Compound new to Skt., but cf. Pali *upavicāra*, Dh.-Sṇi § 8.

द्वेष उत्पद्यते। नैवानुकूलेषु न प्रतिकूलेषु संमूढं चरति। तेनास्य मोह उत्पद्यते। एवं शब्दादिष्वपि त्रिविधमारम्बणमनुभवति पूर्ववत्॥ तत्र महाराज मायोपमानीन्द्रियाणि ' स्वप्नोपमा विषयाः। तद्यथापि नाम महाराज पुरुषः सुप्तः स्वप्नान्तरे जनपदकल्याण्या स्त्रिया सार्धं परिचरेत्। स शयितविबुद्धो जनपदकल्या[111 b]णीं स्त्रियमनुस्मरेत्।
5 तत्किं मन्यसे महाराज संविद्यते स्वप्नान्तरे जनपदकल्याणी स्त्री। आह। नो हीदं भगवन्। भगवानाह। तत्किं मन्यसे महाराजापि नु स पुरुषः पण्डितजातीयो भवेत् ' यः स्वप्नान्तरे जनपदकल्याणीं स्त्रियमनुस्मरेत् ' तया वा सार्धं क्रीडितमभिनिवेशेत्। आह ' नो हीदं भगवन्। तत्कस्य हेतोः। अत्यन्ततया हि भगवन् स्वप्नान्तरे जनपदकल्याणी न संविद्यते नोपलभ्यते। कुतः पुनरनया सार्धं परिचरणा। अन्यत्र यावदेव[1] स पुरुषो वि-
10 घातस्य क्लमथस्य भागी स्यात् ' यस्तामभिनिविशेत्[2]॥ [3]भगवानाह। एवमेव महाराज बालो ऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयान्यभिनिविशेत्। सो-ऽभिनिविष्टः सन्ननुनीयते ऽनुनीतः संरज्यते। संरक्तो रागजं कर्माभिसंस्करोति[4] ' त्रिविधं कायेन चतुर्विधं वाचा त्रिविधं मनसा[4]। तच्च कर्माभिसंस्कृतमादित एव क्षीणं निरुद्धं विगतं विपरिणतं न पूर्वां दिशं निश्रित्य तिष्ठति। न दक्षिणां न पश्चिमां नोत्तरां नोर्ध्वं
15 नाधो नानुविदिशं ' नेह न तिर्यक् ' नोभयमन्तरा। तत्पुनः कालान्तरेण मरणकालसमये प्रत्युपस्थिते[5] ' जीवितेन्द्रियनिरोधे आयुषः परिक्षयात्तत्सभागस्य कर्मणः क्षीणत्वाच्चरम-

1) This expression, which recurs below (112 a), is rendered གཞན་དུ་ན་གང (156. b. 7). It seems to mean: «least of all, in another case, would he . . ». Somewhat similar uses of *yāvat* are given Mhv. Index, s. v.

2) For this whole simile cf. Mhv. III. 37—38, and the Bhadrakalpāvadāna (which has taken the text from the Mahāvastu. Cf. S. d'Oldenburg Buddhist Legends (Russian) pp. 19—20 and pp. 139—140 where a parallel from the Vikramodaya is adduced).

3) This passage is also quoted in Bodhic-ṭ. (IX) pp. 308—9. Cf. Poussin's note 6, where Madhy-vṛ. p. 41 (Ch. vi. init.) is compared, doubtless an abridgement of the opening sentences of this extract.

4) . . 4) Poussin compares M. Vyutp. § 91.

5) *upatishṭhate* Bṭ.



विज्ञानस्य निरुध्यमानस्य मनस आरम्बणीभवति। तद्यथापि नाम शयितविबुद्धस्य जनपदकल्याणीति [मनस आरम्बणं[1] भवति ' इति] हि महाराज चरमविज्ञानेनाधिपतिना[2] तेन च कर्मणा आरम्बणेनौपपत्त्यंशिकद्वयप्रत्ययं[3] प्रथमविज्ञानमुत्पद्यते ' यदि वा नरकेषु यदि वा तिर्यग्योनौ यदि वा यमलोके यदि वा आसुरे काये यदि वा मनुष्येषु यदि वा देवेषु '
तस्य च प्रथमविज्ञानस्य औपपत्त्यंशिकस्य समनन्तरनिरुद्धस्यानन्तरसभागा चित्तसंततिः 5
प्रवर्तते। यत्र विपाकस्य प्रतिसंवेदना प्रज्ञायते ' तत्र यश्चरमविज्ञानस्य निरोधस्तत्र च्युतिरिति संख्यां गच्छति[4]। यः [112a] प्रथमविज्ञानस्य प्रादुर्भावस्तत्रोपपत्तिः। इति हि महाराज न कश्चिद्धर्मो ऽस्माल्लोकात्परं लोकं गच्छति। च्युत्युपपत्ती च प्रज्ञायेते[5] ' तत्र महाराज चरमविज्ञानमुत्पद्यमानं न कुतश्चिदागच्छति॥ निरुध्यमानं न क्वचिद्गच्छति।
कर्माप्युत्पद्यमानं न कुतश्चिदागच्छति। निरुध्यमानं न क्वचिद्गच्छति। प्रथमविज्ञानम- 10
प्युत्पद्यमानं न कुतश्चिदागच्छति निरुध्यमानं च न क्वचिद्गच्छति। तत्कस्य हेतोः। स्वभावविरहितत्वात्। चरमविज्ञानं चरमविज्ञानेन शून्यं। कर्म कर्मणा शून्यं। प्रथमविज्ञानं प्रथमविज्ञानेन शून्यं। च्युतिश्च्युत्या शून्या। उपपत्तिरुपपत्त्या शून्या। कर्मणां चाबन्ध्यता[6] प्रज्ञायते[7] विपाकस्य च प्रतिसंवेदना न चात्र कश्चित्कर्ता न भोक्ता ऽन्यत्र नामसंकेतात्।

1) I supply these words from the Tib. (157. a. 5) which reads: °སད་པའི (*vibuddhasya*) ཡུལ་གྱིས་བཟང་མོ་ (*janapadakalyāṇī*) དང་འདྲ་བར་ ('likeness to') ཡིད་ཀྱི (*manasaḥ?*) དམིགས་པར་འགྱུར་རོ་ དམིགས is the regular equivalent of *ārambaṇa*, as usually. I have left *iti* instead of any word more directly suggesting likeness, as I conjecture that the *lacuna* (common to A. and B.) arose through the recurrence of the syllables — *īti* (°*kālyāṇīti* and °*bhavatīti hi*).

2) M. Vyutp. cxv. 4, cxvi. 2.

3) cf. 226, 7—8 supra. °*kaṃ dvaya*° MS.

4) °*khyā bhavati* Bṭ.

5) *prajñāyate* A; cf. B. p. 309, Poussin's n. 6.

6) *abādhyatā* B; but Tib. འབྲས་བུ་མེད་པར་མི་འགྱུར.

7) *prajñāy*° A.

तद्यथापि नाम महाराज पुरुषः सुप्तः स्वप्नान्तरे शत्रुणा सार्धं संग्रामयेत्। स शयितविबुद्धः तमेवानुस्मरेत्। तत्किं मन्यसे महाराज संविद्यते स्वप्नान्तरे शत्रुः। शत्रुणा वा सार्धं संग्राम इति। आह। नो हीदं भगवन्। भगवानाह। तत्किं मन्यसे महाराजापि नु स पुरुषः पण्डितजातीयो भवेत् योऽसौ स्वप्नान्तरे शत्रुमभिनिविशेत्[1]। शत्रुणा वा सार्धं संग्रामं[2]। आह। नो हीदं भगवन्। तत्कस्य हेतोः। अत्यन्ततया हि भगवन् स्वप्ने शत्रुर्न संविद्यते कुतः पुनस्तेन सार्धं संग्रामः। अन्यत्र यावदेव स पुरुषो विघातस्य क्लमथस्य च भागी स्यात् यस्तमभिनिविशेत्। भगवानाह। एवमेव महाराज बालो ऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा दौर्मनस्यस्थानीयान्यभिनिविशते ऽभिनिविष्टः सन्प्रतिहन्यते। प्रतिहतः संदुष्यति। दुष्टो दोषजं कर्माभिसंस्करोतीति पूर्ववत्। तद्यथापि नाम महाराज पुरुषः [112b] सुप्तः स्वप्नान्तरे पिशाचेन परिपात्यमानो भीतः संमोहमापद्यते। स शयितविबुद्धस्तं पिशाचं तं च संमोहमनुस्मरेत्। तत्किं मन्यसे महाराज संविद्यन्ते स्वप्ने पिशाचः संमोहो वा। यावदेवमेव महाराज बालो ऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा उपेक्षास्थानीयान्यभिनिविशते ऽभिनिविष्टः सन् मुह्यति मूढो मोहजं कर्माभिसंस्करोतीति पूर्ववत्। तद्यथापि नाम महाराज पुरुषः सुप्तः स्वप्नान्तरे जनपदकल्याण्या गायन्त्या मधुरं गीतस्वरं मधुरं च तन्त्रीस्वरं च शृणुयात्। सा तेन गीतवादितेन परिचारयेत्। स शयितविबुद्धस्तदेव गीतवादितमनुस्मरेत्। तत्किं मन्यसे महाराजापि नु स पुरुषः पण्डितजातीयः स्वप्नान्तरे जनपदकल्याण्या गीतवादितमभिनिविशेत्। आह। नो हीदं भगवन्। भगवानाह। तत्कस्य हेतोः। अत्यन्ततया हि भगवन् स्वप्नान्तरे जनपदकल्याणी स्त्री न संविद्यते नोपलभ्यते कुतः पुनरस्या गीतवादितं। अन्यत्र यावदेव स पुरुषो

1) མངོན་པར་ཞེན་པ་ 'greatly desire'; cf. 252.10, where the Tib. is the same, and infra l. 17.

2) Correct to *saṃgrāmayet* ut supra; or supply a word like *kuryāt*. Tib. (157. b. 6) འཐབ་པར་འགྱུར་བ་



विघातस्य क्लमथस्य च भागी स्यात् यस्तद[1]भिनिविशेत्। भगवानाह। एवमेव महाराज बालो ऽश्रुतवान् पृथग्जनः श्रोत्रेण शब्दान् श्रुत्वा सौमनस्यस्थानीयान्यभिनिविशते इति पूर्ववत्। एवं गन्धादिषु त्रिधा त्रिधा वेदितव्यम्॥ पे॥ अत्र महाराज मानसं निवेशयितव्यं। किमित्यहं सदेवकस्य लोकस्य चक्षुर्भवेयं उल्का प्रदीप आलोकभूतः कूलं नौस्तीर्थं नायकः परिणायकः दैशिकः सार्थवाहः। पुरो जवेयं। मुक्तो मोचयेयमाश्वस्त आश्वासयेयं परिनिर्वृतः परिनिर्वापयेयमिति। पूर्वा हि कोटिर्[2]महाराज न प्रज्ञायते ऐश्वर्याधिपत्यानामनुभूय मानानां इति हि महाराज मायोपमानीन्द्रियाण्य[113a]तृप्तान्यतर्षणीयानि स्वप्नोपमा विषया अतर्षका अतृप्तिकराः॥ अत्रानन्तयशश्चक्रवर्तिनः कथा स्वर्गाच्च पतिते तस्मिन्सराजकैः पौरैः परिवृत एवं पठ्यते। तद्यथा ऽपि नाम महाराज सर्पिर्मण्डो वा नवनीतमण्डो वा तप्तायां वालुकायामुपनिक्षिप्तोऽवसीदति। न संतिष्ठते एवमेव महाराजानन्तयशा अवसीदति न संतिष्ठते। अथ राजा प्रियंकरो राजानमनन्तयशसं तथावसीदन्तं उपसंक्रम्यैतदवोचत्। किं वयं महाराज लोकस्य व्याकुर्यामः[3]। किं राज्ञो ऽनन्तयशसः सुभाषितमिति। स आह। वक्तव्यं महाराजानन्तयशाश्चतुर्द्वीपेषु राज्यैश्वर्यं कारयित्वा ऽवन्ध्यमनोरथतामनुभूय सर्वद्रुमाकालफलतां सर्वोपद्रवप्रस्र[4]ब्धिसर्वसत्त्वावन्ध्यमनोरथतां गन्धोदकवर्षं हिरण्यवर्षं सुवर्णवर्षं सर्वोपकरणवर्षं चानुभूय चतुरो महाद्वीपानध्यावसित्वा शक्रस्यार्धासनमाक्रम्यातीच्छया न मुक्तो[5] ऽतृप्त एव कामैः कालगत इति। एवं त्वं महाराज व्याकुर्या इत्येवमुक्त्वा च राजा ऽनन्तयशाः कालमकार्षीत्। पे॥ त-

1) *tam* MS.

2) མཐའ་ 'limit'; cf. Senart, Mhv. i. 472.

3) sic MS.

4) See note to f. 117 b. below. Tib. རྒྱུན་ཆད་ (159 a) 'interrupted flow'.

5) *mumukto* or *yuyukto* MS. Tib. (159 b 2) འདོད་པ་ཆེན་པོས་མ་བཏང་ (?) 'not free from great desire'. The Tib. is also uncertain, as the last word may be བཏང་

स्मात्तर्हि ते महाराज मरीचिकायामुदकस्वभावो नाभून्न भविष्यति न चैतर्हि विद्यते । एवमेव महाराज रूपवेदनासंज्ञासंस्कारविज्ञानां स्वभावो नाभून्न[1] भविष्यति न चैतर्हि विद्यत इत्यादि ॥

पुनरप्युक्तं । [2]एतावच्चैतत् ज्ञेयम् । यदुत [3]संवृतिः परमार्थश्च । तच्च भगवता शून्यतः सुदृष्टं सुविदितं सुसाक्षात्कृतं । तेन स सर्वज्ञ इत्युच्यते । तत्र संवृतिर्लोकप्रचारतस्तथागतेन दृष्टा । यः पुनः परमार्थः सो ऽनभिलाप्यः । [113b] अनाज्ञेयो ऽविज्ञेयो ऽदेशितो ऽप्रकाशितो यावदक्रियो यावन्न लाभो नालाभो न सुखं न दुःखं न यशो नायशः । न रूपं नारूपमित्यादि ॥

तत्र जिनेन जगस्य कृतेन
संवृति देशित लोकहिताय ।
येन जगत्सुगतस्य सकाशे
संजनयीह प्रसादसुखार्थे ॥
संवृति प्रज्ञमयी नरसिंहः
षड्गतयो भणि सत्वगणानां ।
[4]नरकतिरश्च तथैव [[5]च] प्रेतान्
अ[ा]सुरकाय नरांश्च मरूंश्च ॥
नीचकुलांस्तथ उच्चकुलांश्च
आढ्यकुलांश्च दरिद्रकुलांश्चेत्यादि ॥

---

1) °*nābhūn*° MS.

2) This passage is twice cited in Bodhic.-ṭikā (IX.) pp. 246 and 380.

3) ཀུན་རྫོབ. Cf. Wass. 321 (293): «die Hülle, durch welche hindurch man die eigentlichen Kennzeichen des Gegenstandes wiederfindet». See Nāgārjuna ap. Nāmas.-ṭīkā ap. Minaev, Rech. p. 226 n. 1, and Bodhic. IX. 2 with ṭīkā (Poussin p. 244. 10).

4) ◡◡ for –.) *narakagatiç ca* B (p. 380.14).

5) omitted in A.



पुनश्चोक्तं । कतम एष धर्मो यो भगवता व्याकृतो ऽनुत्तरायां सम्यक्संबोधौ । किं रूपमुत वेदना आहो स्वित्संज्ञा उताहो संस्कारा अथ विज्ञानं भगवता व्याकृतमनुत्तरायां सम्यक्संबोधाविति । तेषामेतदभूत् । न रूपं [1]यावन्न विज्ञानं भगवता व्याकृतमनुत्तरायां सम्यक्संबोधौ । तत्कस्य हेतोः ' अनुत्पादो हि रूपमनुत्पादो बोधिः । तत्कथमनुत्पादो ऽनुत्पादमभिसंबुध्यते ' एवं यावद्विज्ञानम् ॥ पे ॥ तदेवमनुपलभ्यमानेषु सर्वधर्मेषु कतमो ऽत्र बुद्धः ' कतमा बोधिः ' कतमो बोधिसत्वः ' कतमद्व्याकरणम् । शून्यं हि रूपं रूपेण यावद्विज्ञानं ॥ पे ॥ यावदेव व्यवहारमात्रमेतत् ' नामधेयमात्रं संकेतमात्रं संवृतिमात्रं प्रज्ञप्तिमात्रं ' नालमत्र पण्डितैरभिनिवेश उत्पादयितव्य इति ॥

तथात्रैवाह्कः । निर्माणरतयो देवा यथा वयं भगवन् । भगवतो भाषितस्यार्थमाजानीमः । सर्वधर्मा भूतकोटिरनन्तकोटिरनावरणकोटिरप्रतिष्ठितकोटिरित्यादि ॥ सर्वधर्मा भगवन् बोधिः । स्वभावविरहिता बोद्धव्याः । अन्तश आनन्तर्याण्यपि बोधिः । तत्कस्य हेतोः ' अप्रकृतिका हि भगवन् बोधिरप्रकृतिकानि च [2]पञ्चानन्तर्याणि । तेनोच्यते आनन्तर्याणि बोधिरिति ' तथा विहस्यन्ते भगवन् ये केचित् परिनिर्वातुकामाः । तत्कस्य हेतोः । यदि कश्चित्संसारप्रतिप[114a]न्नो भवेत् ' स निर्वाणं पर्येषत इति ॥

पुनरुक्तं । भूतकोटिरिति भगवन् यदुक्तं निर्माणरतिभिर्देवैस्तत्र वयं भूतमपि नोपलभामहे । किं पुनरस्य कोटिम् । तत्कस्य हेतोः । यो हि कश्चिद्भगवन् भूतमुपलभते ' कोटिमपि स तस्योपलभते द्वये चासौ चरतीति ॥

तथात्रैव सह[ा]पतिब्रह्मणा शास्ता स्तुतः ॥

[3]सुपिति यथ नरः क्षुधाऽभिभूतः शतरसभोजनभुञ्जिनो च तृप्तः ।
न पि च [4]क्षुध न भोजनं न सत्वः सुपिन यथैव निदृष्ट सर्वधर्माः ॥

---

1) *yāvat* denoting omission.

2) Cf. 17 20—18. 7 supra.

3) Metre: Pushpitāgra.

4) The MS. has the regular but unmetrical *nāpi . . . kshudhā*.

भणि नरु पठने मनोज्ञवाचं प्रियु भवती न च संक्रमोऽस्ति वाचं।
न च वचन न चास्य रक्त वाचामुपलभसे न च तत्र संशयोऽस्ति॥
शृणाति यथ मनोज्ञ वीणाशब्दं मधुर न चास्ति स्वभावतः स शब्दः।
तथ इमि विदु स्कन्ध प्रेक्षमाणो न लभति भावु स्वभावतः सुमेधाः॥ पे॥
5 यथ नरु इह शङ्खशब्द श्रुत्वा विमृशति विद्व कुतो य प्रादुभूतः[1]।
न च लभति स्वभाव शून्यभावं तथ त्वय दृष्ट[2] नरेन्द्र सर्वधर्माः॥
यथ नरु इह भोजनं प्रणीतं विमृशति अङ्गशु[3] सिद्धमस्वभावम्।
यथ रसु तथ तेऽङ्ग तत्स्वभावास्तथ त्वय दृष्ट महर्षि सर्वधर्माः॥
यथ नरु इह इन्द्रयष्टि[4] दृष्ट्वा विमृशति अङ्गशु निःस्वभाव शून्यम्।
10 विमृशतु यथ यष्टि तेऽङ्ग शून्यास्तथ त्वय दृष्ट महर्षि सर्वधर्माः॥
पुरवर[5] यथ अङ्गशो विभज्य नगरु स्वभावतु नामतो न लब्धम्।
यथ नगर तथाङ्ग सर्वशून्यास्तथ त्वय दृष्ट नरेन्द्र सर्वधर्माः।
मुदित यथ नराग[6] मुक्त भेरी हर्ष जनेति स्वभावशून्यशब्दा।
स्वरु य[थ][7] तथ तेऽङ्ग तत्स्वभावं तथ त्वय दृष्ट महर्षि सर्वधर्माः॥

---

1) °*durbh*° MS., contra metrum.

2) *shṭi* MS.; but see below.

3) *aṅgaço bhāgaças* marg.

4) [illegible] = *indrāyudha* 'rainbow'.

5) *gandharva* [-pura] marg. 'mirage'; but Tib. renders simply གྲོང་ཁྱེར་མཆོག་ 'large town'.

6) The Tib. (161. a. 5) has སྐྱེས་བུ་དགའ་བར་ 'for the joy of men' which suggests a reading *narāṇă* (for *narāṇāṃ*, *ṇ* mistaken for *g*); or can *narāga* stand for *nararāga*?

7) MS. *svarupatatha* here and *svarupathata* here and *svarupatha tatha* below but Tib. ཇི་ལྟར་སྒྲ་བཞིན་དེ་ . . .



(1) ********************************
********************************
हनतु यथ नरस्य तां हि भेरीं प्रतिघु न विद्यति नापि स्नेहधातुः।
विमृशतु भेरीव[2] तेऽङ्ग तत्स्वभावास्तथ त्वय दृष्ट नरेन्द्र सर्वधर्माः॥
हनतु यथ नरस्य तां हि भेरीं स्वरु न स मन्यति रामयामि लोकम्। 5
स्वरु यथ तथ तेऽङ्ग तत्स्वभावाः [114 b] तथ त्वय दृष्ट नरेन्द्र सर्वधर्माः॥
हनतु यथ नरस्य तस्य भेर्या[ं] न पि स्वरु अङ्गशु[3] नापि स स्वतन्त्रः।
स्वरु यथ तथ तेऽङ्ग तत्स्वभावास्तथ त्वय दृष्ट महर्षि सर्वधर्माः॥

पुनश्चोक्तं।

सत्वारम्बणनायकेन[4] कथिता मैत्री शुभाभावना। 10
सत्वश्चास्य विभावितः सुविदितं निःसत्व सर्वं जगत्।
तत्रैवं द्विपदोत्तमो अकलुषो निःसंशया मानसः।
तेन त्वा सुगतं विभावितमतिं पूजेम पूजारिहम्॥
दुःखं चासुगता[5] दशद्दिशिगतं नैवं परीदृश्यते।

---

1) Both our Tib. version (161. a. 6) and the Chinese translation of the Pitṛputrasamāgama here add another verse, which Mr. Watters renders, from the latter source: «when a man strikes a drum, the sound does not come from the ten regions [Tib. ཕྱོགས], and vanishing does not go to those regions . . .»

2) These words are unmetrical; possibly the reading was *vimṛcatu na ça* 'nor could it reflect'. Mr. Watters renders the Chinese: 'The drum has no feeling of hatred or affection, it does not analyse the nature of the causal circumstances'. The Tib. does not reproduce this stanza.

3) *aṅgatu* MS.

4) Metre: Çārdūlavikrīḍita.

5) So the MS. With *daçaddiça* compare 155 a. infra and the verse-passage in Daçabhūmīçvara, Ch. VIII sub fin. (Camb. Add. 867 f. 97. b. 7.) The Tib. must have read something like: *duḥkhaṃ* . . *Sugato daça diça gato* . . . *na paçyati* (?).

सत्वेषू करुणा च नाम भणिता देवा(1)तिदेव त्वया।
एवं भो जिनपुङ्गवा जिनमतं अज्ञात याथाव(2)तः।
तेन त्वां द्विपदोत्तमा नरवराः पूजेम पूजार्हकम्॥
(3)सत्वानेव न दुःखं शाक्यमुनिना यस्यापनीतं दुखं।
5 ज्ञातास्ते मुदिताश्च हृष्टमनसो ऽरतीश्च तैर्नोदिताः॥
एवं बुद्धनयं अचिन्तियनयं याथावतो जानतो।
[तस्मात्](4) पूजिय त्वां नराण प्रवरं प्रापेम प्राप्तं फलं॥
कायः कायविवर्जितेन मुनिना नासादितो मार्गतां।
नैवं ते स्मृतिनायका न भणिता नैव प्रमुष्टा स्मृतिः।
10 उक्तं चो सुगतेन भावपथिमाः(5) कायं गता भावनाः।
एवं बुद्धनयं विदित्व सुगता पूजा कृता तापिनः॥
भावेथः शमथं विपश्यनम(6)यं मार्गं दुखा शान्तये।

1) Cf. Kern, Saddh.-P. p. xxv.

2) *yādhā(?)tavaḥ* MS. But the Tib. version of this line ends ཇི་བཞིན་ཀུན་ཏུ་འཚལ. Comparing this with the ending of the version of l. 6 below ཇི་བཞིན་འཚལ་, I have restored *yāthāvataḥ* ('exactly', Morris in J.P.T.S. 1889, p. 208; — not hitherto found in Skt.). This must be preceded (acc. to the Tib.) by some tense-form of √*jñā*. If *ajñāta* is genuine, it may be taken as an aorist (?) and the preceding nasalized vowel scanned long. Cf. *buddhanayaṃ* below, and several instances in the Bhadracarīpraṇidhāna (f. 131. b infra).

3) i. e. *satvānā(m)eva*. So I understand the Tib.: 'no pain is given by Çākyamuni to beings, who indeed takes pain away from them'. MS.: *satvo naiva*, with the following three *aksharas* obliterated and doubtful.

4) I have supplied this, for the metre, from the Tib. དེས་ན་ 'therefore'.

5) °*māṃ . . gatāṃ* MS. The Tib. renders the phrase: The Sugata has said: 'meditation directed towards the body leads to [further] meditation' (161. b. 5). Cf. Ch. s. v. *satipaṭṭhāna*. *-pathima* is not quoted.

6) Cf. Mhv. I. 120. 10. *dukhā* apparently for *duḥkhānāṃ*.



शान्तास्ते भगवन् सवास(1)नमला येही जगत् क्लिश्यते।
शमथश्चाथ विपश्य(2)ना न च मला सर्वेऽति शून्या मुने।
अस्मिन्देवगणा न काङ्क्षाचना पूजेन्तु त्वां नायकं ' इत्यादि॥

पुनरुक्तं। शून्यं हि चक्षुश्चक्षुःस्वभावेन। यस्य च धर्मस्य स्वभावो न विद्यते सोऽवस्तुकः। योऽवस्तुकः सो ऽपरिनिष्पन्नः यो ऽपरिनिष्पन्नः स नोत्पद्यते न निरुध्यते। पे॥ 5 यच्चित्रषट्स्वप्यधमु नोपलभ्यते न तच्चक्षुर्नेन्द्रियं कथं तस्य व्यवहारो ज्ञेयः। तद्यथापि नाम रिक्तमुष्टिरलीकः। यावदेव नाममात्रं नो तु खलु परमा[115a]र्थतो रिक्तमुपलभ्यते न मुष्टिः। एवं चक्षुश्चेन्द्रियं च रिक्तं मुष्टिसदृशमलीकमसद्भूतं तुच्छं मृषामोषधर्मं बालोपलापनं मूर्खसंमोहनम् यावदेव नाममात्रम्॥

पुनरत्रैवाह। 10

स्वप्नान्तरे महावृष्टिरास्रवाणां प्रवर्तना।
दर्शिता ते महावीर आस्रवोत्पत्तिपण्डिताः॥
स्वप्ने यथा शिरश्छेदो दृष्टस्ते आस्रवक्षयः।
दर्शितः सर्वविज्ञानां सर्वदर्शिन्नमो ऽस्तु ते॥

अत्रैव च द्रुमेण(3) किन्नरराजेन भगवान्पृष्टः प्रत्याह। यद्वदसि शून्यतां च व्याकरणं 15 चाप्यहं न जानामि। स्याद्यदि किंचिदशून्यं न भवेज्जिनेनास्य व्याकरणम्॥ किंकारणं ' तथा हि ' स्थितं भवेत्तत्स्वके भावे ' कूटस्थनिर्विकारं। न तस्य वृद्धिर्न परिहाणिः। न क्रिया न च कारणम्। यत्स्वभावशून्यमादर्शमण्डले सुपरिशुद्धे संदृश्यते प्रतिबि-

1) Apparently: 'impurities connected with desire'.

2) Cf. Pugg. Paññ. p. 61 § 26.

3) Cf. Bhadrakalpāv., Ch. XXIX (d'Oldenburg pp. 43—47 and 80, with reff. to Avadānakalpal. [ii. p. 319, ed. B. Ind.] Divy., Mhv., and to Schiefner-Ralston, Tibetan Tales pp. 44—74). Cf. also Bkah-hgyur, Mdo XII. 6.

म्बम्। तथैव द्रुम जानीहीमान्[1] धर्मान्। अविकारं धर्मधातुमिमां च पूजां द्रुमा[ङ्गशो]विचारयसि। अङ्गशो निरीक्ष्य[2] पूजां ' कतमे ऽविकारिणो ऽङ्गाः॥

यदपि च निरीक्षकत्वं क्रियां च न जानसे मया प्रोक्तं।
शकटाङ्ग संनिपातं निरीक्षु शकटस्य चैव क्रियां॥
कर्म च मे आख्यातं कर्ता न विद्यते दशसु दिक्षु।
वातेरितादिव तरोर्यथा हि निवर्तते वह्निः॥
न च मारुतो न च तरुश्चेतयति हुताशनं च यजने।
न निवर्तते[4] वह्निस्तथैव कर्मस्य कर्तारः॥

[5]यदपि वदसे न च संचय पुण्यस्य हि विद्यते ' सुचरितस्य समुदागमश्च[6]। बोधिसत्त्वस्यापि शृणु क्रमन्त त्वं। यथा भणसि मनुष्याणामायुःपरिमाणं[.] वर्षशतं[.] जीविन् ' न चास्ति वर्षपुञ्जी। अयमपि समुदागमस्तद्वदिति॥

भगवत्यामप्युक्तं। किं पुनरायुष्मन् सुभूते उत्पन्नो धर्म उत्पद्यते उतानुत्पन्नः। सुभूतिराह। नाहमायुष्मन् शारिपुत्र उत्पन्नस्य धर्मस्योत्पत्तिमिच्छा[115b]मि न चानुत्पन्नस्येति॥

---

1) °*jānīmā*° MS.; but Tib. ཤེས་པར་གྱིས་

2) I have endeavoured to correct this corrupt passage (originally metrical?) n accordance with the Tib. *āgantu nirīkṣu* was the reading in the second clause. Tib. ཡན་ལག་རྣམས་ལ་བརྟག་ (162 b. 1).

3) The metre of these stanzas would seem to be a variety of Āryā. If the text be correct, the final extra syllable at end of the line is in the alternate lines omitted and there are further licenses as to the sandhi and scansion of the vowel *e*.

4) *ma* MS. The line is unmetrical, and doubtful; the words between *cetayati* and *tathaiva* are not represented in the Tib.

5) The Tib. renders the remainder of the quotation also as if metrical.

6) The reading of this clause is very doubtful; the Tib. has simply དེ་ཚུལ་ཡང་དག་མཉན་པར་གྱིས་ *hunc in modum fac ut rite audias. kramanta* for *kramataḥ*?



धर्मसंगीत्यामप्युक्तं।[1] तथता तथतेति कुलपुत्र शून्यताया एतदधिवचनं। सा च शून्यता नोत्पद्यते न निरुध्यते। आह। यद्येवं धर्माः शून्या उक्ता भगवता तस्मात्सर्वधर्मा नोत्पत्स्यन्ते न निरोत्स्यन्ते। निरारम्भो बोधिसत्त्वः। आह। एवमेव कुलपुत्र तथा यथाभिसंबुध्यसे सर्वधर्मा नोत्पद्यन्ते न निरुध्यन्ते। आह। यदेतदुक्तं भगवता ' संस्कृता[2] धर्मा उत्पद्यन्ते निरुध्यन्ते चेत्यस्य तथागतभाषितस्य को ऽभिप्रायः। आह। उत्पादनिरोधाभिनिविष्टः कुलपत्र लोकसंनिवेशः। तत्र तथागतो महाकारुणिको लोकस्योत्त्रास[3]पदपरिहारार्थं व्यवहारवशादुक्तवानुत्पद्यन्ते निरुध्यन्ते चेति। न चात्र कस्यचिद्धर्मस्योत्पादो न निरोध इति॥

पुनरत्रैवोक्तं। तत्र भगवंश्चक्षूरूपेषु न रणति श्रोत्रं।[4] शब्देषु ' यावन्मनोधर्मेषु न रणति ' स धर्मः। तत्र कथं चक्षूरूपेषु न रणति। संसर्गाभावात्। न हि चक्षूरूपेण संसृज्यते। यावन्न मनोधर्मेण संसृज्यते। यन्न संसृज्यते तन्न रणति। अद्वितीयस्य भगवन् धर्मस्य रणं[5] नास्ति। अद्वितीयाश्च भगवन्सर्वधर्माः परस्परं न जानन्ति न विजानन्ति। न कल्पयन्ति न विकल्पयन्ति। न संभवन्ति न विसंभवन्ति। न हीयन्ते न वर्द्धन्ते। न रज्यन्ति। न विरज्यन्ति। न संसरन्ति न परिनिर्वान्ति नैते कस्यचित्। नैषां कश्चित्। नैते भगवन् धर्मा उद्विजन्ते न संक्लिश्यन्ते न व्यवदायन्ते। एवमहं भगवन् जानाम्येवमवबुध्ये। यदप्यहं भगवन्नेवं वदामि। एवमहं जानाम्येवमहं बुध्यामीति। आयतनानामेष विकारः। न च भगवन्नायतनानामेवं भवति। अस्माकमेष विकार इति। यो ह्येवं जानाति स न केनचित्सार्द्धं विवदति। यन्न विवदति तच्छ्रमणधर्ममनुस्मरतीति। तथा धर्मदर्शनं [116a] बुद्धदर्शनं सर्वस-

---

1) This passage is cited also in Bodhic.-ṭīkā (IX.) 377.16.

2) Dh.-saṇi § 1085. *saṃbhṛtā* Bṭ. here, and below *utpādaniṣedhābhiniv*°, both unsupported by Tib. The same applies to *nirālambo* just before (377.19).

3) °*sya trāsa*° Bṭ.

4) Punctuation suggested by the Tib. (163 a. 3), which is more expanded here (cf. 93. n. 1), and probably implies a somewhat different text.

5) Only allowed as a neuter (in Skt. and Pali) in the derived sense of 'battle'. The marginal corrector would have us read the (probably inadmissible) form ***raṇanam***.

त्वदर्शनं सर्वसत्वहेतुप्रत्ययदर्शनं शून्यतादर्शनं शून्यतादर्शनमदर्शनं। अदर्शनं भगवन्सर्वधर्माणां दर्शनं सम्यग्दर्शनमिति ॥

कथमनधिष्ठाना संवृतिर्युक्ता। कथं पुनरयुक्ता' यथाऽसति स्थाणौ पुरुषभ्रान्तिः। कस्य पुनः शून्यतावादिनः परमार्थतः स्थाणुः सिद्धो यदाश्रयात्पुरुषभ्रान्तिः स्याद्' अमूला एव च सर्वधर्मास्तत्वतो मूलानुपपत्तेः ॥

तथा चोक्तमार्यविमलकीर्तिनिर्देशे[1]। अभूतपरिकल्पस्य किं मूलं। आह। विपर्यस्ता संज्ञा मूलं। आह। विपर्यस्तायाः संज्ञायाः किं मूलं। अप्रतिष्ठानं मूलं। आह। अप्रतिष्ठायाः किं मूलं। आह। यन्मञ्जुश्रीरप्रतिष्ठानं न तस्य किंचिन्मूलमिति ह्यप्रतिष्ठानमूलप्रतिष्ठिताः सर्वधर्मा इति ॥

इयं समासतः प्रज्ञापारमिता चित्तशुद्ध्यर्थिना भावयितव्या। भावयित्वा च क्लेशरिपुरणकुशलेन भवितव्यं' न स्वगृहशूरेण ॥

यथोक्तमार्यधर्मसंगीतिसूत्रे। न शून्यतावादी लोकधर्मैः संह्रियते ऽनिश्रितत्वात्। न स लाभेन संहृष्याति। अलाभेन न विमना भवति। यशसा न विस्मयते ऽयशसा न संकुचति[2]। निन्दया नावलीयते[3]। प्रशंसया नानुनीयते। सुखेन न रज्यते दुःखेन न विरज्यते। यो ह्येवं लोकधर्मैर्न संह्रियते स शून्यतां जानीत इति ॥ तथा शून्यतावादिनो न क्वचिदनुरागो न विरागः। यस्मिन्रज्येत तच्छून्यमेव जानीते' शून्यमेव पश्यति। नासौ शून्यतां जानीते यः क्वचिद्धर्मे रज्यते वा विरज्यते वा तथा नासौ शून्यतां जानीते यः केनचित्सार्धं विग्रहं विवादं वा कुर्याच्छून्यमेव जानीते तच्छून्यमेव पश्यतीत्यादि ॥

एतत्संक्षेपाच्चित्तशोधनम् ॥

---

1) See reff. at p. 6, n. 5, and add I-tsing (Chavannes 'Mémoire' pp. 170—1), where we find the work along with the Saddharmapuṇḍarīka, 'psalmodié . . jusqu'à mille fois'.

2) 'shrink' from fear (Jāt.-m. p. 21.4) or shame (B.R. s. v. *saṃkoca*).

3) cf. 100. n. 8 supra, where the Tib. has the same equivalent.



अथैवमपि परमविशुद्धधर्मदर्शने सति' इह पञ्चकषायसंक्लिष्टस्य[1] कल्याणमित्रावसादितस्य वा संक्षेपेण तावत्कुत्र [116b] यत्नं कृत्वा शीघ्रं चित्तशुद्धिर्भवति। आत्मबहुमान-परावज्ञात्यागे ऽनयोर्मूलमात्मसत्वदृष्टिः। सा चैतदभ्यासात्सुकरं प्रहीयत इति परगौरवमात्मावज्ञा चैवं भावनीया ॥

यदि सत्वो यदि स्कन्धाः क्षमता सर्वथा स्थिता।
एकस्य हि परात्मत्वं विरुद्धं संभवेत् कथं ॥
विनालम्बनमप्येतदाचरन्त्येव देहिनः।
अनादिकल्पनाभ्यासात्किमभ्यासस्य[2] दुष्करम् ॥
एवमभ्यासवश्यत्वे तुल्ये कस्मात्सुखोदयम्।
परगौरवमुत्सृज्य स्वसुखायान्यदिष्यते[3] ॥
चिन्तामणिर्यथोक्ताश्च सन्ति गौरवहेतवः।
न तु[4] मे गौरवात्सौख्यमिहापि जनदुर्भगात् ॥
तस्मात्सत्वान्तरे यद्वद्भूतमत्सरमानिनः।
आत्मस्नेहवतो वृत्तिर्भावयेत्तद्विपर्ययम् ॥
आत्मनो बहुमानोऽयं स्तुतिनिन्दादिसेकतः[5]।
वर्धते नारकवशात्[6]सेकान्नरकवह्निवत् ॥

---

1) Dh.-s. § 91.

2) cf. Bodhic. VI. 14.

3) *içyati* MS.; Tib. འདོད་བྱེད་ (164. b. 4).

4) *na tvā 'me* MS.

5) new in this metaphorical sense, i. e. excitation, as of fire by oil.

6) °*ça se*° MS. Tib. དམལ་བའི་རྒྱལ་ཞག་གིས་།

[1]शब्दस्तावदचित्तत्वान्मां स्तौतीति न संभवः ।
परः किल मयि प्रीत इत्ययं मे मतिभ्रमः ॥
तत्तुष्ट्यैव मम प्रीतिः सामान्ये न सदाऽस्तु सा ।
तत्सुखेन न चेत्कार्यं तेन तुष्टेन किं मम ॥
5 [2]अन्यत्र मयि वा प्रीत्या किं हि मे परकीयया ।
न मे परेण तुष्टेन काये सौख्यमिहाण्वपि ॥
एवं ज्ञात्वा प्रहातव्या कल्पना निर्विबन्धना ।
अकीर्तिनिन्दा सत्कारा एवं ज्ञेयाश्च निष्फलाः ॥
न धर्मो नायुरारोग्यं न बलं वन्दनादिभिः ।
10 यद्वदुत्प्रास्यमानस्य[3] विकारैरन्यकायिकैः ॥
हृष्टस्याथ विषण्णस्य लाभालाभौ समोदयौ ।
विवर्ज्य निष्फलं तस्माद्भवेयं शैलमानसः ॥

संस्तवत्यागाच्च शीघ्रं चित्तविशुद्धिर्भवति ' इति ॥

तत्रापि चिन्त्यते ।

15 निमित्तोद्ग्रहसंभूता प्रत्यभिज्ञा पुनः पुनः ।
उत्पादयत्यनुनयं जायते प्रतिघोऽप्यतः ॥
प्रतिघानुनयौ यस्य तस्य पापमवारितम् ।
अभ्याख्यानानि चित्राणि मात्सर्यं चेर्ष्यया सह ॥

---

1) This st. occurs at Bodhic. VI. 94. with *varr. lectt. sa māṃ staut̄ity asambh°* and *ity etat prītikāraṇam*. But the Tib. rendering of the last passage བློ་སྨོས་འཁྲུལ presupposes the reading of our text.

2) = Bodhic. VI. 95 a.

3) This word, of which I find no equiv. in the Tib., confirms the conj. of Cowell & Neil at Divy. 17.11 ('mock').



लाभादिकामता मान इत्याद्यावर्तते बहु ।
तस्मात्सर्वप्रयत्नेन संस्तवं प्र[117 a]हरेन्मुनिः ॥
सादृश्यादन्यदप्येतद्वा[1]रिस्रोतोवदीक्ष्यते ।
तदेवेदमिति भ्रान्त्या तत्वे तिष्ठाम्यतो बलात् ॥
5 अवस्तु चैतत्सादृश्यं दुःखं च जनयिष्यति ।
अहं चैतच्च सर्वं च न चिरान्न भविष्यति ' इति ॥

आत्मभावपरिशुद्धिश्चतुर्दशः परिच्छेदः ॥ ॥

## XV.

## भोगपुण्यशुद्धिः पञ्चदशः परिच्छेदः ॥

10 [2]शिक्षासमुच्चयस्यात्मशुद्ध्यनन्तरं भोगशुद्धिः संचयाभावात् ' पृथगिह लेखिता[2] ।

भोगशुद्धिं च जानीयात्सम्यगाजीवशोधनात् ॥

यथोक्तमार्योग्रपरिपृच्छायाम् । इह गृहपते गृही बोधिसत्वो धर्मेण भोगान्पर्येषते नाधर्मेण । समेन न विषमेण । सम्यगाजीवो भवति न विषमाजीव इति ॥

आर्यरत्नमेघेऽप्युक्तं । न बोधिसत्वो दायकं दानपतिं दृष्ट्वेर्यापथमारचयति । कथं नेर्यापथमारचयति । न शनैर्मन्दं मन्दं क्रमानुत्क्षिपति न निक्षिपति युगमात्र[3]प्रेक्षिकया सविश्र- 15

---

1) *varā* MS.

2)...2) These introductory clauses are wanting in Tib.

3) See Lal.-v. 230.17 for *yugamātraprekṣin* and compare the passage generally. For *prekṣikā* see 52.18.

स्तप्रेक्षिकया ऽनाभोगप्रेक्षिकया । एवं कायकुहनां[1] न करोति । कथं वाक्कुहनां न करोति । न बोधिसत्त्वो लाभहेतोर्लाभनिदानं मन्दभाणी मृदुभाणी न प्रियभाणी भवति । नानुवर्तनवचनानि निश्चारयति[2] । पे ॥ कथं न चित्तकुहनां करोति । बोधिसत्त्वो दायकेन दानपतिना वा लाभेन प्रवार्यमाणो[3] वा चाल्पेच्छतां दर्शयति ' चित्ते न स्पृहामुत्पादयति ।
5 अन्तर्दाह एष कुलपुत्र यदाचाल्पेच्छता चित्तेन लाभकामता । एवं हि कुलपुत्र बोधिसत्त्वः कुहनलपन[4]लाभापगतो भवति । पे । न बोधिसत्त्वो दानपतिं वा दृष्ट्वा निमित्तं[5] करोति । विघातो मे चीवरेण ' विघातो मे पात्रेण ' विघातो मे ग्लानभैषज्येन । न च तं दायकं दानपतिं वा किंचित्प्रार्थयते । न वाचं निश्चारयति । एवं हि बोधिसत्त्वो निमित्तलाभापगतो भवति । यावन्न बोधिसत्त्वो दायकं दानपतिं दृष्ट्वा एवं वाचं निश्चारयति । अमुके-
10 नामु[117b]केन वा मे दानपतिना ऽमुकं वस्तु प्रतिपादितं तस्य च मया ऽमुक उपकारः कृतः । तेन मे शीलवानयमिति कृत्वा इदं चेदं च दत्तं बहुश्रुत इति ' अल्पेच्छ इति कृत्वा । मया च तस्य कारुण्यचित्तमुपस्थाप्य परिगृहीतं । पे ॥ तत्र कायक्षतिर्यदुत लाभहेतोर्लाभनिदानमाधावनपरिधावनं दौःशील्यसमुदाचरणं च । चित्तक्षतिर्यदुत प्रार्थना '

1) cf. 130.3,6, here rendered ཚུལ་འཆོས་ 'hypocrisy' (165. b. 4) Dr. Zachariæ calls my attention also to Anarghar° IV. st. 11.

2) 'utters', like Pali *niccāreti*.

3) བསྐུབས་ན་ 'tempted' 'pressed to accept' — a sense which also suits Divy. 116. 17.

4) Cf. M. Vyutp. § 127. 57 where the form *lapanā* follows *kuhanā*. The Tib. ཁ་གསག (not in Jäschke, but cf Saratch. Das s.v.) doubtless has the meaning of 'babbling' which B² (Nachtr.) assigns to *lapanā*. With the whole compound cf. Rāṣṭrapālaparip. [6. a] cited in Camb. Cat. p. 206. 27 (= 17. 5, ed. Bibl. Buddhica, where read °*lap*° for °*lep*°).

5) 'gives a hint' as in Pali.



लाभिनां च ब्रह्मचारिणामन्तिके व्यापाद[1]बहुलता । एवं हि बोधिसत्त्वो विषमपर्येष्टिलाभापगतो भवति । पे ॥ इह बोधिसत्त्वो न तुलाकूटेन न मानकूटेन न विस्रम्भ[2]घातिकया न धूर्ततया लाभमुपार्जयति । एवं हि बोधिसत्त्वो ऽधर्मलाभापगतो भवति । पे । ये ते लाभा स्तौपिकसंसृष्टा वा धार्मिकसंसृष्टा वा सांघिकसंसृष्टा वा ऽदत्ता वा ऽननुज्ञाता वा ' तान् न प्रतीच्छति न स्वीकरोति । एवं हि बोधिसत्त्वो ऽपरिशुद्धलाभापगतो भवति ' याव- 5
ल्लब्धा लाभं न ममायते ' न धनायते ' न संनिधिं करोति । कालानुकालं च श्रमणब्राह्मणेभ्यो ददाति ' मातापितृमित्रामात्यज्ञातिसालोहितेभ्यः कालानुकालमात्मना परिभुङ्क्ते परिभुञ्जानश्चारक्तः परिभुङ्क्ते ' स्वनध्यवसितो[3] न चालभ्यमाने लाभे खेदचित्तमुत्पादयति । न परितप्यति न च दायकदानपतीनामन्तिके ऽप्रसादचित्तमुत्पादयतीत्यादि ॥

तत्रैषा[4]प्यस्य बोधिसत्त्वस्य भोगशुद्धिरात्मभावशुद्धिवत्परहिताय भवेत् ॥ 10

यथोक्तमार्यविमलकीर्तिनिर्देशे । पुनरपरं भदन्त शारिपुत्र ये प्रविशन्तीदं गृहं तेषां सम[5]नन्तरप्रविष्टानां सर्वक्लेशा न बाधन्ते ऽयं द्वितीय आश्चर्या[6]द्भुतो धर्मः ॥

पुनरत्रैवोक्तं । अथ ततो भोजनात्सर्वावती सा पर्षत्तृप्ता भूता ' न च तत् भोजनं क्षीयते । यैश्च बोधिसत्त्वैः श्रावकैश्च शक्रब्रह्मलोकपालैस्तदन्यैश्च सत्त्वैस्तद्भोजनं भुक्तं तेषां ता-

1) གནོད་སེམས་ (166. a. 4) 'desire to injure', elsewhere in Buddh. Skt, as in Pāli.

2) 'trust'. Kern, Jātak.-m. xxxiii. 5, prints° स्र°; श्र° B². For *ghātikā* cf. *prekshikā* 52. 18, 267. 15.

3) *anadhyavasita* 'unattached', Mhv. III. 201. 5 in a similar context.

4) This sentence and the three extracts from the Vimalakīrtinirdeça are omitted in the Tib.

5) Cf. use of *saha* 178. 3. A marginal note adds: *dhīmatā tathaiva pariṇāmādinā çodhitvāt gṛhasya*. The house of Vimalak. in Vaiçālī was long celebrated for its sanctity (Takakusu, I-tsing, p. xxxiii, n. 2; S. Beal, Life of Hiuen-Ts., p. 100).

6) The first of the eight miracles was (as Mr. Watters informs me from the Chinese version of the sūtra quoted) the miraculous filling of the house with 'brilliant golden light'.

दृशं सुखं काये ऽवक्रान्ते यादृशं सर्व[118a]सुखमण्डितायां लोकधातौ बोधिसत्त्वानां सुखं। सर्वरोमकूपेभ्यश्च तेषां तादृशो गन्धः प्रवाति। तद्यथापि नाम तस्यामेव सर्वगन्धसुगन्धायां लोकधातौ वृक्षाणां गन्धः॥

पुनश्चोक्तं[1]। यैश्च भदन्तानन्द भिक्षुभिरनवक्रान्तनियामैरेतद्भोजनं भुक्तं तेषामेवावक्रान्तनियामानां परिणंस्यति। पे। यैरनुत्पादितबोधिचित्तैः सत्त्वैः परिभुक्तं तेषामुत्पादितबोधिचित्तानां परिणंस्यति। यैरुत्पादितबोधिचित्तैर्भुक्तं तेषां नाप्रतिलब्धक्षान्तिकानां परिणंस्यतीति विस्तरः॥

[2]शून्यताकरुणा गर्भचेष्टितात्पुण्यशोधनम्॥

उक्तं ह्यार्यगगनगञ्जसूत्रे। यद्गताहंकारविशुद्धं तद्दानं ददाति। ममकारविशुद्धं तद्दानं ददाति। हेतुविशुद्धं तद्दानं ददाति। दृष्टिविशुद्धं तद्दानं ददाति। निमित्तविशुद्धं तद्दानं ददाति। नानात्वविशुद्धं तद्दानं ददाति। विपाकप्रतिकाङ्क्षाविशुद्धं तद्दानं ददाति। यथा गगनं [ ] समविशुद्धं तद्दानं ददाति॥ पे। यथा गगनमपर्यन्तमेवमपर्यन्तीकृतेन चित्तेन तद्दानं ददाति। यथा गगनं विस्तीर्णमनावरणमेवं बोधिपरिणामितं तद्दानं ददाति। यथा गगनमरूपि एवं सर्वरूपानिश्रितं तद्दानं ददाति। यथा गगनमवेदयितृ ' एवं सर्ववेदितप्रतिप्रस्रब्धं दानं ददाति। एवमसंज्ञि असंस्कृतमविज्ञप्तिलक्षणमेवमप्रतिज्ञानं तद्दानं ददाति। यथा गगनं सर्वबुद्धक्षेत्रस्फरणमेवं सर्वसत्त्वमैत्रीस्फरणं तद्दानं ददाति। पे। यथा गगनं सदाप्रकाशमेवं चित्तप्रकृतिविशुद्धं तद्दानं ददाति। यथा गगनं सर्वसत्त्वावकाशं एवं सर्वसत्त्वोपजीव्यं तद्दानं ददाति। यावद्यथा निर्मितो निर्मिताय ददाति निर्विकल्पो ऽनाभोगः। चित्तमनोविज्ञानविगतः सर्वधर्मनिःप्रतिकाङ्क्षी। एवं द्वय[3]विगमतया मायालक्ष-

1) This (as Mr. Watters informs me) is taken from a later chapter of the nirdeça and forms part of Vimalakīrti's answer to Ānanda's question as to how long was required for the fragrant food to digest.

2) At this point the Tib. version is resumed (166. b. 3). *çūṇy.* has apparently the meaning suggested p. 272, n. 4 below.

3) The Tib. seems to have read *vijñānavigamatayā* (167 a. 3).



णस्वभावविशुद्धं बोधिसत्त्वस्तद्दानं ददाति। यस्येदृशो दानपरित्यागः प्रज्ञाज्ञानेन च सर्वसर्व[118b]क्लेशपरित्यागः ' उपायज्ञानेन च सत्त्वापरित्यागः। एवं त्यागचित्तः कुलपुत्र बोधिसत्त्वो गगनसमदानो भवति॥

आर्याक्षयमतिसूत्रे ऽप्युक्तं। नास्ति सत्त्वोत्पीडनादानम्। यावन्नास्ति यथोक्ते ऊनदानं। यावन्नास्ति सर्वसत्त्वेषु दक्षिणीयावमन्यनादानं। पे। नास्ति निक्रन्ददानं यावन्नास्ति याचनकेषूपतप्तदानं नास्त्युच्चग्घनोल्लापनदानं[1] नास्ति पराङ्मुखदानं नास्त्यपविद्धदानं नास्त्यस्वहस्तदानं। पे। नास्त्यकल्पिकदानं। नास्त्यकालदानं नास्ति विषशस्त्रदानं नास्ति सत्त्वविहेठनादानमिति॥

यत्तदुग्रपरिपृच्छायामुक्तं। दानपारमिताकालो ऽयं यस्य येनार्थस्तस्य तत्प्रदानकालः। अपि तु तथाहं करिष्यामि ' मद्यपेभ्य एव मद्यपानं दास्यामि ' तांस्तान् स्मृतिसंप्रजन्ये समादापयिष्यामीति॥

मद्यपानादपि नैराश्य[2]कृते बोधिसत्त्वे प्रतिघो गरीयान्। सत्त्वसंग्रहहानिश्चातो ' ऽन्यप्रसादनोपायासंभवे मद्यं देयमित्यभिप्रायः। शस्त्रादिष्वपि यद्यनुबन्धगुरुलाघवविचाराद्दानमापद्येत ' नैवापत्तिरित्यत एव गम्यते। सूत्रेषु तु सामान्येन प्रतिषेध ' इत्युक्ता दानविशुद्धिदिक्॥

शीलविशुद्धिरार्यगगनगञ्जसूत्रे एवाभिहिता। अविरहितबोधिचित्तता चित्तविशुद्ध्यै अपगतश्रावकप्रत्येकबुद्धचित्तता प्रामाणिकविशुद्ध्यै इत्यादि॥

1) The Tib. here renders this བསྡིང་པ་ 'scolding' (but see pp. 45 n. 3, 185. 1); *ullāpana* སྙེད་ 'wheedling, coaxing'. The transition of meaning from 'raising the voice' (cf. *samullap* in Skt, and for Pāli, Morris in JPTS 87, pp. 141—2) to the above sense is hinted at by Dhammapāla on Therī-g. st. 357: *ullapanā ti aho sukham aho sukham ti uddhaṃ uddhaṃ lapāpaneti* (ed. PTS p. 243). The whole compound is illustrated by Saṃghād. III. i. 1. (= Vinayap. III. p.128. 1) *itthiyo .. dhuttikā . . ullapanti pi ujjhagganti pi* (Pali *jaggh, jhagg* = चघ्).

2) °*sya* MS.

पुनरपरा शीलविशुद्धिः। शुद्धं गगनं शुद्धं तच्छीलं। विमलं गगनं विमलं तच्छीलम्। शान्तं गगनं शान्तं तच्छीलं। अनुन्नतं गगनमनुन्नतं तच्छीलं। अनुनीतं गगनमनुनीतं तच्छीलम्। यावदक्षेप्याभेद्यं गगनमक्षेप्याभेद्यं तच्छीलमित्यादि ॥ अप्रतिहतं गगनं सर्वसत्त्वाप्रतिघचित्तस्य क्षान्तिपरिशुद्धिः। समप्रयोगं गगनं सर्वसत्त्वसमचित्तस्य क्षान्तिपरिशुद्धिरित्यादि ॥ तद्यथापि स्यान्महाशालवनं, तस्मि[119a]न् कश्चिदेवागत्य शालं छिन्द्यात्, तत्र तेषामवशिष्टानां नैवं भवति, एष छिन्नो वयमच्छिन्ना इति। न तेषामनुनयो न प्रतिघः। न कल्पो न विकल्पो न परिकल्पः ॥ यैवं क्षान्तिरियं बोधिसत्त्वस्य परमा गगनसमा क्षान्तिर्, [इति][1] ॥

आर्यरत्नचूडसूत्रे विस्तरमुक्त्वा आह। इदमुच्यते वीर्यं। तस्य कायपरिशुद्धिः[2]। यत्कायस्य [3]प्रतिभासप्रतिबिम्बज्ञानं वाचोऽनभिलाप्यज्ञानं। चित्तस्यात्यन्तोपशमज्ञानं। तथा मैत्रीसंनाहसंनद्धो महाकरुणाधिष्ठानप्रतिष्ठितः। सर्वाकारवरोपेतं शून्यता[4]काराभिनिर्हृतं ध्यानं ध्यायति। तत्र कतमा सर्वाकारवरोपेता [5]शून्यता। या न दानविकला, यावन्नोपायविकला, न महामैत्रीमुदितोपेक्षाविकला, न सत्यज्ञानावतारविकला, न बोधिचित्तसत्त्वापेक्षाविकला, नाशयाध्याशयप्रयोगविकला, न दानप्रियवद्यतार्थक्रिया समानार्थताविकला। न स्मृतिसंप्रजन्यविकला। न [5]स्मृत्युपस्थानसम्यक्प्रहाणर्द्धिपादेन्द्रियबलबोध्यङ्गाष्टाङ्गमार्ग[5]विकला न शमथविपश्यना[6]विकला। पे। उपशान्ता च स्वभावेन,

1) supplied from the Tib. (168. a. 3) in which the end of the quotation is duly marked. The Skt. MS. runs on °*kshāntir ārya*° without break of *sandhi*.

2) The Tib. apparently read this clause: *kā pariçuddhir iti*.

3) Cf. 204. 15,16. *pratibh.* 'illusion' B. & R. on authority of M. Vyutp.; Tib. མིག་ཡོར་ 'mirage'.

4) For *çūnyatā* in connexion with *dhyāna* cf. Dh.-sṇi § 344 (and C. F. Davids ad loc.), also ibid. 121; together with *nirvāṇa* explained by Buddhaghosa (Atthasl. § 472) as freedom from *rāga-dosa-moha*.

5) . . . 5) Dh.-sgr. §§ 44—50; M. Vyutp. §§ 38—44.

6) Dh.-sgr. § 117 note (p. 64) and Pugg.-p. p. 61 § 26.



अनुपशान्ता च कर्मक्लेशेषु, उपेक्षिका च सर्वधर्माणां, अवेक्षिका च बुद्धधर्माणां। जह्मा[1] च स्वलक्षणेन। विक्रान्ता चाधिष्ठान[2]कार्यतया। अव्यापृता च स्वरसेन। सदा व्यापृता च बुद्धकार्येषु। शीतीभूता चोपशमेन। सदोज्ज्वलिता च सत्त्वपरिपाके, इयमुच्यते सर्वाकारवरोपेता शून्यता॥ यावदियं कुलपुत्र ध्यानपारमिता चर्यापरिशुद्धिरिति ॥

एतेन प्रज्ञापरिशुद्धिर्वेदितव्या। एवं सर्वपुण्येष्विति ॥

तथार्यविमलकीर्तिनिर्देशेऽप्युक्तं। सद्धर्मचक्रप्रवर्तनमहापरिनिर्वाणसंदर्शनगोचरश्च बोधिसत्त्वचर्याऽत्यजनगोचरश्चायमपि बोधिसत्त्वस्य गोचर, इति ॥

भोगपुण्यशुद्धिः पञ्चदशः परिच्छेदः ॥ १५ ॥

## XVI.

## भद्रचर्याविधिः षोडशः परिच्छेदः ॥

इदानीं त्रयाणामपि वृद्धिर्वा[119b]च्या ॥

किमर्थं।

> ग्रहीतारः सुबहवः स्वल्पं चेदमनेन किं।
> न चातितृप्तिजनकं वर्धनीयमिदं ततः ॥

अ[ति][3]तृप्ति बुद्धत्वं, तन्न श्रावकसाधारणेन शुद्धिमात्रेण सत्त्वानां जन्यत इत्यर्थः।

> आत्मभावस्य का वृद्धिर्बलानालस्य वर्धनं ॥

1) Only found in M.-Vyutp. § 20.31 and there at end of cpd.

2) 'blessing' Tib.; cf. Divy. Ind. s. v. *adhitishṭhati*.

3) I have added these letters because the Tib. has alike in both clauses མེད་དུ་དམིགས་པ་ (168. b. 6).

तत्रार्यरत्नमेघे बलमुक्तं । न स सत्त्वः सत्त्वनिकाये संविद्यते यो बोधिसत्त्वस्य बलेन बलं मर्दयेदित्यादि ॥

तस्य कथं वर्धनम् । यदुक्तमार्यतथागतगुह्यसूत्रे[1] आर्यवज्रपाणे[र्]बलदर्शनविस्मिताजातशत्रुपृष्टेन भगवता । दशभिर्महाराज धर्मैः समन्वागतो बोधिसत्त्व एवंरूपां बलवत्तां प्रतिलभते । कतमैर्दशभिः । इह महाराज बोधिसत्त्वः कायं जीवितं च परित्यजति । न च पुनः सद्धर्मं परित्यजति । सर्वसत्त्वानां चावनमति न च पुनर्मानं बृंहयति । दुर्बलानां च सत्त्वानां क्षमते । न प्रतिघं करोति । जिघत्सितानां[2] च सत्त्वानामग्रं वरभोजनं ददाति । भीतानां च सत्त्वानामभयं ददाति । ग्लानानां च सत्त्वानां भूतचिकित्सायै उत्सुको भवति । दरिद्रांश्च सत्त्वान् भोगैः संतर्पयति । तथागतचैत्ये च सुधापिण्डलेपनं[3] करोति । आनन्दवचनं सत्त्वानां श्रावयति[4] । दरिद्रदुःखितानां च सत्त्वानां भोगसंविभागं करोति । आक्लान्तानां च सत्त्वानां भारं वहति । एभिर्महाराज दशभिरिति ॥

1) On this work Mr. Watters kindly gives the following information supplementary to p. 7 n. 5 above: «The Chinese book, Nanj. 23 (3) and 1043, is evidently the Tathāgataguhyasūtra of the Çikshāsamuccaya and the Tathāgatācintyaguhyanirdeça of your note [p. 7, n. 5]. The latter is the title of the work in № 1043, except that, instead of °*nirdeça*, there is °*mahāyānasūtra*. The Chinese treatise is totally different in matter and character from the Nepalese [Sanskrit] work described by Rāj. Mitra [Skt. Buddh. Lit. Nepal, p. 261]. It is not, in either form, in 18 chapters.» The very harsh construction of the opening phrase seems from the Tib. (169. a. 1) to be genuine. The following account by Mr. Watters from Ch. 6, 7 of the Chinese version makes the situation clear. «Ajātaçatru is with Buddha on the Gṛdhrakūṭa mountain at Rājagṛha. Vajrapāṇi Bodhisatva is there also. The King expresses curiosity as to the weight of Vajrapāṇi's mace. The mace is put on the ground, and the King, Indra, and Maudgalyāyana in succession try in vain to lift it. Ajātaçatru expresses surprise to Buddha at Vajrapāṇi's lifting the mace with ease, and asks how such infinite strength or power as that of Vajrapāṇi could be obtained. Buddha replies that there are 10 great means (*dharma*).»

2) Buddh.-Sk. (cf. Pali) for *jighatsatām*.

3) རྫེ་ཐལ་ 'plaster'.

4) The quotation ends at this point in the Tib. (169 a. 6).



अनालस्यवर्धनं कतमत् । यद्वीर्यवर्धनं । यथोक्तं सागरमतिसूत्रे[1] । आरब्धवीर्येण सागरमते बोधिसत्त्वेन भवितव्यं सदा दृढपराक्रमेण । तीव्रच्छन्देन बोधिसत्त्वेन भवितव्यमनिक्षिप्तधुरेण[2] । आरब्धवीर्याणां हि सागरमते बोधिसत्त्वानां न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः । तत्कस्य हेतोः । यत्र सागरमते वीर्यं तत्र बोधिः । कुसीदानां पुनः सुदूरविदूरे बोधिः । नास्ति कुसीदस्य दानं यावन्नास्ति प्रज्ञा [120a] नास्ति कुसीदस्य परार्थ इति ॥

चन्द्रप्रदीपसूत्रेऽप्याह ।

उत्पलं वारिमध्ये वा सोऽनुपूर्वेण वर्धत इत्यादि ॥

इयं संक्षेपादात्मभाववृद्धिः ॥

शून्यता करुणागर्भाद्दानाद्भोगस्य वर्धनं ॥

यथोक्तं वज्रच्छेदिकायां[3] ।

यो बोधिसत्त्वोऽप्रतिष्ठितो दानं ददाति । तस्य पुण्यस्कन्धस्य न सुकरं प्रमाणमुद्ग्रहीतुमिति ॥

महत्यामपि प्रज्ञापारमितायामुक्तं । पुनरपरं[4] शारिपुत्र बोधिसत्त्वेन महासत्त्वेनाल्पमपि दानं ददता सर्वसत्त्वेषु सर्वाकारज्ञतायामुपायकौशल्यपरिणामनतायामप्रमेयमसंख्येयं कर्तुकामेन प्रज्ञापारमितायां शिक्षितव्यम् । तथा सर्वसत्त्वानां मनोरथान्परिपूरयितुकामेन । यावज्जातरूपरजतउद्यानराज्यादिभिरुपकरणैः प्रज्ञापारमितायां शिक्षितव्यमिति ॥

1) Tib. (169. a. 6) °ཞུས་པའི་མདོ °*paripṛcchā-sūtra*, cf. KF 253 (XII.1).

2) Cf. *dhuradhīra* Mhv. I. 90. 13.

3) § 4, p. 21. 11 of the edition.

4) As to this extract compare 243 n. 6.

विना च करुणया न बोधिसत्वानां किंचिच्चेष्टितमिति वक्ष्यामः । इति संक्षेपाद्भोग-
वृद्धिः[1] ॥

पुण्यवृद्धिः सर्ववृद्धीनां मूलमिति तदर्थं परिकरबन्ध उच्यते ॥

कृत्वादावेव यत्नेन व्यवसायाशयौ दृढौ ।
करुणां च पुरस्कृत्य यतेत शुभवृद्धये ॥

चित्तशुद्धिकालभावितानां व्यवसायादीनां प्रयोगारम्भे पुनरामुखीकरणेन दृढताऽऽपा-
दनार्थः श्लोकः । कृत्वेत्यादिपूर्वक एव ॥ आसन्नयुद्धकालानां अस्त्रकौशलादरवत्प्रयोगसम-
कालं दृढीकरिष्यामीति शैथिल्यनिवारणार्थमादिग्रहणम् । तत्र कथं व्यवसायं दृढीक-
रोति ॥

यथार्यसुधन[2] [आर्यमैत्रेयमुपसंप्रक्रान्तः] सम्यक्चर्यानिःसमर्थः । पूर्वान्तकोटीगतका-
यप्रणामः कायसमन्वाहारेण कायबलं दृढीकुर्वाणः । पूर्वान्तकोटीगतकाय चित्तपरिशुद्धि-
निष्कारणसांसारिकचित्तप्रचारसमन्वाहारेण चित्तमनसिकारं निगृह्णन् । पूर्वान्तकोट्यस-

1) At this point the Tib. adds (169 b. 6): བམ་པོ་བཅུ་གཉིས་པའོ ||  «Here ends section the twelfth». This must refer to a division of the book into sections (*bam-po*) independent of that into chapters (*le-u*).

2) The text before the Tib. translator must have been different here, as his version reads: ཇི་ལྟར་འཕགས་པ་ནོར་བཟང་(*Sudhana*)བྱང་ཆུབ་སེམས་དཔའི(*bodhisatvasya*)སྤྱོད་པ་ཇི་སུ་བསྟན་པ་དེ་ནི་ཇི་སུ་རྣམ་པར་སེམས| It is not easy to decide whether the words *Ārya-Maitr° up°* are really in their place here. It will be noticed that there is no trace of them in the Tib. here, though they are reproduced at the end of the extract (= 278.3). A gives them in margin before *aparāntak°* (277.13). Possibly they were added here to make the construction and sense clearer. The long string of participles etc. all qualifying *Sudhanaḥ* is in any case sufficiently harsh. What is most curious of all is, that no hint is given of the origin of the whole succeeding passage, which however I found with considerable difficulty in the Gaṇḍavyūha, R.A.S. MS. Hodgs. 2 ('H'), ff. 245 b 5—246 a. fin. It is thus introduced: *atha khalu Sudhanaḥ çreshṭhidārakaḥ . . . yena samudrasthaḥ janapadaḥ tenopasaṃkrāntaḥ tām eva bodhisatvacaryānuçāsanīm* [cf. 36. n. 3] *anuvicintayan samyak-caryāniḥ-samarthapūrvānta°*.



त्कर्मलौकिककार्यप्रयुक्तनिष्प्रयोजनपरिस्यन्दसमन्वाहारेण प्रत्युत्पन्नप्रयोजनमहासाम-
र्थ्यं विचिन्तयन् । पूर्वान्ताभूतपरिकल्पसमुत्थितवितथसंकल्पसंदर्शितम[120 b]नसिकार-
समन्वाहारेण सर्वबोधिसत्वचर्यासम्यक्संकल्पाभिसंस्कारबलं समुत्थापयन् । अतीतात्मभा-
वार्थप्रयोगारम्भविषमतासमन्वाहारेण सर्वसत्वारम्भवैशेषिकतया ऽध्याशयबलं दृढीकु-
र्वाणः । अतीतकाय[1]समुदाचारनिरास्वादतासमन्वाहारेण । सर्वबुद्धधर्मप्रतिला[2]भप्रयो-
गमहाश्वासप्रतिला[2]भेन्द्रियवेगान्विवर्धयमानोऽतीताध्वविपर्यासप्रयुक्तमिथ्या[3]शयप्रयोगसम-
न्वाहारेण । प्रत्युत्पन्नाध्वसम्यग्दर्शनाविपर्याससंप्रयुक्तेन बोधिसत्वप्रणिधान[4]समादानेन
संततिं परिशोधयन् । पूर्वान्तगता[5]योगवीर्यारम्भकार्यापरिनिष्पन्न[6]र्यसमादानसमन्वाहारेण ।
प्रत्युत्पन्नबुद्धधर्मसमुदागमप्रत्युपस्थानेन महावीर्यारम्भविक्रमेण कायचित्तसंप्रग्रहं[7] संजन[8]-
यमानः । पूर्वान्तकोटीपञ्चगत्यपायनिक्षिप्तात्मपरनिरूपकरणा[9]ख्यनिरूपजीव्यसमुच्छ्रयपरि-
ग्रह[10]समन्वाहारेण । सर्वबुद्धधर्मोत्थापकसर्वजगदुपजीव्यसर्वकल्याणमित्रा[11]रागणसमर्था-
त्मभावपरिग्रहणतया विपुलप्रीतिप्रामोद्यवेगान्विवर्धयमानः प्रत्युत्पन्नजन्माभिनिर्वृत्त-
जराव्याधिमरणशोकाकरभूतं संयोगवियोगनिधानभूतं समुच्छ्रयं । अपरान्तकल्पकोटीगत-
बोधिसत्वचर्याचरणप्रयुक्तस्य सत्वपरिपाचनबुद्धधर्मपरिग्रहप्रयुक्तस्य तथागतसंदर्शनसर्व-

1) *kāyaparyeshṭisamudd°* H.

2) . . 2) *pratilambha . . . pratilambhenendri°* H.

3) *°thyāmayeyogaprayoga* H.

4) *°dhānena saṃtatiṃ* H.

5) *°gatāvīryā°* H.

6) *°pannasamanvāhāreṇa* H.

7) 'exaltation', new to Skt.; Tib. གཟེངས་མཐོ་བ, with which Buddhaghosa's explanation of the Pali *sampaggāha* agrees: *ukkhipanaṭṭhena cittam sampaggaṇhātīti sampaggāho* (Atthasāl. p. 372).

8) *°haṃ janayaṃ* [*sic*] H.

9) *nirupaṇakhyanirupajī* H.

10) *°grahaprayuktasya samanvā°* H.

11) *°mitrārāgaṇa* om. H.

बुद्धनेत्रानुचरणसर्वधर्मभाणकोपस्थानसर्वतथागतशासनसमन्वाहरणप्रयुक्तस्य सर्वधर्मपर्ये-
ष्टिसहायभूतस्य सर्वकल्याणमित्रदर्शनसर्वबुद्धधर्मसमुदानयनप्रयुक्तस्य बोधिसत्वप्रणिधि-
ज्ञानशरीरस्य हेतुप्रत्ययभूतमवलोक्याचिन्त्यकुशलमूलेन्द्रियवेगान्विवर्धयमान इति ॥

आर्याक्षयमतिनिर्देशे महायानसूत्रे ऽप्युक्तं । एको बोधिसत्वो ऽद्वितीयो ऽसहायो ऽनु-
5 त्तरायां सम्यक्संबोधौ [121 a] संनाहं संनह्यति । स वीर्य[1]बलपरिगृहीतेनाध्याशयेनापराव-
काशास्वयं[2]कारी । स्वबलबलोद्गतः । स एवं दृढसंनाहः संनद्धो ' यत्किंचित्सर्वसत्वानां
परिप्रापयितव्यं भविष्यति तदहं परिप्रापयिष्यामि । यत्सर्वार्याः सर्वनवयानसंप्रस्थिता
बोधिसत्वा न परिप्रापयिष्यन्ति तदहं परिप्रापयिष्यामि । न मम दानं सहायकं ' अहं पु-
नर्दानस्य सहायः । न मम शीलक्षान्तिवीर्यध्यानप्रज्ञाः सहायिकाः । अहं पुनः शीलक्षान्ति-
10 वीर्यध्यानप्रज्ञानां सहायो ' नाहं पारमिताभिरुपस्थातव्यो मया पुनः पारमिता उपस्थात-
व्याः । एवं संग्रहवस्तुषु सर्वकुशलमूलेषु चलेयम् । यावदेकाकिना मया ऽद्वितीयेनासहायेन
वज्रमये महीमण्डले स्थितेन सबलं सवाहनं मारं धर्षयित्वा एकं[3][-चित्त]क्षणसमायुक्तया
प्रज्ञया ऽनुत्तरा सम्यक्संबोधिरभिसंबोद्धव्येति ॥

आर्यवज्र[4]ध्वजसूत्रे ऽप्याह । तद्यथापि नाम सूर्यो देवपुत्र उदयमानो न तिष्ठति ' जा-

1) *vārya*° MS.; but Tib. བརྩོན་འགྲུས. The MS. has been corrected here.

2) °*kāçībhyayaṃ*° MS., which again shows marks of alteration. Tib.: ཕ་རོལ་གྱིས་སྐབས་མི་འབྱེད་པར་བདག་ཉིད་བྱེད་དོ། 'he acts of himself so as not to give an opportunity by [? to] another'. *asvayaṃkṛt* does occur, but possibly some *aksharas* are missing.

3) Supplied from Tib. (171 a. 6) སེམས་ཀྱི་སྐད་ཅིག་གཅིག་དང་ལྡན See the parallel passages at Mhv. I. 229. 10 (with Senart ad loc.) and Lal.-v. 447. 16.

4) *vajradhara*° MS. but Tib. as above 22 n. 2. Compare also Çāntideva's own words in Bodhic. VII. 46.: *Vajradhvajasya vidhinā ... mānam ... bhāvayet*; on wh. the Comm. observes: *Vajradhvajasūtra-pratipādita-vidhinā*°.



त्यन्धदोषेण ' न तिष्ठति गन्धर्वनगरदोषेण ' न तिष्ठति चतुर्द्वीपलोकधातुभूमिरजोदो-
षेण ' न तिष्ठति राह्व[1]सुरेन्द्रदोषेण ' न तिष्ठति धूममण्डलदोषेण ' न तिष्ठति जम्बूद्वी-
पक्लेशदोषेण ' न तिष्ठति नानाछायादोषेण ' न तिष्ठति विषमपर्वतदोषेण । एवमेव बो-
धिसत्वो महासत्वः स्मृतिसंप्रजन्यविपुलगम्भीरचेता अदीनसत्वो गुणचर्याज्ञानचर्यावमानं[2]
यावन्न विवर्तते सत्वद्रौहिल्य[3]दोषैः ' न विप्र[4]वसति कुशलमूलपरिणामैः । सत्वदृष्टिकालु- 5
ष्यदोषैर्न विवर्तते । सत्वक्षोभचेतोभिर्न दूरीभवति । सत्वविनष्टसंतत्या बोधिसंनाहं न वि-
ष्कम्भयति । सर्वजगत्परित्राणप्रणिधानस्य सत्वकलिकलुषैर्न स्रंसनां[5] करोति यावद्बालजा-

1) °*husur*° MS.; but Tib. correctly ལྷ་མ་ཡིན (171 b. 1).

2) °*nāṃ* MS.

3) Tib. འཁྲུ་བའི་ངང་ཚུལ་ཅན 'possessing the disposition to injure'. I leave what appears to be the reading of the MS., though one might read द्रौहिन्य and correct to द्रौहिण्य. At this point we find again the same word added in the margin that was noted above p. 149, n. 4. This is to be read in both places as *khaṭuṅka-* (not *khaṭṭaṅka-*) and here, in the abstract form, *khaṭuṅkatā*. This would seem to be a gloss on *drauhilya*; but the Tib. here adds a whole parallel clause: སེམས་ཅན་དམུ་རྒོད་ཀྱི་ཉེས་པས་མི་ལྡོག་གོ, which would imply an additional clause *na vivartate satvakhaṭuṅkatā(?)-doshaiḥ*. The meaning 'violent, wild' is not easy, however, to reconcile with the passage above cited, unless it be through a transition of meaning as in the Eng. 'grasping', 1) rapacious, 2) avaricious; cf. Morris JPTS. 1887, p. 161. In the text of 149. 13, I should now read *kuṭukuñcakāḥ*, comparing Divy. 8. 3, 302. 3, and regarding *khaṭuṅka* as a Prākritic form possibly allied to *kaṭu*. As to initial *kh* for *k* in Skt., cf. Jacobi, Ausgew. Erz. p. xxviii § 21. 2, Pischel Gr. Pr. § 206. If this be correct, the present abstract is the equiv. of Pali *kaṭukañcukatā*: Pugg. p. 19 Dh.-sṅi § 1124 (cf. Buddhagh. ad loc. and cf. C. F. Davids, tr. p. 300), where it follows *kadariyam* 'grasping character'. In the Gaṇḍavyūha (MS. R.A.S. Hodgs. 2 f. 259 a. 4) *bodhicittaṃ* is said to be *ājāneyāçvabhūtam* (cf. supra 26. n. 3, 119. n. 1) *sarva-khaṭuṃkatāyā vigatatayā*. Here *khaṭuṅkatā* = 'wildness, (equine) vice'. The Jain-Pkt. is *khalumka* (cf. Pischel, op. cit. § 226). The exact meaning of this, a combination of violence and grudgingness, is well shown by the parable of the restive bullocks in Uttarādhy. § 27 (tr. S. B. E. xlv. 149, 150 n. 4).

4) 'to be parted from' as in Pali.

5) 'relaxation', fem. form new. *çr*° MS.

नसमवधानेन[1], न निर्विद्यते परसत्त्वदोषैश्च। तत्कस्य हेतोः। अनावरण[121b]मण्डलमे-
तदुदयति, यदुत सर्वजगद्विशुद्धिविनयाय। पे ॥ पश्य तेषां सर्वसत्त्वानां दुःखस्कन्धो वि-
विधं चावरणीयं कर्म समुत्थितं येन ते आवरणीयेन कर्मणा बुद्धान्न पश्यन्ति, धर्मं न शृ-
ण्वन्ति, संघं न जानन्ति। तदहं तेषां त्रिविधमावरणीयं कर्मोपचितं दुःखस्कन्धेन स्व-
5 केन शरीरेणोपाददामि तासु तासु नरकोपपत्तिष्वपायभूमिषु संत्रासेषु च। ते च सर्वसत्त्वा-
स्ततश्च्यवन्तां, अहं च दुःखोपादानमुपाददामि व्यवस्याम्युत्सहे[2], न निवर्ते न पला-
यामि नोत्त्रस्यामि न संत्रस्यामि न बिभेमि न प्रत्युदावर्ते[3] न विषीदामि। तत्कस्य हेतोः।
अवश्यं[.] निर्वाहयितव्यो मया सर्वसत्त्वानां भारो, नैष मम कामकारः, सर्वसत्त्वोत्तारणप्र-
णिधानं मम। मया सर्वसत्त्वाः परिमोचयितव्याः, मया सर्वजगत्समुत्तारयितव्यं, जातिका-
10 न्ताराज्जराकान्ताराद्व्याधिकान्ताराच्च्युत्युपपत्तिकान्तारात्सर्वापत्तिकान्तारात्सर्वापायकान्ता-
रात्सर्वसंसारकान्तारात्सर्वदृष्टिगहनकान्तारात्कुशलधर्मप्रणाशकान्तारादज्ञानसमुत्थितका-
न्तारात्तदेते मया सर्वसत्त्वाः सर्वकान्तारेभ्यः परिमोचयितव्याः। तृष्णाजाल[4]सक्ता अविद्या-
निवरणावृता भवतृष्णासंप्रयुक्ताः प्रणाशपर्यवसाना दुःखपञ्जरप्रक्षिप्ताश्चारकसंनिश्रिता,
अबुधाः प्रतिज्ञाविरुद्धाः संशयभूताः सदा विमतयोऽक्षेमदर्शिनः, अनिःशरणकुशला भवा-
15 र्णवे आवर्तमण्डलैकचरणाः। पे ॥ सर्वसत्त्वानामनुत्तरज्ञानराज्यप्रतिष्ठापनार्थमहं चरामि।
नाहं केवलमात्मपरिमोचनाभियुक्तः। सर्वसत्त्वा ह्येते मया सर्वज्ञताचित्तप्लवेन संसारदुर्गा-
दुद्धर्तव्याः, महाप्रपातादभ्युत्क्षेप्तव्याः। सर्वोपद्रवेभ्यः परिमोचयितव्याः, संसारस्रोतसः
प्रतारयितव्या आत्मना मया सर्वसत्त्वदु[122a]ःखस्कन्धोऽध्यवसितः। यावदुत्सहेऽहं
सर्वापायेषु सर्वलोकधातुपर्यापन्नेषु सर्वदुःखवासमनुभवितुम्। न च मया सर्वसत्त्वाः कुशल-

1) འགྲོགས་ 'association with.; cf. 154. 7.

2) *mutsa*° MS.

3) compound new.

4) *jāla* MS.; but Tib. དྲ་བ (172 a. 5).



मूलैर्वञ्चितव्याः। व्यवस्याम्यहमेकैकस्मिन्नपायेऽपरान्तकोटीगतान्कल्पान्संवसयितुं,
यथा चैकापाये तथा सर्वापायनिरवशेषसर्वलोकधातुपर्यापन्नेषु सर्वसत्त्वपरिमोचननिदानं।
तत्कस्य हेतोः। वरं खलु पुनरहमेको दुःखितः स्यां न चेमे सर्वसत्त्वा अपायभूमिप्रपति-
ताः। मया तत्रात्मा बन्धको दातव्यः। सर्वजगच्च निःक्रेतव्यं नरकतिर्यग्योनियमलोक-
कान्तारादहं च सर्वसत्त्वानामर्थाय सर्वदुःखवेदनास्कन्धमनेन स्वकेन शरीरेणानुभवेयम्। 5
सर्वसत्त्वनिदानमहं च सर्वसत्त्वानां प्रातिभाव्यमुत्सहे सत्यवादी प्रत्ययितोऽविसंवादकः।
न च मया सर्वसत्त्वाः परित्यक्ताः। तत्कस्य हेतोः। सर्वसत्त्वारम्बणो मम सर्वज्ञताचित्तो-
त्पाद उत्पन्नो यदुत सर्वजगत्परिमोचनाय। न चाहं रति[1]कामतयाऽनुत्तरायां सम्यक्संबोधौ
संप्रस्थितो नापि पञ्चकामगुणरत्यनुभवनाय नापि कामविषयनिषेवणाय। न चाहमन्यो-
न्यकामधातुपर्यापन्नरतिव्यूहसमुदानयनाय चरामि बोधिसत्त्वचर्यां। तत्कस्य हेतोः। अर- 10
तयो ह्येषा सर्वलोकरतयः। मारविषय एष यदुत कामविषयनिषेवणं[2]। दुर्बुद्धिसेवितो
ह्येष मार्गः, सर्वबुद्धविवर्णितो ह्ययमुपदेशः यदुत कामनिषेवणं। अतश्चैष सर्वदुःखस्क-
न्धस्योत्पाद एव निषे[वणं] अत एव च नरकतिर्यग्योनियमलोकानामु[122b]त्पादः।
कलहभण्डन[3]विवादतोभाश्च सत्त्वानामत एव प्रादुर्भवन्ति। एते च सत्त्वाः कामान्निषेवमा-
णाः बुद्धानां भगवतां सकाशाद्दूरीभवन्ति। स्वर्गोपपत्तेरप्येते कामा अन्तरायाय संवर्तन्ते, 15
किं पुनरनुत्तरस्य ज्ञानराजस्य सर्वसत्त्वयोगक्षेमस्य। सोऽहमेवमप्रमाणदोषान्कामानां प-
श्यन् परीत्ता[4]नादीप्तांस्तस्मादहमेतन्निदानमचरणतायां प्रतिपत्स्ये ॥ पे ॥ तथा तथैव मया
कुशलमूलं परिणामयितव्यं यथा यथैव सर्वसत्त्वा अत्यन्तसुखमवेदितसुखं यावत्सर्वज्ञतासुखं
प्रतिलभेरन्। मया सारथिना मया परिणायकेन मयोल्काधारिणा मया क्षेमगतिदर्शकेन

1) Doubtless a condemnatory allusion to the tāntrik forms of Buddhism; cf. Poussin Bouddhisme p. 134.

2) *niveshaṇaṃ* (here only) MS.

3) Not known to classical Skt., but occurring as a synonym of *kalaha* in Divy. 164. 25 (*bhāṇḍ*°) and in lexx., e. g. Deçīnāmamālā 101 (*bhaṇḍana*). For Prakrit usage see Jacobi, Ausg. Erz. 13. 28.

4) The Tib. probably had a reading *paridīptān ādīptān*.

मया क्षणगतिप्रतिलब्धेन मयोपायज्ञेन मया ऽर्थविदुषा मया संसारसागरे सर्वज्ञज्ञानयान-
पात्रमहादेशस्थितेन मया परिणामनकुशलेन मया पारदर्शकेन ॥ पे ॥ न खलु पुनरस्मिं-
श्चातुर्महाद्वीपके लोकधातौ यावन्तः सत्त्वास्तावन्त एव सूर्या उदागच्छन्ति चातुर्द्वीपकलो-
कधात्ववभासनाय। अथ च पुनरेक एवैषां सूर्य उदागच्छति चतुर्द्वीपावभासनाय। न च
तेषां सत्त्वानां चतु[123a]र्द्वीपोपपन्नानां स्वकस्वकैः शरीरैरवभासः प्रादुर्भवति ' येन ते
दिवससंख्यां जानीयुः ' स्वकार्यं वा परिप्रापयेयुः ' सस्यानि वा परिपाचयेयुः ' अहरहर्वा[1]
उद्याननगरेषु रतिक्रीडापरिभोगमनुभवेयुः ' दिशो वा पश्येयुः ' गमनागमनं वा ग्रामनगर-
निगमराष्ट्रराजधानीषु कुर्युः ' व्यवहारकार्येषु प्रयुज्येरन्। पे। अथ च पुनः सूर्यस्य
देवपुत्रस्योदयत[2] एकस्य सूर्यमण्डलस्याद्वितीयस्य चातुर्द्वीपके लोकधातौ सर्वसत्त्वानामव-
भासः प्रादुर्भवति। एवमेव बोधिसत्त्वस्य महासत्त्वस्य कुशलमूलान्युपार्जयमानस्य कुशल-
मूलं परिणामयमानस्यैवं चित्तमुत्पद्यते। नैतेषां सत्त्वानां तत्कुशलमूलं विद्यते येन ते आ-
त्मानं परित्रायेरन् ' कः पुनर्वादः परम्। अहं पुनः सर्वसत्त्वानां कृतशः कुशलमूलानि समु-
दानयामि कुशलमूलं परिणामयामि ' यदुत सर्वसत्त्वमोचनाय ' सर्वसत्त्वानामवभासनाय
सर्वसत्त्वानां ज्ञापनाय सर्वसत्त्वानामवतारणाय सर्वसत्त्वानां परिग्रहणाय सर्वसत्त्वानां परि-
निष्पादनाय[3] सर्वसत्त्वानां प्रसादनाय सर्वसत्त्वा[123b]नां प्रह्लादनाय सर्वसत्त्वानां संशयच्छे-
दनाय आदित्यमण्डलकल्पैरस्माभिर्भवितव्यं। न परः प्रतिकाङ्क्षितव्यः। न परस्यावका-
शमुत्पाद्य[4] सत्त्वेषु संनाह उत्स्रष्टव्यः। न च सर्वसत्त्वानामन्तिकात्सर्वसत्त्वत्राणाध्यवशायो

1) The MS. seems to read *aharahor*.

2) Sic MS. The Pali *ento* implies a partic. *ayant*.

3) The final letters are not clear, nor does this form occur; but the Tib. ཡོང་སུ་བསྒྲུབ་པ་ (174 a. 2) and the usage of *parinishpad* in Buddh.-Skt. leave no doubt of its genuineness.

4) The text has been corrected here. The MS. is also fractured. The actual reading is *na parasyā* ‒ ‒ ‒ ‒ *tpādya*°. Two *aksharas* have been deleted and two more broken away. In the margin is written *sakāçāt*. The above text is founded on this and on the Tib. གཞན་ལ་སྐབས་ཕྱེ་ཞིང་



निवर्तयितव्यः। न परिणामनायाः सर्वदुःखहत्या[1] विनिवर्तितव्यं। न परीत्तानि कुशलमू-
लानि परिग्रहीतव्यानि। न परीत्तया परिणामनया तुष्टिर्मन्तव्या इत्यादि ॥

आर्याक्षयमतिसूत्रेऽप्याह। स न कल्पगण[न]या बोधिं पर्येषते। इयतः कल्पान्
संनत्स्यामि[2]। इयतः कल्पान् संनत्स्यामीति[2]। अपि तु खल्वचिन्त्यमेव संनाहं संनह्यति।
यावती पूर्वाकोटिः संसारस्य [य]द्येतावदेकं रात्रिंदिवं भवेत् ' एवंरूपै रात्रिंदिवैः पञ्चद-
शदैवसिकेन पक्षेण त्रिंशद्दैवसिकेन मासेन द्वादशमासिकेन संवत्सरेण अनया वर्षग[ण]नया
यावद्वर्षशतसहस्रेणैकं बोधिचित्तमुत्पादयेयमेकं च तथागतमर्हन्तं सम्यक्संबुद्धं पश्येयं।
अनेन प्रवेशेनानया गणनया गङ्गानदीवालुकासमैश्चित्तोत्पादैस्तथागतदर्शनैश्च[3] एकैक-
स्या[124a]पि सत्त्वस्य चित्तचरितं जानीयां। अनेनैव प्रवेशेनानया गणनया सर्वसत्त्वानां
तावद्भिश्चित्तोत्पादैस्तथागतदर्शनै[:]स्वचित्तचरितानि प्रजानीयामित्यनवलीनः। संना-
होऽयं बोधिसत्त्वस्याक्षयः संनाहः। एवं दानादिषु बोधिपाक्षिकमहापुरुषलक्षणेषु च
नयः[4] ॥

आर्यरत्नमेघेऽप्युक्तं ॥ न बोधिसत्त्वः सत्त्वखटुङ्कतां[5] सत्त्वदुर्दान्ततां ज्ञात्वा ' अलमेभिः
सत्त्वैरेवं खटुङ्कैरेवं दुर्दान्तैरिति ' ततो निदानं परिखिन्नः परापृष्ठीभूतः[6]। परिशुद्धायां
लोकधातौ प्रणिधानं करोति ' यत्रेदृशानां सत्त्वानां नामापि न शृणुयात्। न च सत्त्वार्थवि-
मुख्यस्य[7] बोधिसत्त्वपरिशुद्धायां लोकधातावुपपत्तिर्भवति। तत्र प्राज्ञो बोधिसत्त्व एवं चि-

1) The MS., which has been corrected, reads apparently *harttyā*. The Tib. བསལ་ suggests possibly *hṛti* rather than *hati*.

2) . . . 2) The Tib. does not reproduce the repetition. In the second clause it would be easy to read *kalpān na*.

3) °*likā* MS.

4) *nayaṃ* MS. Tib. སྒྱུར་རོ [174 b. 2].

5) See p. 279, n. 3.

6) རྒྱ་ཀྱིས་ཕྱོགས་པར་འགྱུར 'turning one's back', as Divy.-Index interprets the form.

7) *vimukhya*° MS.

न्तमुत्पादयति । तस्मात्सत्त्वधातोर्ये सत्त्वाः स्युः प्रत्यवरा ध—[1]ण्डएडमूक[2]जातीयाः ' अपरिनि-
र्वाणधर्मकाः कृत्स्ना सत्त्वधातौ न चिकित्सिताः[3] सर्वबुद्धैः सर्वबोधिसत्त्वैश्च प्रत्याख्याताः ।
तेषां मदीये बुद्धक्षेत्रे संनिपातः स्यात् । तानहं सर्वान्बोधिमण्डे निषीद्यानुत्तरां सम्यक्सं-
बोधिमभिसंबोधयेयं ॥ एवं हि बोधिसत्त्वस्य चिन्तय[124 b]तश्चित्तोत्पादे चित्तोत्पादे सर्व-
5 मारभवनानि[4] प्रकम्पन्ते ' सर्वबुद्धाश्चास्य वर्णवादिनो भवन्तीति ॥

एवं तावत्पुण्यवृद्धिकामेन [आ]शयो दृढीकर्तव्यः । [5]आशयदृढीकरणार्थमधुनोच्यते ।

किं पुनरनेन दृढीकृतेनेति विमर्षनिरासाय धर्मसंगीतिसूत्रे गदितं । आशये सम्यग्
भगवन् बुद्धधर्माणां मूलं । यस्य पुनराशयो नास्ति सर्वे बुद्धधर्मास्तस्य दूरे ॥ आशयसंप-
न्नस्य पुनर्भगवन्यदि बुद्धा न भवन्ति गगनतलाद्धर्मशब्दो निश्चरति कुड्यवृक्षेभ्यश्च[6] । आश-
10 [य]शुद्धस्य बोधिसत्त्वस्य स्वमनोजल्पादेव सर्वाववादानुशासन्यो निश्चरन्ति । तस्मात्तर्हि
भगवन् बोधिसत्त्वेनाशयसंपन्नेन भवितव्यं ॥ तद्यथा भगवन् यस्य पादौ तस्य गमनं एवं
भगवन्यस्याशयस्तस्य बुद्धधर्माः । तद्यथा भगवन् यस्योत्तमाङ्गं तस्य जीवितं एवमेव
भगवन् यस्याशयस्तस्य बुद्धबोधिः । तद्यथा भगवन् यस्य जीवितं तस्य लाभः । एवमेव
भगवन् यस्याशयस्तस्य बुद्धत्वलाभः । तद्यथा भगवन् सतीत्वेनाग्निर्ज्वलति[7] । असतीत्वेन न

1) There is an erasure here. The equivalent Tib. appears to be (though the print is not clear) བརྩོན་འགྲུས་ཆུང 'small in valour'.

2) Cf. Thomas (in J.R.A.S. '99. 491) on Harṣa-c. 14. 10.

3) MS. originally *ni cakitāḥ*, corrected to *na cikicchitāḥ*. Tib. འདེལས་བསྐྱིགས་པ (174 b. 5).

4) Cf. Mhv. II. 163. 18.

5) Tib. བསམ་པ also used as rendering of *saṃkalpa* which like *āçaya* is used for 'determination, resolve'.

6) I follow here, as in several passages above, the punctuation of the Tib. (175 a. 2). The MS. reads and punctuates: *niçcarati* | *kuḍm*° *ca āçaçuddhasya*.

7) Both MS. and Tib. are obscure. The former reads *satītvanenāgnir*°, the latter omits *āgni* and *jvalati* in both clauses.



ज्वलति । एवमेव भगवन्नाशये सति बोधिसत्त्वस्य सर्वबुद्धधर्मा ज्वलन्ति । असत्याशये न
ज्व[125 a]लन्ति । तद्यथा भगवन्सत्स्वभ्रमेघेषु वर्षं वर्षत्यसत्सु न वर्षति । एवमेव
भगवन्नाशये सति बुद्धधर्माः प्रवर्तन्ते । तद्यथा भगवन् यस्य वृक्षस्य मूलं विपन्नं तस्य पुष्प-
फलानि न भूयः प्ररोहन्ति । एवमेव भगवन्यस्याशयो विपन्नस्तस्य सर्वे कुशला धर्मा न भूयः
संभवन्ति । तस्मात्तर्हि भगवन्बोधिसत्त्वेन बुद्धबोध्यर्थिकेन स्वाशयः सूद्गृहीतः[1] स्वारक्षितः 5
सुशोधितः स्वधिष्ठितः कर्तव्य इति ॥

कोऽयमाशयो नाम । आर्याक्षयमतिसूत्रेऽभिहितः । स खलु पुनराशयोऽकृत्रिमः अकृ-
तकत्वात् ' अकृतको निःसाध्यत्वात् ' निःसाध्यः सुविदितत्वात् ' सुविदितो निर्मायत्वात् '
निर्मायः[2] शुद्धत्वात् ' शुद्धः ऋजुकत्वात् ' ऋजुकः अकुटिलत्वात् ' अकुटिलः स्पष्टत्वात् '
स्पष्टो अविषमत्वात् ' अविषमः सारत्वात् । सारो अभेद्यत्वात् । अभेद्यो दृढत्वात् । दृढो 10
ऽचलितत्वात् ' अचलित अनिश्रितत्वादित्यादि । अयमेव चाधिकाधिकगुणाधिगमप्रवृत्तो
ऽध्याशय इत्युच्यते ॥

यथात्रैवोक्तं । उत्तरणाध्याशयो विशेषगमनतया इत्यादि ॥

अपि चाध्याशय उच्यते । सौम्यता[3] भूतेषु ' मैत्रता सत्त्वेषु ' हितचित्तता आ[125b]र्येषु '
कारुण्यमनार्येषु ' गौरवं गुरुषु ' त्राणता अत्राणेषु ' शरणता अशरणेषु ' द्वीपता ऽद्वी- 15
पेषु[4] ' परायणता अपरायणेषु । सहायता असहायेषु ' ऋजुता कुटिलेषु । स्पष्टता खटुङ्केषु[5] ।

1) ཤིན་ཏུ་བཟུང་བ 'well affected, quite captivated'.

2) སྒྱུ་མེད་པ 'guileless'.

3) This combination is not clearly legible. The equiv. Tib. appears to be དེས་པ

4) Cf. Karaṇḍa-vyūha 45. 18, a similar context.

5) Cf. 279, n. 3. Tib. (176 a. 1) དམུ་ཀོད་རྣམས་ལ་གསལ་བའི meaning perhaps clearness, purity of character amongst the vicious.

अशठता शठेषु । अमाया आगहनचरितेषु[1] । कृतज्ञता अकृतज्ञेषु । कृतवेदिता[2] द्रोहिषु । उपकारिता अनुपकारिषु । सत्यता अभूतगतेषु[3] । निर्मानता अब्धेषु[4] । अनिन्दिता सु- †अनिन्दना[5]† कृतेषु । अनारोचनता परस्खलितेषु । आरक्षणता विप्रतिपन्नेषु । अदोषदर्शनता सर्वोपायकौशल्यचर्यासु । शुश्रूषणता सर्वदक्षिणीयेषु । प्रदक्षिणग्राहिता[6]ऽनुशासनी- 5 ष्वित्यादि ॥

तदेवं व्यवसायाशयौ दृढीकृत्य कारुण्यं पुरस्कृत्य यते शुभवृद्धये ॥

यथोक्तमार्यधर्मसंगीतिसूत्रे । अथ खल्ववलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् । न भगवन्बोधिसत्त्वेनातिबहुषु धर्मेषु शिक्षितव्यं । एको धर्मो भगवन् बोधिसत्त्वेन स्वाराधितः सुप्रतिविद्धः कर्तव्यः । तस्य सर्वबुद्धधर्माः करतलगता भवन्ति । कतम 10 एकधर्मो । यदुत महाकरुणा । महाकरुणया भग[126a]वन्बोधिसत्त्वानां सर्वबुद्धधर्माः करतलगता भवन्ति । तद्यथा भगवन् येन राज्ञश्चक्रवर्तिनश्चक्ररत्नं गच्छति । तेन सर्वो बलकायो गच्छति । एवमेव भगवन् येन बोधिसत्त्वस्य महाकरुणा गच्छति । तेन सर्वे बुद्धधर्मा गच्छन्ति । तद्यथा भगवन्नादित्ये उदिते सत्त्वाः कर्मक्रियासु प्रचुरा भवन्ति । एवमेव भगवन् महाकरुणा यत्रोदिता भवति तत्रान्यबोधिकरा धर्माः क्रियासु प्रचुरा भव-

1) The Tib. renders simply: 'guileless amongst the wily' སྒྱུ་ཅན་རྣམས་ལ But the MS. reads *vigatāgahac°* with a mark of deletion over the syllable *ga* only. As to *gahana* see 172 n. 4. An over-reaching character seems to be meant.

2) The Tib. equiv. འཚེར connects this with *vedanā*, thus reminding one of the Shaksperian «more in sorrow than in anger».

3) ལོག་པར་ཞུགས་པ 'such as have walked in error'.

4) ཡོ་བྱེག་ཅན Tib. (167. a. 2). The reading is not clear. B² observes of √*çrabh*: 'simplex nicht belegt'. *stabdh°* transcr., perhaps rightly.

5) MS. corrected and the form *°danā* added in the margin at this point.

6) མཐུན་པར་འཛིན་པ apparently 'disposition to take in good part, to receive with respect': cf. M. Vyutp. § 126. 16.



न्ति । तद्यथा भगवन् सर्वेषामिन्द्रियाणां मनसाऽधिष्ठितानां स्वस्वविषये ग्रहणप्राचुर्यं भवति । एवमेव भगवन् महाकरुणाधिष्ठितानामन्येषां बोधिकराणां धर्माणां स्वस्मिन् स्वस्मिन् करणीये प्राचुर्यं भवति । तद्यथा भगवन् जीवितेन्द्रिये सत्यन्येषामिन्द्रियाणां प्रवृत्तिर्भवति । एवमेव भगवन्महाकरुणायां सत्यामन्येषां बोधिकराणां धर्माणां प्रवृत्तिर्भवतीति ॥ 5

आर्याक्षयमतिसूत्रेऽप्याह ॥ तद्यथापि नाम भदन्त शारद्वतीपुत्र पुरुषस्य जीवितेन्द्रियस्याश्वासाः प्रश्वासाः पूर्वंगमाः । एवमेव भदन्त शारद्वतीपुत्र बोधिसत्त्वस्य महायानसमुदागतस्य महाकरुणा पूर्वंगमा ॥ पे ॥ स्याद्यथापि नाम श्रेष्ठि[126b]नो वा गृहपतेर्वा एकपुत्रके गुणवति मज्जागतं[1] प्रेम । एवमेव महाकरुणाप्रतिलब्धस्य बोधिसत्त्वस्य सर्वसत्त्वेषु मज्जागतं प्रेमेति ॥ 10

कथमेषा भावयितव्या । स्वकमनेकविधं पूर्वानुभूतमनुभूयमानं वा दुःखं भयं च स्वात्मन्यत्यन्तमनिष्टं भावयित्वा । प्रियादिषु मै[2]त्री मैत्रीवता भावयितव्या[3] प्रत्युत्पन्नदुःखव्याधिषु महादुःखसागरानवधिदीर्घसंसारव्यसनानुनीतेषु[4] वा ॥

यथोक्तमार्यदशभूमकसूत्रे[5] । तस्यैवं भवत्याश्चर्यं यावदज्ञानसंमूढा बतेमे बालपृथग्जनाः । येषामसंख्येया आत्मभावा निरुद्धा[6] निरुध्यन्ते निरोत्स्यन्ते च । एवं च क्षीयमाणा काये न 15 निर्वेदमुत्पादयन्ति । भूयस्या मात्रया दुःखयन्त्रं[7] विवर्धयन्ति । संसारस्रोतसश्च महाभयान्न

1) Cf. usage of Latin *medulla*.

2) *vat* (*maitrīvat bhāvayitavyā*) *karuṇā* marg.

3) *°vyāḥ* MS.

4) *priyādishu anunayam gateshu mohāt* marg.

5) The text corresponds with Ch. V. f. 56 b of the Daçabhūmīçvara, Paris MS. cited from a transcript lent to me by Prof. de la Vallée-Poussin. Principal variants cited as 'P'. I have also collated it with my photograph (I. b. 4. l. 2) of the ancient MS. 'K' described at f. 128 b note, below.

6) om. P.

7) *skandhaṃ* P.; but Tib. འཕྲུལ

निवर्तन्ते । स्कन्धालयं च नोत्सृजन्ति । धातू[1]रगेभ्यश्च न निर्विद्यन्ते । नन्दी[2]रागान्धाश्च नावबुध्यन्ते । षडायतनशून्यग्रामं च न व्यवलोकयन्ति । अहंकारममकाराभिनिवेशानुशयं च न प्रजहन्ति[3] । मानदृष्टिशल्यं[4] च नोद्धरन्ति । रागद्वेषमोहजालं[5] च न प्रशमयन्ति । अविद्यामोहान्धकारं च न विधमयन्ति । तृष्णार्ण[127 a]वं च नोच्छोषयन्ति । दशबलसार्थवाहं च न पर्येषन्ते । माराशयगहनानुगताश्च[6] संसारसागरे विविधाकुशलवितर्कग्राहाकुले परिप्लवन्ते[7] । अप्रतिशरणाः तथा संवेगमापद्यन्ते बहूनि दुःखानि प्रत्यनुभवन्तः । यदिदं जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासान्[7] । हन्ताहमेषां सत्वानां दुःखार्तानामनाथानामत्राणानामशरणानामलयनानामपरायणानामन्धानामविद्याण्डको[8]षपटलपर्यवनद्धानां तमोऽभिभूतानामर्थायैकोऽद्वितीयो भूत्वा तथारूपपुण्यज्ञानसंभारोपचयं बिभर्मि । यथारूपेण पुण्यज्ञानसंभारोपचयेन संभृतेन इमे सर्वसत्वा अत्यन्तविशुद्धिमनुप्राप्नुयुरिति ॥

तथात्रैवाह[9] । संसाराटवीकान्तारमार्गप्रपन्ना वतेमे सत्वा[10] निरयतिर्यग्योनियमलोकप्र-

1) The MS. (A.) read originally *valūragebhyaç ca* and this has been corrected to the reading of the text, which is confirmed by K., and by P. not only in the parallel passage of prose, but also in the verses at the end of the chapter. Here (f. 62b) the line *skandhālayā ura*[ga]*dhātu kudṛshṭiçalyaṃ* occurs. The Tib. (177. a. 3) has: 'phantoms (སྤྲུ་ལ) of elements'. *Uraga* is not quoted in this sense; but snakes have sometimes (e. g. Jāt. № 154) the power of metamorphosis.

2) Cf. Divy. 37. 25; M. Vyutp. 244. 121 and Ch. s. v. *nandī. rāgāntaçcāratāṃ na cāvab°*. K; *rāgataçcārakaç ca* P.; but Tib. with our text.

3) *hānti* P.

4) For the metaphor compare 231. 2.

5) *jālaṃ* A; *jvalanaṃ* P.; Tib. མེ་ལྕེ་འབྲབ་(?)ཉེ་བར་མི་བྱེད (177 a. 4).

6) The Tib. construes this compound with the previous clause, and takes *gahana* in the sense of 'gloom' ཐིབས

7) . . 7) omitted in Tib. *°çaraṇa na ca saṃ°* P. Below P. omits *atrāṇ°* and *andh°* and inserts *advīpānām* before *aparāy°*.

8) Cf. 6. 12.

9) The readings in this extract correspond generally not with the text of the Daçabhūmīçvara (Ch. 2) as given in MS. C, which is much abbreviated (fol. 29 b. 7); but with those of the old fragment (K.). See note to 128. b.

10) Here K. inserts *ayogakheminenāsvāmiprāptā* (*°mitven°*?) *mahaprapātaprapatitā*.



पाताभिमुखाः कुदृष्टिविषमजालानुप्राप्ताः[1] मोहगहनसंछन्ना मिथ्यामार्गवितथप्रयाता । अन्धीभूताः परिणायकविकलाः ॥ पे ॥ संसारश्रोतानुवाहिनः तृष्णानदीप्रपन्नाः । महावेगग्रस्ता । अवलोकनाऽसमर्थाः[2] कामव्यापादविचिकित्साविहिंसावि[127b]तर्कप्रपा[3]तानुचरिताः । स्वकाय[4]दृष्ट्युदकराक्षसगृहीताः । काम[5]गहनावर्तानुप्रविष्टाः नन्दीरागमध्यसंसक्ताः । अस्मिमा[6]नस्थलोच्छन्नाः । अ[7]परायणाः । आ[8]यतनग्रामानुच्चलिताः । कुशलसंभा[9]रकविरहिताः । ते ऽस्माभिर्महाकुशलमूलबलेनोद्धृत्य निरुपद्रवे अरजसि शिवसर्वज्ञतारत्नद्वीपे प्रतिष्ठापयितव्या । रुद्धा वतेमे सत्वा बहुदुःखदौर्मनस्योपायासबहुलअनुनयप्रतिघप्रियाप्रियविनिबन्धने सशोकपरिदेवानुचरिते तृष्णानिगडबन्धने मायाशाठ्याविद्यागहनसंछन्ने त्रैधातुकचारके । ते अस्माभिः सर्वत्रैधातुकविवेके अभयपुरे चर्वदुःखोपशमे अनावरणनिर्वाणे प्रतिष्ठापयितव्या इत्यादि ॥

एवमेभिः परस्परद्रोणीकृत्यैर्व्यवसायाशयकारुण्यैः पुण्यवृद्धिमारभेत् । तत्र तावद्
भद्राचार्याविधिः कार्या वन्दनादिः[10] सदादरात् ॥

1) *°nuparyavanaddhā* K.

2) *avilokanasam°* K. C.

3) ना is added in margin; perhaps for *nānā* Tib. (177 b. 4) མང་པོ. *prabhānānuc°* K., *°bhānuc°* C.

4) *satk°* K. C. Cf. Ch. s. v. *sakkāya°*; M.-Vyutp. § 208. Tib. འཇིག་ཚོགས་ལ(?)ལྟ་བ

5) So K. C.; *kayagahaganānupr°* A. འདོད་པ་ཐིབས་པོ་ཀློང་དུ་ཞུགས་པ Tib.; correct Jä. p. 9 col., 1 accordingly.

6) *'asmi'-mānenamoksha-sthalam ucchannaṃ yeshāṃ* A (marg.) *asminmā* A (text). *°asminmānasthalotsannāḥ* K. Tib. ཐང་ལ་འཁྱམ་པ. 'disappearing, wandering in the desert . . of egoism'.

7) *paribhūtāḥ* K.

8) *shaḍāyatanagrāmabhayatīroccal°* K.

9) Corrected to *sandhāra* a sec. man. སྐྱོལ་པས་མཁས་པ 'one skilled in fostering'.

10) The margin gives the reading *°ādibhiḥ*. If this be correct we cannot of course take this clause as a versus memorialis.

आर्योग्रदत्तपरिपृच्छायां हि त्रिरात्रे त्रिर्दिवसस्य च शुचेः शुचिवस्त्रप्रावृतस्य च त्रिस्कन्धक[1]प्रवर्तनमुक्तं॥ तत्र त्रयः स्कन्धाः पापदेशनापुण्यानुमोदनाबुद्धाध्येषणा[128a]ख्याः पुण्यराशित्वात्। तत्र वन्दना पापदेशनायामन्तर्भवति। बुद्धान्नमस्कृत्योपालिपरिपृच्छायां देशनेति कृत्वा' याचनमध्येषणायां एकार्थत्वात्। पूजा तु विभवाभावादनित्येति नोक्ता। 5 मानसी वाचसी[2] च सूत्रान्तरप्रसिद्धत्वान्नोक्ताः। त्रयाणां तु वचनात्प्राधान्यं गम्यते। तत्र वन्दना' सर्वबुद्धान्नमस्यामीति॥

[3]आर्याक्षयमतिसूत्रे त्वात्मपरपापदेशना पुण्यसंभारे[3] पठ्यते॥

गाथाचतुष्टयेन च यथागीतैश्च स्तोत्रैः' आर्यभद्र[4]चर्यादिगाथाभिर्वा पूजना च॥

आर्यरत्नमेघे यथोक्तं। इह बोधिसत्त्वो यानीमानि भवन्ति पुष्पजातानि वा फलजातानि 10 वा अममान्यपरिग्रहाणि' तानि त्रिष्कृत्वा रात्रौ त्रिष्कृत्वा दिवसे बुद्धबोधिसत्त्वेभ्यो निर्यातयति॥ पे[5]॥ सयथीमे धूपवृक्षा वा गन्धवृक्षा वा रत्नवृक्षा वा कल्पवृक्षा वा अममा अपरिग्रहास्तानपि त्रिष्कृत्वा रात्रौ त्रिष्कृत्वा दिवसे बुद्धबोधिसत्त्वेभ्यो निर्यातयतीति॥

आर्यत्रिसमयराजेऽपि स्थल[6]जा रत्नपर्वताः। जलजा रत्नपर्वता स्थलजलजानि रत्नानि दशदिगवस्थितानि। अममान्यपरिग्रहाणि देयानीत्युक्तं॥ अनया च दिशा सर्वभैषज्या-

1) The Tib. (178 a. 2) understands this expression as the reading (བགྱག་པ) of the Triskandhaka. See M. Vyutp. § 65. 59, K. F. 274, Bṭ ad V. 98, 99.

2) This adjectival form appears not to occur elsewhere and the *sūtra* referred to is accordingly not extant.

3) . . 3) This clause is not rendered in the Tib. See below 291. 8.

4) See below 297. 2.

5) This is added *a sec. manu*. The omission in fact is not Çāntideva's, but the scribe's, as we find in the Tib. དགེ་བའི་རྩ་ (*kuçalamūlam*) བདེ་ཡང་བླན་མེད་པ་ཡང་དག་པར་རྫོགས་པའི་བྱང་ཆུབ་ཏུ་ཡོངས་སུ་བསྔོ་འོ

6) Quoted also in Bodhic-ṭ. ad II. 25 (ed. Bibl. Indica, pp. 57.12—58.5). The quotation includes the extract from the Ratnamegha, showing that Prajñākaramati stole Çāntideva's extracts, instead of reading the sūtras for himself.



नि सर्वरसायनानि सर्वसलिलानि अ[128b]नवद्यानि अप्मण्डलानि[1]' सर्वकाञ्चनमण्डलानि। विवृत्तेषु वा लोकधातुषु ये परमरसस्पर्शसंपन्ना भूपर्पटकाः[2]' अमृतलता' अकृष्टोप्ता वा[3] शालयः। सर्वोत्तरकुरुद्वीपेषु[4]। परिशुद्धेषु च लोकधातुषु ये रमणीयतराः परिभोगाः॥

यथा चार्यरत्नमेघ एवाह। स यानीमानि सूत्रान्तेषूदारोदाराणि तथागतपूजोपस्थानानि 5 शृणोति' तान्याशयतस्तीव्रेणाध्याशयेन बुद्धबोधिसत्त्वेभ्यः परिणामयतीति।

तथा' स विविधानि पूजोपस्थानानि अनुविचिन्तयतीति॥

देशना पूर्वोक्तैव। आर्याक्षयमतिसूत्रे त्वात्मपरपापदेशना पुण्यसंभारे पठ्यते। अनुमो[5]दना भद्रचर्यागाथया' चन्द्रप्रदीपानुमोदनापरिवर्तेन वा। अ[5]ध्येषणा भद्रचर्ययैव। परिणामना तु सकलसमाप्तार्यभद्रचर्ययैव। वज्रध्वजपरिणा[6]मनां वा पश्येत्॥ 10

अथवा दशभूमकोक्तानि[7] महाप्रणिधानानि। यथाह' यदुताशेषनिःशेषानवशेषसर्वबुद्धपूजोपस्थापनाय' सर्वाकारवरोपेतमुदाराधिमुक्तिविशुद्धं धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याबुद्धोत्पादसंख्या[प्रति]प्रस्रब्धं' महापूजोपस्था-

1) I preserve the form given in the MS. Bṭ. has the falsa lect. *āmaṇḍalāni*: but Tib. ཆུའི་དཀྱིལ.

2) Cf. Mhv. I. 340.12 sqq., and Senart *ad loc.* Our MSS. seem to read *paryaṭakāḥ*. Tib. ས་ཞག 'earth-fat' (178 b. 4). The 'bada-láta' (sic) of Sp. Hardy (p. 67.20) who is cited by Senart, is possibly a corruption of *amatalatā*.

3) Om. Bṭ.

4) *ca*, before *pariç°* in Bṭ.

5) Cf. Bodhic. III. 1—5. *deçanā p°* refers to 169.6; cf. et. Bodhic. Ch. II.

6) Supra 213.3—216.5. See also 'Additional Notes'.

7) The readings in the following extract have been collated with the corresponding passage in the text of the sūtra, a considerable portion of which was discovered by me in the Mahārāja's library at Kathmandu. The fragment ('K') dates from about the VIth cent. A plate showing part of this passage from that MS. has been prepared for the present work. The passage also occurs in the Daçabhūmīçvara, Ch. I. For the points of difficulty in the extract I have collated a Cambridge MS. ('C') of that sūtra (Add. 867, ff. 13 b. sqq.) neglecting modern barbarisms, the MS. being copied by an ignorant scribe from a good original.

नाय [129a]। प्रथमं महाप्रणिधानमभिनिर्हरति ॥ यदुत सर्वतथागतभाषितधर्मनेत्रीसंधार-
णाय [1]सर्वबुद्धबोधिसत्त्वपरिग्रहाय। सर्वसम्यक्संबुद्धशासनपरिरक्षणाय। धर्मधातुविपुल-
माकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं। सर्वसंकल्पसंख्याबुद्धोत्पादसंख्याप्रतिप्रस्रब्धं।
सद्धर्मपरिग्रहाय। द्वितीयं महाप्रणिधानमभिनिर्हरति ॥ यदुत सर्वबुद्धोत्पादनिरवशेषसर्व-
लोकधातुप्रसरेषु। तुषितभवनवासम[2]आदिं कृत्वा च्यवना[3]चङ्क्रमणगर्भस्थितिजन्मकुमारक्रीडा-
न्तःपुरवासाभिनिष्क्रमणदुष्करचर्या[4]बोधिमण्डोपसंक्रमण[4]मारधर्षणाभिसंबोध्यध्येषणमहा-
धर्मचक्रप्रवर्तन[5]महापरिनिर्वाणोपसंक्रमणाय[6]। पूजाधर्मसंग्रहप्रयोगपूर्वंगमं कृत्वा[7] सर्वत्रैक-
कालविवर्तनाय। धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्या-
बुद्धोत्पादसंख्याप्रतिप्रस्रब्धं[8] यावन्महापरिनिर्वाणोपसंक्रमणाय। तृतीयं महाप्रणि[9]धान-
मभिनिर्हरति ॥ यदुत सर्वबोधिसत्त्वचर्याविपुलमहद्गताप्रमाणासंभिन्नसर्वपारमितासु[10]संग्र-
हीतः। सर्वभूमिपरिशोधनं [11]साङ्गोपाङ्गनिर्हारं [12]यावत्सल[129b]क्षणाविलक्षणसंवर्तविवर्त[13]-
सर्वबोधिसत्त्वचर्याभूतयथावद्भूमिपथोपदेशपारमितापरिकर्माववादानुशासन्यनुप्रदानोपस्त-

1) *sarvasamyaksambuddhaparigr°* *sarvabaddhaçās°* K. The Tib. seems to have read *sarvabuddhabodhi samyakparigr°* and the rest as A. As to *dharmanctri* see E. Hardy, Nettipp., Introd. p. vii., n. 1.

2) Cf. Senart, Mhv. i. 489 *ādikamkṛ°* C.

3) *garbhasya* marg. *ācakr°* K. *āvakr°* C. འཕོ་བ་དང་གཤེགས་པ་དང་ Tib. 179 a. 6. The reference is to the varied movements of the embryo.

4) . . 4) *bodhim°* . . . *ṇa* om. K. C.

5) *°nasama°* A.

6) *kramāṇāk*

7) om. *kṛtvā* K.

8) A. here inserts the words *cittotpādābhinirhārāya*, not in K. C. or Tib.

9) *praṇidhim* A.

10) *°tāsaṃ* K. C. (and Tib.).

11) *°nasā* A.

12) *°hārasalaksh°* K.

13) om. *vivarta* K. Tib. (179. b. 4) རྒྱས་པ་དང་བཅས་པའི་བྱང་ཆུབ་སེམས་དཔ *sarvathāpi bodhi°* A. *nihārakshaṇavivarttasaṃvarttasarvvabodhis°* C.



म्भचित्तोत्पादाभिनिर्हाराय। धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वक-
ल्पसंख्याचर्यासंख्याप्रतिप्रस्रब्धं चित्तोत्पादाभिनिर्हाराय। चतुर्थं महाप्रणिधानमभिनिर्हर-
ति ॥ यदुत निरवशेषसर्वसत्त्वधातुरूप्यरूपिसंज्ञासंज्ञि नैव संज्ञि नासंज्ञ्यण्डजजरायुजसं-
स्वेदजौपपादुकत्रैधातुकपर्यापन्नषड्गतिसमवसृतसर्वोपपत्तिपर्यापन्ननामरूपसंगृहीताशेषस-
र्वसत्त्वधातुपरिपाचनाय[1]। सर्वबुद्धधर्मावतारणाय। सर्वगतिसंख्याव्यवच्छेदनाय। सर्व-
ज्ञज्ञानप्रतिष्ठापनाय। धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्प-
संख्यासत्त्वधातुसंख्याप्रतिप्रस्रब्धं। सर्वसत्त्वधातु[2]परिपाचनाय। पञ्चमं महाप्रणिधानमभिनि-
र्हरति ॥ यदुत निरवशेषसर्वलोकधातुविपुलसंक्षिप्तमहद्गताप्रमाणसूक्ष्मौदारिकव्यत्य[3]-
स्तावमूर्धसमतलप्रवेशसमवसरणानुगतेन्द्र[4]जालविभागदशदिगशेषवैमात्र्य[4]प्रवेशविभागज्ञा-
नानुगमप्रत्यक्षतायै। धर्मधातु[130a]विपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वक-
ल्पसंख्यालोकधातुसंख्याप्रतिस्रब्धं लोकधातुवैमात्र्या[5]वतारणाय। षष्ठं महाप्रणिधानम-
भिनिर्हरति ॥ यदुत सर्वक्षेत्रैकक्षेत्र [6]एकक्षेत्र सर्वक्षेत्रसमवशरणपरिशोधनं। अप्रमाणबुद्ध-
क्षेत्र [7]प्रभाव्यूहालंकारप्रतिमण्डितं। सर्वक्लेशापनयनपरिशुद्धि[8]पथोपेतं। अप्रमाणज्ञानाक-
रसत्त्वपरिपूर्णमुदार[9]बुद्धविषयसमवसरणं। यथाशयसर्वसत्त्वसंदर्शन[10]संतोषणाय। धर्मधातुवि-

1) So KC; and Tib. ཡང་སྤྱོ་སྨན་པོར; *caraṇāya* A.

2) *bdhaṃ* । *satvaparip°* K. *sarvasatvap°* C. Tib. supports our reading.

3) 'confused'; *°bhyasta°* A. C. *dārikaṃ bhāvatūrthasama°* (!).

4) *°tamindra°* A.

5) With this form, not quoted from other texts, compare *vaimātratā* in Mhv. ('diversité') and Pali *vemattatā*. *vimātratāvibh°* C at first; *vaimatrya* below.

6) om. K. C., contra Tib. In the margin of A. occurs the following gloss: *eko bhāva ityādivat sarvakshetrāṇām ekakshetrasvabhāvānatikrameṇāvaçaraṇāt prativedhāt çodhanam | evam anyathā.*

7) In the margin of A. the form *sphānita* (for *sphārita?*) is added between *kshetra°* and *pr°*.

8) *°ddha* A. C.

9) *udārasarva* A.

10) Tib. སྡན་ཅེང

पुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं । सर्वकल्पसंख्याबुद्धक्षेत्रसंख्याप्रतिप्रस्रब्धं । [1]सर्वबुद्धक्षेत्रपरिशोधनाय । सप्तमं महाप्रणिधानमभिनिर्हरति ॥ यदुत सर्व[2]बोधिसत्त्वैकाशयप्रयोगतायै । निः[3]सपत्नकुशलमूलोपचयाय । एकारम्बणसर्वबोधिसत्त्वसमतायै । अविरहितसततसमितबुद्धबोधिसत्त्वसमवधानाय । यथेष्टबुद्धोत्पादसंदर्शनाय । [4]स्वचित्तोत्पादतथागतप्रभावज्ञानानुगमाय । अच्युतानुगामिन्यभिज्ञाप्रतिलम्भाय । सर्वलोकधात्वनुवि[5]चरणाय सर्व[6]पर्षन्मण्डलप्रतिभासप्राप्तये । सर्वोपपत्तिस्वशरीरानुगमाय । अचिन्त्यमहायानो[7]पेततायै । [130b] बोधिसत्त्वचर्याचरणाव्यवच्छेदाय[8] । धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं । सर्वकल्पसंख्याचर्यासंख्याप्रतिप्रस्रब्धं । महायानावतारणाय । अष्टमं महाप्रणिधानमभिनिर्हरति ॥ यदुताविवर्त्यचक्रसमारूढबोधिसत्त्वचर्याचरणाय । अमोघकायवाङ्मनस्कर्मणे । सहदर्शन[9]नियतसर्वबुद्ध[10]धर्मप्रतिलम्भाय[11] । सहघोषोदाहार[12]ज्ञाना-

1) *sarva* om. K.

2) *sarvabuddhabodhis*° C, and A in marg. a sec. m.

3) °*gāya* । *niḥsapannak*° K.; *nishpannak*° A.; *nissipanna* C. The Tib. འགྲན་ཟླ་མེད་པ (180 b. 2) gives the key to the reading.

4) °*rçanasambhāshaṇāya* K (°*saṃtoshḥ*° C); *sahaci*° A.

5) °*vicāraṇ*° K. The noun-form is new to Skt. For the meaning, cf. Dh.-sṇi § 8 where *anuvicāra* occurs and is explained by Buddhaghosa (Atthas. § 345) *anugantvā vicāraṇakavasena*; so that something like 'research' is meant. At Dīgha-n. xiii § 3 perhaps some kind of peripatetic meditation is connoted by the verb *anuvicar*.

6) °*va-buddha-p.*° C. K.; but not so Tib.

7) so K. C. with Tib.; °*hājñān*° A.

8) *caraṇāya* (om. *vyavacch*°) K.

9) *satvānāṃ* A. marg.

10) °*ddhatvāya* । K. *buddhadharmatvāya* C.

11) So K. C. throughout. A. hesitates between °*lābh*° and °*lambh*°.

12) *satvānāṃ* added in marg. as above.



नुगमाय । सहप्रसादक्लेशविव[1]र्तनाय । महाभैषज्य[2]राजोपमाश्रयप्रतिलम्भाय । चिन्तामणिवत्कायप्रतिलम्भाय । सर्वबोधिसत्त्वचर्याचरणाय । धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं । सर्वकल्पसंख्याचर्यासंख्याप्रतिप्रस्रब्धं । अमोघघोष[3]तायै । नवमं महाप्रणिधानमभिनिर्हरति ॥ यदुत सर्वलोकधातुष्वनुत्तरसम्यक्संबोध्यभिसंबोधनाय । एकवाल[4]पथाव्यतिवृत्तसर्वबालपृथग्जनजन्मोपपत्त्यभिनिष्क्रमणविकुर्वणबोधिमण्डधर्मचक्रप्रवर्तनमहापरिनिर्वाणोप[5]दर्शनाय । महाबुद्धविषयप्रभावज्ञानानुगमाय । सर्वसत्त्वधातुयथाशयबुद्धोत्पादक्षणलवावबो[6]धप्रशमप्रापणसंदर्शनाय । ए[131a]काभिसंबोधिसर्वधर्म[7]धातुनिर्माणस्फरणाय । एकघोषोदाहारसर्वसत्त्वचित्ताशयसंतोषणाय । महापरिनिर्वाणोपदर्शनचर्या[8]बलाव्युपच्छेदाय । महाज्ञानभूमिसर्वधर्म[9]व्युत्थापनसंदर्शनाय । धर्मज्ञान[10]र्द्धिमायाभिज्ञासर्वलोकधातुस्फरणाय । धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं । सर्वकल्पसंख्याभिसंबोधिसंख्याप्रतिप्रस्रब्धं । महायानाभिनिर्हाराय । दशमं महाप्रणिधानमभिनिर्हरतीति ॥

1) *sahadarçanasatvakleçavinivart*° A., where *darçana* appears to be due to erroneous repetition and *satva* to a gloss; *sahaprasādavivart*° K. I. accordingly restored the text from the Tib. which has (180 b—181) དང་བར་འགྱུར་ (cf. 250, n. 3) པ་ཐག་ཏུ (*saha*) ཉོན་མོངས (*kleça*) བཟློག་པར (used in the equiv. of *avivartya* supra) ཟློ་བ, and subsequently found substantial confirmation in C, which reads: *sahapraçādakleçavinirvarttanāya*.

2) Buddha is in Pali *anuttaro bhisakko* Mil.-P. p. 215 med. and other passages in note to Davids' tr.; and Rāṣṭrapālap. 52. 2 cit. infra.

3) *amoghasarvaceshṭatāyai* K. °*ghareshutāyai* C (corrupted from a similar reading).

4) *ekavālamātram api svamārgād abhrashṭaḥ san bālavaj-janmādi* margin, apparently to explain the curious juxtaposition of *vāla* and *bāla*.

5) *ṇadarç* K (hic et infra).

6) °*ṇavibodhanapra*° K. *ṇavibhāgavibodhapr*. C.

7) So K. °*satvadhātu*° A.; °*dharmanirm*° C. The Tib. implies a reading °*dharmadhātunirvāṇa*°.

8) Here A adds in marg. the gloss: *vikurvaṇasaṃdarçanopasaṃkramaṇa*.

9) °*māvyu*° A. *mavyavasth* K. C.

10) °*na-ṛddhi*° A.

एतच्च भावयन् सर्वत्र परिणामयामीति योज्यं ॥

आर्यावलोकितेश्वरविमोक्षे च यदुक्तं तदप्येवं योज्यं। एतत्कुशलमूलं सर्वसत्त्वप्रपातभयविगमाय परिणामयामि। सर्वसत्त्वान् सान्तानिक[1]भयप्रशमनाय ' सर्वसत्त्वसंमोहभयविनिवर्तनाय परिणामयामि। सर्वसत्त्वबन्धनभयसमुच्छेदाय ' सर्वसत्त्वजीवितोपरोधोपक्रमभयव्यावर्तनाय ' सर्वसत्त्वोपकरणवैकल्यभयापनयनाय ' सर्वसत्त्वाजीविकाभयव्युपशमनाय। सर्वसत्त्वाश्लोक[2]भयसमतिक्रमणाय परिणामयामि। सर्वसत्त्वसांसारिकभयोपशमनाय ' सर्वसत्त्वपर्षच्छारद्य[3]भयविगमाय ' सर्वसत्त्वमरण[131 b]भयव्यतिक्रमाय ' सर्वसत्त्वदुर्गतिभयविनिवर्तनाय। सर्वसत्त्वतमोऽन्धकारविषमगत्यप्रत्युदावर्तना[4]वभासकरणाय परिणामयामि। सर्वसत्त्वानां विसभागसमवधान[5]भयाभ्यस्तविगमाय। सर्वसत्त्वप्रियविप्रयोगभयनिरोधाय ' सर्वसत्त्वाप्रियसंवासभयापनयनाय। सर्वसत्त्वकायपरिपीडाभयविसंयोगाय ' सर्वसत्त्वचित्तपरिपीडनभयनिर्मोक्षणाय। सर्वसत्त्वदुःखदौर्मनस्योपायाससमतिक्रमणाय परिणामयामीति ॥

---

1) Meaning uncertain. Cf. *saṃtāna* 23. n. 4 (and 'Additional Notes') also 126. 9. Tib.: རྒྱུན་ལས་བྱུང་བའི་འཇིགས (181. b. 3).

2) The fear of being without a *çloka* to use as a *praṇidhi* or as a charm (?). The Tib. translates literally.

3) བག་ཚ་བ 'timidity'. Noun-form new in this sense; *çārada* 'timid' in lexx. only. Pāli *sārajjam*. M. Poussin informs me that the present phrase really occurs in Madhy. vṛ., Ch. I. (misprinted in Calcutta text, p. 11. 25).

4) The meaning of the text as it stands would be: 'I aspire to causing illumination [tending to] not turning back from the rugged path [caused by] the blindness of all creatures'. The Tib. had apparently a somewhat different text, as it has: སེམས་ཅན་ཐམས་ཅད་ཡང་བའི་འགྲོ་བ་མན་པ་མུན་ནག་ཅན་བཟློག་པ་ལ་སྣང་ etc. A gloss has: *avidyākṛta-kugatiṁ prati vyāvartanaṃ mārgāt*. Cf. *paccudāvattati* and Ch. s. v.

5) 'Fear as to association with (supr. 154. 7) different persons'; *visabhāga* 'keinen Antheil habend' B², Nachtr.; Tib. རིས་མི་མཐུན་པ (181. b. fin) and Ch. s. v. On forms of *bhaya*, cf. supra 198. 7-11 and Aṅgutt. Bhaya-vagga (II. §§ 119—122).



संक्षेपतः पुनरियमनुत्तरा परिणामना येयमार्यभद्रचर्यागाथायां।[1]

मञ्जुशिरी यथ जानति शूरः सो च समन्तत भद्र तथैव।
तेषु[2] अहं अनुशिक्षयमाणो नामयमी कुशलं इमु सर्वं ॥ [५५]
सर्वत्रियध्व[3] गतेभि जिनेभिर्या परिणामन वर्णित[4] अग्रा।
ताय अहं कुशलं इमु सर्वं[5] नामयमी वरभद्रचरीये ' इति ॥

॥ इति शिक्षासमुच्चये भद्रचर्याविधिः षोडशमः परिच्छेदः समाप्तः ॥

## XVII.

## वन्दनानुशंसाः सप्तदशः परिच्छेदः ॥

उक्तो वन्दनादिविधिः। तेन पुण्यवृद्धिर्भवतीति कुतो गम्यते ॥

आर्यावलोकनसूत्रात्[6]। एवं हि तत्रोक्तं।

---

1) The present extract forms stanzas 55—56 of the Bhadracarī-praṇidhāna-rāja, as the work is usually styled in MSS. The text has been collated with two Cambridge MSS. (C.) Add. 1680. 1 fol. 5. b. 5 ($C_1$) [sæc. xi] and Add. 1471, f. 9. a. 4 ($C_2$). Metre: Dodhaka. Anusvāra gives length by position in these gāthās, in contrast to the elision of Vedic and of Latin prosody.

2) *tesha* A.

3) *tripatha* contra metrum A. The phrase *sarvatriyadhva°* occurs several times in the Bhadrac.

4) *ṇina* $C_1$; *°nitu agrāh* $C_2$.

5) *rve* $C_2$.

6) See 89. n. 3 (*avalokanā°*). The present extract corresponds with the passage II. 363, sqq. of Senart's text. His hypothesis (II. xxvi. n. 3) that the sūtra is an interpolation in the Mahāvastu is rendered probable by Çāntideva's citations from it as a separate work, and by the independance of the Tib. version. The present extract is made from a different and more Sanskritic recension of the sūtra. It is of course not easy to say whether the omissions, which occur also in the Tib., are due to Çāntideva, or to the recension. Only the variants most important for our text are noted below, the corresponding passages in the Mhv. being denoted by 'M'.

वर्जयत्यक्षणान्यष्टौ[1] य इमे देशिता मया।
तथा चारागयत्येकं[2] बुद्धोत्पादं सुशोभनं ॥ [132 a]
वर्णवान् रूपसंपन्नो लक्षणैः समलंकृतः।
स्थाम्ना बलेन चोपेतो नासौ कौसीद्यमर्च्छति[3] ॥
आढ्यो महाधनश्चासौ अधृष्यः पुण्यवानपि।
आराग्य लोकप्रद्योतं सत्करोति[4] पुनः पुनः[5] ॥
श्रेष्ठीकुलेषु स्फीतेषु स आढ्येषूपपद्यते।
भवेद्दानपतिः शूरो मुक्तत्यागो ह्यमत्सरी[6] ॥
राजा भवेद्धार्मिको ऽसौ चतुर्द्वीपेश्वरः प्रभुः।
[7]प्रशासयेन्महीं कृत्स्नां समुद्रगिरिकुण्डलाम् ॥
महर्द्धिकश्चक्रवर्ती सप्तरत्नसमन्वितः।
राज्ये प्रतिष्ठितो बुद्धान् सत्करोति पुनः पुनः ॥
[8]श्च्युतश्चास्माद्गतः स्वर्गं प्रसन्नो जिनशासने।
शक्रो भवति देवेन्द्रः ईश्वरो मेरुमूर्द्धनि[9] ॥
न शक्यं भाषता वर्णं[10] क्षपयितुं कल्पकोटिभिः।
य स्तूपं लोकनाथस्य नरः कुर्यात्प्रदक्षिणम् ॥

1) *varjeti akshaṇaṃ* M.

2) *ārāgeti kshaṇaṃ* M.

3) Formerly referred to √*ās*; but see Pischel Gr. Pr. § 480, and compare Manu II. 93 *dosham ṛcchāti*.

4) *buddhān* marg.

5) At this point an extra stanza in M.

6) Here three stanzas in M.

7) *praçvās°* A; but Tib. བརྗེད, agreeing with M.

8) So the MS.

9) Two stanzas omitted.

10) 'He cannot bring to an end, exhaust, the praise of Buddha by telling it'. Scan as if *kshapetum*. The scansion of Mhv. II. 364. 8 is more difficult.



न जातु सो ऽन्धः खञ्जो वा कल्पानामपि कोटिभिः।
उत्पाद्य बोधिचित्तं यः शास्तु स्तूपं हि वन्दते[1] ॥
दृढवीर्यो दृढस्थामो वीरश्च दृढविक्रमः।
कौशल्यं गच्छति क्षिप्रं कृत्वा स्तूपप्रदक्षिणम् ॥
यो बुद्धकोटिनियुतशतसहस्रान्[2] कल्पान् कोटी च तुलिय सत्करया।
यश्चेह कल्पे चरमक घोरकाले वन्देय स्तूपं बहुतर तस्य पुण्यम् ॥ [132 b]
[3]अग्रो हि बुद्धो अतुलिय[4] दक्षिणीयो अग्रां[5] चरित्वा चरियविशेष प्राप्तः।
तस्येह पूजां करिय नररिषभस्य विपाक श्रेष्ठो भवति अतुल्यरूपः ॥
[6]इतश्च्युत्वा मनुष्येभ्यस्त्रायस्त्रिंशेषु गच्छति।
विमानं लभते तत्र विचित्रं रतनामयम् ॥
कूटागारं स्वयं दत्वा अप्सरोगणसेवितः।
मालां स्तूपे संप्रदाय त्रायस्त्रिंशेषु जायते ॥
अष्टाङ्गजलसंपूर्णां सुवर्णसिकताऽस्तृताम्[6]।
वैडूर्यस्फटिकैश्चैव दिव्यां पुष्करिणीं लभेत् ॥
भुक्त्वा च तां रतिं दिव्यां आयुः संपूर्य पण्डितः।
च्युत्वा च देवलोकात्स मनुष्यो भवति[7] भोगवान् ॥

1) Two stanzas omitted.

2) I have found no exact parallel for this line in the Mhv. Its metre could be brought to the Trishṭubh-pattern by correcting to *kalpāna* and *satkareya*. The metrical scheme of the next three lines is as follows: ⏓–⏑– ⏑⏑⏑⏑⏓⏓⏑–– See below. The recension of this sūtra preserved in Mhv. II in the passage (326. 14 sqq.) noted by Senart ad loc. as metrically irregular presents many isolated pādas of this pattern; cf. esp. l. c. 329 ad fin. and 330; at the same time it shows that the metre is a development of Trishṭubh.

3) ? cf. Mhv. II. 379. 16—19.

4) *'tul°* . . . *'grāṃ* MS.

5) Mhv. II. 365. 3 sqq.

6) Cf. the readings of Senart's MSS. B and C, p. 365. 7 note. The *avagraha* probably represents the *upasarga ā-*.

7) Scan, or read with M., *bhoti*.

ज्ञाति[1]कोटिसहस्राणि शतानि नियुतानि च।
सत्कृतः स्याच्च सर्वत्र चैत्ये मालां प्रदाय च॥
चक्रवर्ती च राजासौ शक्रश्च भवतीश्वरः।
ब्रह्मा च ब्रह्मलोकस्मिन्[2] चैत्ये मालां प्रदाय च॥
5 पट्टप्रदान दत्वा तु लोकनाथस्य तायिनः[3]।
सर्वेऽस्यार्थाः समृध्यन्ति ये दिव्या ये च मानुषाः॥
[त्यजेद्धीनानकुशलान् न स त[4]त्रोपपद्यते।]
मालावि[5]हारं कृत्वा च लोकनाथस्य धातुषु।
[6]अभेद्यपरिवारेण राजा भूयान्महर्द्धिकः॥
10 प्रियः सदयितश्चासौ सत्कृतश्च प्रशंसितः[7]।
देवानामथ नागानां ये लोकेस्मिं[8]श्च पण्डिताः॥
[9]यत्रा[133 a]सौ जायते वीरः पुण्यतेजःसुदीपितः।
ते कुलाः सत्कृता भोन्ति राष्ट्राणि नगराणि च॥

---

1) Mhv. II. 365. 17 sq.

2) So M. A, with Senart's MS. C, *ke smin*; cf. Senart, pref. I. xvii.

3) Cf. 31. n. 1 and Senart, Mhv. II. 543.

4) *pāpakule* marg. This half-stanza (Mhv. II. 366. 2) is not reproduced in the Tib. (183. a. 4).

5) ཕྲེང་བའི་ཁང apparently some kind of booth of garlands; Mhv. II. 367. 3.

6) Cf. ibid. 367. 4 *bhūyād* is a (so-called) precative, in its orig. function of aor. opt.

7) °*saṃç*° A, like Senart's MS. B.

8) Read probably (cf. M) *kasmiṃça*, as above. The Tib. འཇིག་རྟེན་དག་ན implies a loc. *plural*, real or supposed; anyhow it precludes the reading °*ke 'smin*. Cf. supra, n. 2.

9) Ibid. 367.11 (. . . *rāshṭreṇa*); but the plural *rāshṭrāṇi* is attested by the Tib.



[1]यः सर्षपात् सूक्ष्मतरं गृह्णीत्वा धूपेय धूपं भगवति चैत्यकेषु।
तस्यानुशंसान् शृणुत प्रभाषतो मे प्रसन्नचित्ता जहिय खिलां मलांश्च॥
स पुण्यवांश्च[2]रति दिशः समन्तादारोग्यप्राप्तो दृढमतिरप्रमत्तः।
विनेति[3] शोकं विचरति[3] चारिकायां प्रियो मनापो भवति महाजनस्य॥
5 राज्यं च लब्धा जिन वरु सत्करोतो महानुभावो विडु चक्रवर्ती।
सुवर्णवर्णो विचित्र[4]लक्षणैः स मनोज्ञगन्धान् [5]लभि सर्वलोके॥
+[6]जातमात्रो लभते श्रेष्ठवस्त्रान् दिव्यविशिष्टसुरुचिरकौशि[7]कांश्च।
भोती सुखसुका[8]यः संवेष्ट्यस्तूपं नाथस्य चीवरैः।
यश्चीवरेण चैत्येषु कुर्यात्पूजामतु[9]लां नायकानां।[6] †
10 तस्येह भोती असदृशु आत्मभावो द्वात्रिंशतीभिः [10]कवचित लक्षणेभिः।

---

1) Ibid. 373. 16 sqq. metre ut supra, 299. 6–9. The first half line is metrically deficient. *sarshapeṇa* (M.) is hardly better. Possibly the line may be completed by supposing a form in *-eṇo*. Cf. 194, note 2. *bhagavatō* (with M.) is perh. preferable.

2) °*vanto* M., which is metrically preferable.

3) °*netu* . . °*ratu* A; cf. Tib. & Mhv., MSS. B. C.

4) *sphoṭo lakshaṇehi* M. For *āksh*° cf. 3. 1, 8 et al.

5) The reading of A. (which has been corrected) appears to be *pratilebhi*. M. has °*dhām labhate sarvakālam*, which is metrically difficult.

6) . . 6) The reading and metre of these lines, for which I have found no parallel in the Mhv., is doubtful.

7) 'silken clothes', usually neuter. Tib. དར་གོས. Cf. Mhv. II. 298. 17. MS. *kāçikāṃçca*.

8) The Tib. equivalent of this half-line is (183. b. 3) བཙས་མ་ཐག་ཏུ་དེ་ལུས་ཤིན་ཏུ་བདེ, as if **जातमात्र** were repeated.

9) Tib. འདྲེན་པ་མཚུངས་མེད་རྣམས་ལ so that *atulāṃ* must be corrected to agreement with *nāyakānāṃ*.

10) Cf. Mhv. II. 295. 5 (a prose passage).

(1) पाणीतलेषू सुरुचिरु मुक्तहाराः प्रादुर्भवन्ती विविध अनन्तकल्पाः ।
सिंह(2)लताः सुरुचिरवर्णसूत्रा वेठि(3)त्व स्तूपं भगवत चीवरेभिः ॥
(4) दत्वा पताकां भगवत चेतिकेषू छन्दं जनित्वा तथ सि(5)य बुद्धलोके ।
स पूजनीयो भवति महाजनस्य [(6)चरन्तु श्रेष्ठो जिनचारिकायै ॥]
(7) सुवर्णवर्णो भवति सि(8) आत्मभावो लाभी स भोती सुरुचिरचीव[133 b]राणां ।
कर्पासिकानां सुसंहित कम्बलानां दुकूलकानां तथ वरकौशका(9)नां ॥
(10) ध्वजं ददित्वा हतरजि सत्वसारे धनं प्रभूतं प्रतिलभि(11) न चिरेण ।
प्रभूतकोषो भवति अनन्तप्रज्ञो परि(12)चारु तस्य भवत्यदीनचित्तः ।
न चित्तशूलं (13)जनयति सो परस्य प्रसादचित्तः सद अप्रमत्तः ।
न तस्य अग्निः क्रमति विषन्नशस्त्रं उद्दीक्षणीयो भवति महाजनस्य ॥

---

1) Some of the expressions in this stanza occur at Mhv. II. 317. 3—8.

2) Cf. Senart on Mhv. II. 311. 13. *Ibid.* 317. 8 the same metrical difficulty occurs as here, and S. corrects to *siṃhīl*° — «un pis-aller, qui ne me satisfait guère».

3) *veṭi*° MS. A similar corruption of √*veṭh*, the Pali equivalent of √*veshṭ* (Pkt. *veḍh*) occurs in MSS. of the Mhv.

4) See Mhv. II. 375. 9—13.

5) *syām*; cf. 115, n. 1.

6) Our text really has a lacuna here, though not indicated in the MS. This is shown by the corresponding pāda of the Tib., which reads བྱང་ཆུབ་སྤྱོད་མཆོག་དམ་པ་ཞི་བ་སྤྱོད (183. b 5). This of course is not the precise equivalent of the Mhv.-text, which I have inserted to complete the general sense. It presupposes *bodhicarya*, not *jinac*°.

7) Mhv. 375. 17—20. The Tib. does not render the stanza.

8) Cf. Pischel, Gr. Pk. § 423.

9) So MS., altered to *kauçaik*°. Cf. M., loc. cit. (varr. lectt.)

10) Mhv. II. 377. 6—9.

11) °*lebhi* MS. a sec. m.

12) °*vāra* M.

13) *janayati* so (Tib. དེ་ནི) *pareshu* . . . *sadā apr*° M. (378. 5). A (contra metrum) *janeyet parasya* . . *Sadā 'pr*°.



(1) अधो उपादाय च विभवाग्रु यावत् जाम्बूनदं तेन भवति बुद्धक्षेत्रं ।
शक्यं (2)क्षयेतुं आयुष्मिय एवद्रूपा न बुद्धस्तूपे धरयत एक दीपम् ॥
न तस्य कायो भवति अवर्णिताङ्गो दृढा(3)सु भोती परिघभुजो अछम्भी ।
आलोकप्राप्तो विचरति सर्वलोके ददित्व दीपं भगवतं चेतिकेषु ॥
यदि बुद्धक्षेत्रा नियुतशत[1] सहस्रा भवेयु पूर्णा शिख(4)गतसर्षपेभिः ।
शक्यं गणेतुं तुलयितु भाषितुं वा न तथागतेषू धरयितु एकदीपम् ॥
(5) अलङ्करित्वा सुरुचिरदर्शनीयं यो देति छत्रं भगवत चेतिकेषु ।
तस्येह भोत्यसदृश आत्मभावो द्वात्रिंशतीभिः कवचित लक्षणेभिः ॥
येभिर्जिनस्य प्रतपत आत्मभावो रूपं विशिष्टं य(6)थरिव काञ्चनस्य ।
जाम्बूनदो वा सुरुचिरदर्श[134 a]नीया अभिकीर्ण - - कुसुमित लक्षणेभिः ॥
अभिज्ञप्राप्तो भवति महायशाख्यः च(7)रति श्रेष्ठावरचारिकायां ।
न भोगहानिर्भवति कदाचिदस्य देवान भोति गुरुकृत पूजितश्च ॥

---

1) M. 378. 21 sqq. *jāmbunadena bhavati viçuddhakshetraṃ* A; *jāmbunadasya imaṃ buddhakshetraṃ* (metre?) M. I have tried to restore sense and metre from the Tib. which has: འདི་ནས . . . སངས་རྒྱས་ཞིང་དེ་འཛམ་གླིང་གསེར་གྱིས་གང། (183 b. 7).

2) i. e. *na çakyaṃ kshayayitum*; cf. 298.15 (*kshapa*°) and infra l. 6. *āyu* is not represented in Tib. or in M. If *āyu* is genuine, we must scan ⏑–⏑⏑⏑ for –⏑⏑⏑⏑.

3) Perhaps «of firm health», though the Tib. which here has གཟུགས་མཆོག་སྐུ་ཞེང་ seems to represent a different reading. *parighabh*° (confirmed by the Tib.) is of course the origin of the 'phalikam bhuja' which puzzled M. Senart. For *achambhī* (not rendered in Tib.) cf. Mhv. II. 269. 20. To Childers s. v., *chambhitattam*, add a ref. to Dh.-saṇi § 965.

4) °*khāg*° MS.

5) Cf. Mhv. II. 381. 23 sqq.

6) See Ch. s. v. and Mhv. Index.

7) This pāda is metrically confused and deficient. A word like *çama* (Tib. ཞི་བ 184. a. 4) has been lost.

न कामभोगे रमति कदाचि धीरो विशुद्धशीलः सकुशलब्रह्मचर्यः ।
समादपित्वा वनुपवने उषित्वा ऽभियुक्ति[1]ध्यानो भवति विशेषप्राप्तः ॥
न ज्ञानहानिर्भवति कदाचिदस्य न बोधिचित्तं विजहति सो कथंचित् ।
मैत्रीविहारी भवति अदीनचित्तो दत्वेह छत्रं भगवतचेतिकेषु ॥
वाद्येन पूजां नरवृषभस्य कृत्वा[2] न शोक शल्यवश जातु भोति ।
मनोज्ञघोषो भवति मनुष्यलोके स्वराङ्ग तस्याविकल [वि][3]शुद्ध भोति ॥
विशुद्धचक्षुर्भवति [4]स संप्रजन्या विशुद्धश्रोत्रो भवति उदग्रचित्तः ।
घ्राणेन्द्रियं परम उत्तप्त भोति वादित्व वाद्यं भगवत चेतिकेषु ॥
जिह्वास्य भोति सुरुचिर दर्शनीया सुसूक्ष्म मृद्वी रुचिर मनोज्ञ घोषा ।
रक्ता प्रवाला यथरिव देवतानां स्वराङ्ग कोटीवर सृजते ऽप्रमेयां ॥
न जातु भोती उरगु अजिह्मको वा न खञ्जकुब्जो नापि च नामिताङ्गः ।
विशिष्ट भोती सुरुचिर आत्मभावो [134 b] वादित्व वाद्यं भगवत चेतिकेषु ॥
न जातु कश्चि[5]ज्जनये प्रसादं देवो च नागो मनुज महोरगो वा ।
आश्वासप्राप्तो विचरति सर्वलोके वादित्व वाद्यं भगवत चेतिकेषु ॥
[6]कल्पान कोटीनियुत[शता][7]सहस्रं विशिष्टकायो भवति अनिन्दिताङ्गः ।
प्रासादिको ऽसौ कवचित लक्षणेभिः संशोध्य स्तूपं भगवत निर्वृतस्य ॥

---

1) *ariktadhy°* M. The reading implied by the Tib. is *abhijñāprāpto* ut supra.

2) The pāda is again defective. Beyond the two first words the reading implied by the Tib. is different མྱ་ངན་མེད་ཅིང་དགའ་ལྡན་རྒྱལ་པོར་འགྱུར; *na çokaçalyā prasahanti* M.

3) Supplied from M. (382. 24).

4) *susam°* M. and perhaps Tib.

5) *d* (sic for *t*) added a sec. m.

6) M. 386. 8.

7) Added for metre from Tib. བརྒྱ་སྟོང. *bharaty anind°* MS.



विमानश्रेष्ठं लभति मनोज्ञगन्धं दिव्यं विशिष्टं सुरुचिरचन्दनस्य ।
न जातु तृष्णां जनयति सो कदाचित् संशोध्य स्तूपं भगवत निर्वृतस्य ॥
[1]प्रलापकाले जिनवरशासनस्मिन् न जातु भोती उपगत जम्बुद्वी[2]पे ।
स्वर्गे स भोति प्रति[3]ष्ठित तस्मि काले गन्धानुलेपं ददिय जिनस्य स्तूपे ॥
दुर्गन्धिकामानशुचिजुगुप्सनीयान् वर्जेति नित्यं प्रति[3]ष्ठित शीलस्कन्धे ।
चरी स नित्य[4]मिमु वर ब्रह्मचर्यं गन्धानुलेपं करिय जिनस्य स्तूपे ॥
इतश्च्युतो ऽसौ मरुपति स्वर्गलोके [5]अर्थं सहस्रा तुलयति नो चिरेण ।
करोति चार्थं सुविपुलदेवतानां गन्धानुलेपं करिय जिनस्य स्तूपे ॥
[6]विशिष्टवाक्यो भवति मनोज्ञघोषः प्रियो मनापो बहुजनसत्कृतश्च । [135 a]
सुखं च त[7]स्य भवति सदा प्रसन्नं गन्धानुलेपं करिय जिनस्य स्तूपे ॥
[8]अपायभूमिं विजहात्यशेषां आसन्नको भवति तथागतानां ।
प्रसादलब्धः सद सुखि प्रेमणीयो गन्धानुलेपं करिय जिनस्य स्तूपे ॥

---

1) M. 388. 1. *çāsanesmin* MS.; cf. p. 300 n. 2.

2) The line is understood by the Tib. to mean that he is not re-born in J. then.

3) . . 3) *pratisht*, as in Rāṣṭrap. 53. 4.

4) To correct the faulty metre is not easy. If we read *nityam caranto* (cf. M. 388. 7), we lose *sa*, which in the Tib. is expressly contrasted (དེ་ནི) with *imu* (འདི).

5) *arthaḥ* MS. The Tib. seems to understand the phrase: «he counts his wealth by (as) thousands» (སྟོང་རྣམས་ལ་ 184 b. 6).

6) M. 388. 21.

7) Sic MS., contra metrum.

8) Cf. M. 388. 17—20.

सो (1)अक्षणां वै विजहाति सर्व अष्ट क्षणाश्चास्य विशिष्ट भोन्ति ।
बुद्धान(2) पूजामतुलिय सो करोति छोरित्व जालं भगवत चेतिकेषु ॥
(3)शूरश्च भोति दृढमतिरप्रमत्तो न कामभोगे ऽभिरतिं जनेति ।
नैष्क्रम्य(4)प्राप्तौ च अदीनचित्तः छोरित्व जालं भगवत चेतिकेषु ॥
(5)न बोधिचित्तं प्रमुष्यति तस्य जातु अखण्डशीलो ऽस्ति सुसंवृतश्च ।
धर्मं विरागं लभते विशुद्धं उप(6)नीय जालं भगवत चेतिकेषु ॥
दुर्वाचतां विजहति सर्वकालं प्रज्ञाअभावं च जहात्यशेषम् ।
विशालप्रज्ञो विहरति (7)चारिकायां उपनीय जालं भगवत चेतिकेषु ॥
लाभी च भोती शुचिभोजनानां वस्त्रान् विशिष्टान् लभते सुवर्णान् ।
स्पर्शाभ्युपेतान् रुचिदर्शनीयानु(8)पनीय जालं जिनचेतिकेभ्यः ॥
अभ्युत्क्षि(9)पित्वा जिनचेतिकेभ्यः निर्माल्यशुष्कं प्रमुदितवेगजातः ।
त्यजेत कामान् दुःखदवैरघोरान् आरागयेद्दशबलसार्थवाहान् ॥

1) *so 'ksh°* . . . *bhoti* MS. With the stanza cf. M. 392. 5—8; as to *choritva* cf. Senart ad 391. 22, and Hindi छोडना.

2) *°ānu* apparently MS.

3) M. 392. 1—4. For metre cf. 305. 10 supra; yet *bhotī* in similar metrical position l. 9. below.

4) Cf. Senart Mhv. I. 443. In spite of Davids & Oldenberg (Vin. Texts I. 104. n. 1), who seem to misunderstand Itivutt. § 72, *nekkhamma* seems to be connected with √*kram* not √*kām*.

5) M. 392. 9 sqq.

6) MS. *apanīya*, here and below, perhaps by confusion with *apaneti* below. I read *upan°* (cf. Mhv.. 391. 3 where Senart's MS. C actually reads *apanaye*) in order to alter as little as possible, though the refrain in the Tib. °བསལ་བྱས་ན is unchanged, suggesting *choritva* ut supra.

7) *°hareta cārikām* MS. contra metrum; but Tib. སྤྱོད་ལ་གནས

8) MS. *apanīya* as before.

9) Tib. (185. a. 5) reads: དད་པའི་ (*çraddhā*) ཕྱགས་བསྐྱེད་བཅོམ་ལྡན་མཆོད་རྟེན་ལ། The form *abhyutksh°* occurs in the Mhv.-redaction of the present (Avalokanā-) sūtra, at II. 329. 2. *°tkshapi°* MS.



प्रासादिको भोति विशुद्धकायः उद्वीक्षणी[135 b]यो बहुजनपूजनीयः ।
न तस्य राजापि प्रदुष्टचित्तः यो जीर्णपुष्पानपनेय चैत्ये ॥
कुमार्ग सर्वं पिथित(1) अपायभूमिः स शीलस्कन्धे स्थित बोधिसत्वः ।
अवतारयित्वा जिनचेतिकेभ्यः पुष्पं च प्रागन्यनरैः प्रदत्तं ॥
शोकांश्च दोषान्विजहात्यमत्तो रोगानशेषान्विजहात्यनेकान् ।
आश्वासप्राप्तश्च अनन्तकल्पान् यो जीर्णपुष्पानपनेति चैत्ये ॥
बुद्धश्च भोत्यसदृशदक्षिणीयो अतुल्यप्राप्तो नरमरुपूजनीयः ।
अलंकृतो भवति विशुद्धकायः यो जीर्णपुष्पानपनेति चैत्ये ॥
दद्याच्च यः सुरुचिरदिव्य पुष्पं मान्दारवानप्यथ पाटलं वा ।
निर्माल्यकं(2) यो ऽपनयेत चैत्ये विपाक श्रेष्ठो ऽस्य भवेदतुल्यः ॥
(3)यः प्राञ्जलिः (4)प्रणमति नाथस्तूपं छन्दं जनित्वा च सबुद्धलोके ।
सो भोति लोके गुरुकृतु सत्कृतश्च प्रासादिको भवति सुदर्शनीयः ॥
तस्येह राज्यं निपतति सर्वलोको देवासुरा नागमनुष्यकाश्च ।
सर्वाः सहस्राः कुसुमित लोकधातुः प्रशास्ति राज्ञो वश ईश्वरांश्च ॥
ये (5)तस्य राज्ये स्थित भोन्ति सत्वाः स्थापेय सर्वानकलुषबुद्धज्ञाने ।
अपायभूम्यस्त्यक्ता भवन्ति करोति चैषां परमसुश्रेष्ठमर्थम् ॥

1) If genuine, for *prathita* (cf. Mhv. III. 122. 5), and thus: 'made clear [with a view to avoidance]'; Tib. གཅོད 'avoid'. The parallel passage in M. (393. 6) has *pihitā*, which does not yield very good sense.

2) This pāda would seem to indicate the origin of the unmetrical *nirmālyāṃ* at M. 393. 19.

3) Cf. M. 394. 11 sqq.

4) *°lir nam°* MS.; but cf. 308. 6 below.

5) There seems to be no counterpart to this verse in the Mhv. In the third pāda -⏑⏑- replaced by --- is of course quite exceptional.

[1]परिचारो[136a] ऽस्य भवति मनोज्ञघोषः पुण्यैरुपेतः स्मृतिमतिपूजनीयः ।
आश्वासप्राप्तो विचरति जीवलोके सदाभिप्रायं जनयति श्रेष्ठप्रीतिं ॥
परिचार भोत्यस्य स्वराङ्ग शुद्धः ज्ञायेत सत्त्वैर्मधुरप्रशान्तवाक्यो ।
न तस्य कश्चिज्जनयति चेश्वरत्वं विलोकनीयो भवति महाजनस्य ।
दानप्रमोदं प्रियतार्थचर्या [2]समानार्थतां जनयति महाजनस्य ।
आक्रुष्टः सन्नाजनयेत रोषं यः प्राञ्जलिः प्रणमति बुद्धस्तूपं ॥
देवेन्द्र भोत्युपगतस्वर्गलोके मनुष्य[3]को भवति नरस्य राजा ।
न पारि[4]हाणिर्भवति कदाचिदस्य यो [5]अञ्जलीभिर्नमतीह स्तूपं ॥
नासावपाये प्रपतेत जातु हीनांश्च वर्जेत स [6]काम लोके ।
आढ्यो धनी भोति प्रभूतकोषो यो [5]ऽञ्जलीभिर्नमति बुद्धस्तूपम् ॥
[7]सूत्रान्तचर्या न कदाचिदस्य नास्थानकोपं कुरुते नृलोके ।
सत्त्वाश्च तृप्ता मुदितास्य भोन्ति यः संप्रमुञ्चो गुणवति एकवाचं[8] ॥

---

1) Cf. M. 394.21 sqq. In the fourth pāda the Tib. implies the reading *yathābhiprāyaṃ* found in M.

2) I leave the unmetrical reading of the MS. M. has: *samānārthatā ca bahujanasya* (395.9; cf. 119.4) which is equally difficult for metre. *bahujanasya* is probably correct, as the Tib. (185. b. 7) has དོན་མཐུན་པ་དག་སྐྱེ་བོ་མང་ལ་བྱེད།

3) M. (395. 17) has the clearer reading *manushyabhūto pi ca bhoti rājā.*

4) *părih°* MS. The form, which I adopt from the Mhv. text, seems sufficiently authenticated (see the Index to that work).

5) . . 5) As both these refrains are unmetrical, one might repeat from the preceding refrain *praṇamati,* since the Tib. has the same equivalent for all three. *vandati* in the refrain of M. 395. 15, 19 of course gives correct metre.

6) i. e. *hīnān kāmān.* The Tib. implies a reading such as *nityaṃ* (adv.) *kāma* (186. a. 2).

7) If I rightly understand the Tib. which is indistinct here, the reference is to the use of *dhāraṇī-sūtras* or charms, though Çāntideva himself as we have seen above does not discountenance these. Cf. also Bodhic. V. 90 (de la V.-P.).

8) At this point the citation from the Avalokanā ends in the Tib.



यः पुष्पमुष्टिं [1]गृह्णीत्वोदग्रचित्तः प्रसादतो ऽवकिरति लोकनाथे ।
स पुण्यवान्भवति मनुष्यलोके राजे च स्थित्वा जिन सत्करोति ॥
शोका न दोषाः खिलमल नास्य भोन्ति अतुल्यतामश्च सुसंस्थिताङ्गः ।
आलोकनीयश्च महाजनस्य त्यजेत कामान भयकरवैरघोरान्' इति ॥

आर्यमहाकरुणा[पुण्डरीक][2]सूत्रेऽप्युक्तं । तिष्ठतु तावदानन्द यो मां संमुखं सत्कुर्यात् । तिष्ठतु मे शरीरस्य पूजा सर्षपफलमात्रे[136b]षु धातुषु । तिष्ठतु मामुद्दिश्य कृतेषु स्तूपेषु सत्कारः । ये केचिदानन्द बुद्धमालम्ब्यान्तश एकपुष्पमप्याकाशे क्षेप्स्यन्ति' तस्य पुण्यस्कन्धस्य यो विपाकः सचेद्यावाननादिः संसारो यस्य पूर्वा कोटिर्न प्रज्ञायते' तावतः कल्पान्संसरतां तेषां शक्रत्वं ब्रह्मत्वं चक्रवर्तित्वं । न शक्यस्तत्पर्यन्तोऽधिगन्तुम् । तिष्ठतु बुद्धालम्बताऽन्तश आकाशेऽप्येकपुष्पनिक्षेपः । सचेदन्तशः स्वप्नान्तरगता अपि सत्त्वा बुद्धमालम्ब्याकाशे एकपुष्पमपि क्षेप्स्यन्ति तदप्यहं कुशलमूलं निर्वाणपर्यवसानं वदामीति ॥

उक्तं चार्यबृहत्सागरनागराज[3]परिपृच्छायां । अष्टाभिर्भुजगाधिपते धर्मैः समन्वागता बोधिसत्त्वाः सततसमितं बुद्धसमवधानं प्रतिलभन्ते । कतमैरष्टाभिः । बुद्धबिम्बदर्शनसत्त्वसमादापनतया' तथागतस्योपस्थानकरणतया' तथागतस्याभीक्ष्णं वर्णभाषणतया' तथागतप्रतिमाकरणतया' तथागतदर्शनसर्वसत्त्वसमादापनतया । यत्र च बुद्धक्षेत्रे तथागतशब्दं शृण्वन्ति तत्र प्रणिधानमुत्पादयन्ति' न चावलीनसंततयो भवन्ति' उदारसंततिकाश्च बुद्धज्ञानमभिलषन्त इति ॥

[137a]किं पुनः पुण्यवृद्ध्यर्थिनो बुद्धसमवधानेन प्रयोजनभूतं' यस्य गुणपर्यन्तमसर्वज्ञो नाधिगच्छेत् ॥

---

1) For the metre we must probably replace the 'gāthā'-form *grăhiyă* (*ŭdăgră*).

2) The Tib. here (186. a. 3) adds the equivalent of this word (K. F. 239) which was wanting in the title above (94. 14 = Tib. 63 a).

3) This is doubtless the work described at K. F. 253 № 2; Nos 3 and 4, being, as I find from the Kanjur itself, much smaller works.

यथार्यगण्डव्यूहे संवर्णितं ।

सुदुर्लभो बुद्धशब्दः कल्पकोटिशतैरपि ।
किं पुनर्दर्शनं सर्वकाङ्क्षाच्छेदनमुत्तमम् ॥
सुदृष्टो लोकप्रद्योतः सर्वधर्मगतिं गतः ।
पुण्यतीर्थं त्रैलोकस्य सर्वसत्त्वविशोधनम् ॥
महत्पुण्यमयं क्षेत्रं मुदितं ज्ञानमण्डलं ।
भासयत्यमितं लोकं पुण्यस्कन्धविवर्द्धनम् ॥
छेदनो दुःखजालस्य ज्ञानस्कन्धविशोधनः ।
न दुर्गतिभयं तेषां यैरिहारागितो जिनः ॥
विपुलं जायते चित्तं पश्यतां द्विपदोत्तमं ।
प्रज्ञाबलमसंख्येयं जायते च प्रभास्वरं ॥

पुनरत्रैवाह ।

अर्थाय सर्वसत्त्वानामुत्पद्यन्ते तथागताः ।
महाकारुणिका वीरा धर्मचक्रप्रवर्तकाः ॥
प्रतिकर्तुं कथं शक्यं बुद्धानां सर्वदेहिभिः ।
सत्त्वार्थेष्वभियुक्तानां कल्पकोटिशतैरपि ॥
कल्पकोटि[ं] वरं पक्तुं ह्यपाये भृशदारुणे ।
न त्वेवादर्शनं शास्तुः सर्वसर्गनिवर्तिनः ॥
यावन्तः[1] सर्वलोकस्मिन्नपायगतयः पृथक् ।
वरं तत्र चिरं वासो बुद्धानामश्रुतिर्न च ॥
किं कारणमपायेषु निवासश्चिरमिष्यते ।
यत्कारणं जिनेन्द्रस्य दर्शनं ज्ञानवर्धनम् ॥

1) Probably an error for °*vatyaḥ*; as there seems to be no analogy for *gati* as masc.



छिद्यन्ते सर्वदुःखानि दृष्ट्वा लोकेश्वरं जिनं ।
संभवत्यवतारश्च ज्ञाने संबुद्धगोचरे ॥
क्षपयत्यावृतीः[1] सर्वा दृष्ट्वा बुद्धं नरोत्तमम् ।
वर्धयत्यमितं पुण्यं येन बोधिरवाप्यत ' इति ॥

[137 b]तदेवमस्ति पुण्यवृद्धौ बुद्धसमवधानेन[2] प्रयोजनं । अपि च प्रतिमामात्रदर्शनमपि तावदपरिमितफलं तथागतानां ' किं पुनः स्वरूपेण ॥

उक्तं ह्यार्यश्रद्धाबलाधानावतारमुद्रासूत्रे[3] । यः कश्चिन्मञ्जुश्रीः कुलपुत्रः कुलदुहिता वा सर्वलोकधातुरजोपमानां प्रत्येकबुद्धानां दिने दिने शतरसमाहारं दद्यात् दिव्यानि च वस्त्राणि ' एवं दद्गङ्गानदीवालुकोपमान् कल्पान्दद्यात् । यश्चान्यो मञ्जुश्रीः कुलपुत्रः कुलदुहिता वा चित्रकर्मलिखितं वा पुस्तककर्मकृतं[4] वा बुद्धं पश्येद् ' अयं ततो ऽसंख्येयतरं पुण्यं प्रसवति ' कः पुनर्वादो यो ऽञ्जलिप्रग्रहं वा कुर्यात् पुष्पं वा दद्यात् धूपं वा गन्धं वा दीपं वा दद्याद् ' अयमेव ततो ऽसंख्येयतरं पुण्यं प्रसवतीति ॥

आर्यबोधिसत्त्वपिटके[5] ऽपि पुण्यवृद्ध्युपाय उक्तः । यस्तथागतचैत्यं शोधयति स चतस्रो ऽग्र्याः प्रणिधानविशुद्धीरनुप्राप्नोति । कतमाश्चतस्रः । अग्र्यां रूपप्रणिधानविशुद्धिं ' अग्र्यां [6]दृढसमादानप्रणिधानविशुद्धिं ' अग्र्यां तथागतदर्शनप्रणिधानविशुद्धिं ' अग्र्यां लक्षणसंपत्प्रणिधानविशुद्धिमिति ॥

पुनरत्रैवाख्यातं । तथागतचैत्येषु पुष्पावरो[138a]पणं गन्धानुलेपनं कृत्वा ऽष्टावविकलता अनुप्राप्नोति । कतमा अष्टौ । न रूपविकलो भवति ' न भोगविकलः ' न परिवा-

1) = *āvaraṇa* (90. n. 2), a new usage. Tib. སྒྲིབ་པ

2) On seeing Buddha compare the authorities quoted by Minaev Recherches p. 218, n. 2.

3) The quotations from this sūtra supra 86, 87 are closely parallel.

4) Not rendered in the Tib. Illuminated MSS. are doubtless referred to.

5) Cf. 190 n. 2 and add ref. to 'Life of Hiuen Tsiang', tr. Beal, p. 101. 8.

6) The phrase occurs at Lal.-v. 362. 9 and 559. 8.

रविकलः ' न शीलविकलः ' न समाधिविकलः ' न श्रुतविकलो न प्रज्ञाविकलो न प्रणिधानविकल इति ॥

उक्तं चार्यरत्नराशिसूत्रे । ये त्रिभव[1]पर्यापन्नाः सत्त्वास्ते सर्वे प्रत्येकं तथागतस्तूपान् कारयेयुरेवंरूपानुच्चैस्त्वेन[2] ' तद्यथा सुमेरुः पर्वतराजः । तांश्च गङ्गानदीवालिकासमान् कल्पान् प्रत्येकं सर्वसत्कारैः सत्कुर्युः । यश्च बोधिसत्त्वो ऽविरहितसर्वज्ञताचित्तेनैकपुष्पमप्यारोपयेत् ' अयं तस्मात्पूर्वकात्पुण्यस्कन्धाद्बहुतरं पुण्यं प्रसवेत् ॥

अत्रैवोक्तं । ये खलु पुनस्त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वास्ते सर्वे महायानसंप्रस्थिता भवेयुः ' सर्वे च चक्रवर्तिराज्यसमन्वागता भवेयुरेकैकश्च राजा चक्रवर्ती महासमुद्रप्रमाणादीपस्थालीं कृत्वा ' सुमेरुमात्रां वर्तिमादीप्य प्रत्येकमेवंरूपां दीपपूजां तथागतचैत्येषु प्रवर्तयेत् । यश्चाभिनिष्क्रान्तगृहावासो बोधिसत्त्वस्तैलप्रक्षिप्तां वर्तिं कृत्वा ऽदीप्य तथागतचैत्ये धारयेत् । अस्यास्तैलप्रक्षिप्ताया वर्तेरेतत्पूर्वकं प्रदीपदानं शततमीमपि कलां नोपैति । यावदुपनिषदमपि न क्षमत इति । पेयालं ॥ ये च[3] खलु पुनस्ते राजानश्चक्रवर्तिनो बुद्धप्रमुखं भिक्षुसं[138b]घं सर्वसुखोपधानैः सत्कुर्युः यश्चाभिनिष्क्रान्तगृहावासो बोधिसत्त्वः पिण्डपात्रं चरित्वा पात्रपर्यापन्नं परेषां संविभज्य परिभुञ्जीत ' इदं ततो बहुतरं च महार्घतरं च । यच्च ते राजानश्चक्रवर्तिनः सुमेरुमात्रं चीवरराशिं बुद्धप्रमुखाय भिक्षुसंघाय दद्युः ' यश्चाभिनिष्क्रान्तगृहावासो बोधिसत्त्वस्त्रिचीवरं [ ][4] बाहिर्धा महायानसंप्रस्थिताय बुद्धप्रमुख्याय भिक्षुसंघाय वा तथागतचैत्ये वा दद्याद् । इदं भिक्षोश्चीवरदानमेतत्पूर्वकचीवरराशिमभिभवति । यच्च ते राजानः प्रत्येकं सर्वं जम्बूद्वीपं पुष्पसंस्तृतं कृत्वा तथागतचैत्ये निर्यातयेत् ' यश्चाभिनिष्क्रान्तगृहावासो बोधिसत्त्वः अन्तश एकपुष्पमपि तथागतचैत्ये आरोपयेत् । अस्य दानस्यैतत् पूर्वकं दानं शततमीमपि कलां नोपैति । यावदुपनिषदमपि नोपैतीति ॥

1) Cf. 102. 8 supra. 2) °ष्त्वेन MS. 3) *yaç ca* MS.

4) *cīvarabahirddhā* (*or* °*rdvā*) MS. Prof. Poussin refers me to Bodhic. V. 85., which (si vera lect.) suggests a reading °*rabahir vā*.



आर्यानुपूर्वसमुद्गतपरिवर्ते ऽपि देशितं । चतुर इमान् भद्रानुशंसान् पश्यन् बोधिसत्त्वस्तथागतपूजायामुत्सुको भवति । कतमांश्चतुरः । अग्रश्च मे दक्षिणीयः[1] पूजितो भविष्यति [139a] मां च दृष्ट्वा ऽन्ये ऽपि तथा शिक्षिष्यन्ति । तथागतं च पूजयित्वा बोधिचित्तं दृढं भविष्यति । द्वात्रिंशतां च महापुरुषलक्षणानां संमुखदर्शनेन कुशलमूलमुपचितं भविष्यति । इमाश्चत्वारः [इति][2] ॥

इदं च निरुत्तरं तथागतपूजोपस्थानं । यथोदाहृतमार्यसागरमतिपरिपृच्छासूत्रे । त्रीणीमानि सागरमते तथागतस्य निरुत्तराणि पूजोपस्थानानि । कतमानि त्रीणि । यच्च बोधिचित्तमुत्पादयति । यच्च सद्धर्मं परिगृह्णाति । यच्च सत्त्वेषु महाकरुणाचित्तमुत्पादयतीति ॥

निर्दिष्टमप्यार्यरत्नमेघे । दशभिः कुलपुत्र धर्मैः समन्वागता बोधिसत्त्वा अननुलिप्ता गर्भमलेन जायन्ते । कतमैर्दशभिः । यदुत ' तथागतप्रतिमाकारणतया ' जीर्णचैत्यसंस्करणतया ' तथागतचैत्येषु गन्धविलेपनानुप्रदानेन ' तथागतप्रतिमासु गन्धोदकस्नानानुप्रदानेन ' तथागतचैत्येषु संमार्जनोपलेपनानुप्रदानेन ' मातापितॄणां कायपरिचर्याचरणेन आचार्योपाध्यायानां कायपरिचर्याचरणेन । सब्रह्मचारिणां कायपरिचर्याचरणेन । तच्च निरामिषेण चित्तेन न सामिषेण । तच्च कुशलमेवं परिणामयन्ति । [139b] अनेन कुशलमूलेन सर्वसत्त्वा निरुपलिप्ता गर्भमलेन जायन्तामिति । तच्च तीव्रेणाशयेन चिन्तयन्ति । एभिः कुलपुत्र दशभिर्धर्मैरिति ॥

अनुमोदनानुशंसास्त्वार्यप्रज्ञा[3]पारमितायामुक्ताः । यः प्रथमयानसंप्रस्थितानां बोधिसत्त्वानां महासत्त्वानां तांश्चित्तोत्पादाननुमोदते । चरतामपि बोधिसत्त्वचर्यां तांश्चित्तोत्पादाननुमोदते ' अविनिवर्तनीयामपि अविनिवर्तनीयधर्मतामनुमोदते बोधिसत्त्वानां महासत्त्वानां '

1) The Tib. (189 a. 1) renders this phrase: 'the best of receptacle(s) for gifts', presumably a Buddha.

2) Added from Tib.

3) Not the Aṣṭasahasrikā recension, though chapters V and VI of that work may be compared for style and for subject-matter, respectively.

कियन्तं स भगवन् कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यस्कन्धं प्रसवति ॥ एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत् । पे[1] । स्यात्खलु पुनः कौशिक[2] त्रिसाहस्रमहासाहस्रस्य लोकधातोः पलाग्रेण तुल्यमानस्य प्रमाणमुद्ग्रहीतुं । न त्वेव कौशिक बोधिसत्त्वस्य महासत्त्वस्य तेषामनुमोदनासहगतानां चित्तोत्पादानां पुण्यप्रमाणं ग्रहीतुं ॥ एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत् । माराधिष्ठितास्ते भगवन् सत्त्वा वेदितव्या । ये बोधिसत्त्वानां महासत्त्वानां प्रथमचित्तोत्पादमुपादाय यावदनुत्तरां सम्यक्सं[140a]बोधिमभिसंबुद्धानामेवमप्रमेयमनुमोदनासहगतं पुण्यमिति न शृण्वन्ति न जानन्ति । तामनुमोदनां न समन्वाहरन्ति । मारपक्षिकास्ते भगवन् सत्त्वा भविष्यन्ति ॥ भगवानाह । पे[3] । यैः कौशिक कुलपुत्रैः कुलदुहितृभिश्चेमे चित्तोत्पादा अनुमोदिता बोधिसत्त्वयानिकैर्वा प्रत्येकबुद्धयानिकैर्वा श्रावकयानिकैर्वा । ते क्षिप्रं तथागतानर्हतः सम्यक्संबुद्धानारागयिष्यन्ति ॥ भगवानाह[4] । एवं तैरनुमोदनासहगतैश्चित्तोत्पादकुशलमूलैर्यत्र यत्रोपपत्स्यन्ते तत्र तत्र सत्कृताश्च भविष्यन्ति गुरुकृताश्च मानिताश्च पूजिताश्च अर्चिताश्च अपचायिताश्च भविष्यन्ति । न च ते ऽमनआपानि रूपाणि द्रक्ष्यन्ति । न च ते ऽमनआपान् शब्दान् श्रोष्यन्ति । एवं न गन्धान्न रसान्न स्प्रष्टव्यान् स्प्रक्ष्यन्ति न च तेषामपायेषूपपत्तिः प्रतिकाङ्क्षितव्या स्वर्गोपपत्तिस्तेषां प्रतिकाङ्क्षितव्या । तत्कस्य हेतोः । तथा हि तैः सत्त्वैः सर्वसत्त्वसुखावह[न]ानि असंख्येयानां सत्त्वानां कुशलमूलान्यनुमोदितानि यावदनुत्तरां सम्यक्संबोधिमभिसंबुध्याप्रमेयासंख्येयान्सत्त्वान्परिनिर्वापयिष्यन्तीति ॥

पुनरत्रैवाह[5] । ये सुभूते गङ्गान[140b]दीवालिकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वास्ते सर्वे ऽनुत्तरां सम्यक्संबोधिं प्रतितिष्ठेयुरनुत्तरां सम्यक्संबोधिं प्रति-

1) om. Tib. (189. b. 4).

2) As a name of Indra cf. Ṛv. I. 10.11; and for Buddh. lit.; Av.-çat., Tale 16.

3) om. Tib.

4) These words also are omitted in the Tib. (190. a. 2).

5) Compare Ashṭas. pp. 160—1.



ष्ठाप गङ्गानदीवालिकासमान्कल्पानुपलम्भ[1]संज्ञिनश्चत्वारि ध्यानानि समापद्येरन् । यश्च[2] बोधिसत्त्वो महासत्त्वो ऽनया प्रज्ञापारमितया उपायकौशल्येन च परिगृहीतो ऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धं । श्रावकाणां प्रत्येकबुद्धानामपि शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धं सर्वमेकतो ऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेषमनुमोदेताग्रयाऽनुमोदनया ज्येष्ठया श्रेष्ठया वरया प्रवरया प्रणीतया उत्तरया निरुत्तरया उत्तरोत्तरया असमया ऽसमसमया ऽप्रतिसमया ऽनुमोदनयानुमोद्यानमोदनासहगतं पुण्यक्रियावस्त्वनुत्तरायै सम्यक्संबोधये परिणामयति । अस्य सुभूते ऽनुमोदनासहगतस्य पुण्यक्रियावस्तुनो ऽसौ[3] पूर्वक औपलम्भिकानां बोधिसत्त्वानां चतुर्ध्यानमयः पुण्याभिसंस्कारः शततमीमपि कलां नोपैति यावदुपनिषद[141a]मपि[4] न क्षमत इति ॥

अयमेव नयः परिणामनायामुक्तः[5] । अथवाऽग्रपरिणामनया परिणामितत्वात्सर्वपुण्यानामस्य बुद्धत्वाय सत्कृतप्रणिधिबुद्धत्वमेव स्यात् । अतः का परा पुण्यवृद्धिः । तच्चाशेषसत्त्वमोक्षकृतपुण्यज्ञानोपेतं निर्विकल्पं च[5] ॥

अध्येषणायास्त्वनुशंसा आर्योग्रपरिपृच्छायामुक्ता धर्मग्राह्यतामुपादायाप्रमेयासंख्येयेषु बुद्धक्षेत्रेष्वायुः परिरक्षणायेति ॥

आर्यशिक्षासमुच्चये वन्दनाद्यनुशंसा सप्तदशपरिच्छेदः समाप्तः ॥

1) The Tib. renders this by དམིགས།, usually the equivalent of *ālambana*; but cf. Ashṭas. 160. 11. 16 etc.

2) The remainder of the extract agrees fairly closely with the text of Ashṭas. 160. 17—161. 8.

3) *'sāvaupal°* MS. with *pūrvaka* in margin. *so 'pi paurvaka aup°* Ashṭ. *aupalambhika* is not in lexx. Tib. དམིགས་པ་ཅན

4) Cf. 187 n. 1. For the full phrase (here abridged by *yāvad*) see Ashṭ. 161. 8.

5) . . 5) omitted in the Tib.

# XVIII.

## रत्नत्रयानुस्मृतिर्नामाष्टादशः परिच्छेदः॥

उक्ता भद्रचर्याविधिना[1] पुण्यवृद्धिः। अस्यायमपरो हेतुः। योऽयं श्रद्धादीनां सदाऽभ्यासः॥

यथोक्तमार्यतथागतगुह्यसूत्रे। चत्वार इमे महाराज धर्मा महायानसंप्रस्थितानां विशेषगामितायै संवर्तन्ते ऽपरिहाणाय च। कतमे चत्वारः। श्रद्धा महाराज विशेषगामितायै संवर्तते ऽपरिहाणाय। तत्र कतमा श्रद्धा। यया श्रद्धया आर्यानुपसंक्रामति। अकरणीयं च न करोति॥ गौरवं महाराज विशेषगामितायै संवर्तते। येन गौरवेण सुभाषितं शृणोति शुश्रूषते ऽविरहितश्रोत्रश्च धर्मं शृणोति॥ निर्मानता महाराज विशेषगामितायै संवर्तते। यया निर्मानतया आर्याणामभिनमति प्रणमति नमस्यति॥ वीर्यं महाराज विशेषगामितायै संवर्तते ऽपरिहाणाय। येन वीर्येण कायलघुतां [141b] चित्तलघुतां च प्रतिलभते सर्वकार्याणि चोत्तारयति॥ इमे महाराज चत्वार इति॥

एषां श्रद्धादीनां सदाभ्यासः कार्यः। अथवान्येषां श्रद्धादीनां॥ यथाह आर्याक्षयमतिसूत्रे पञ्चेमानीन्द्रियाणि। कतमानि पञ्च। श्रद्धेन्द्रियं[2] वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियमिति॥ तत्र कतमा श्रद्धा ' यया श्रद्धयाश्चतुरो धर्मानभिश्रद्दधाति। कतमांश्चतुरः। संसारावचरीं लौकिकीं सम्यग्दृष्टिं श्रद्दधाति। स कर्मविपाकप्रतिशरणो भवति ' यद्यत्कर्म करिष्यामि तस्य तस्य कर्मणः फलविपाकं प्रत्यनुभविष्यामीति। स जीवितहेतोरपि पापं कर्म न करोति। बोधिसत्त्वचारिकामभिश्रद्दधाति। तच्चर्याप्रतिपन्नश्चान्यत्र

1) Cf. 139 n. 7 and Ch. XVI (title).

2) Cf. Dh.-saṅgr. § 47. In the Pali authorities, e. g. Dh.-sṇi §§ 12—16, Mil-P. pp. 33 sqq., the exposition differs from the present one.



याने स्पृहां नोत्पादयति। परमार्थनीतार्थं गम्भीरप्रतीत्यसमुत्पादनैरात्म्यनिःसत्त्वनिर्जीवनिःपुद्गलव्यवहारशून्यतानिमित्ताप्रणिहितलक्षणान् सर्वधर्मान् श्रुत्वा श्रद्दधाति। सर्वदृष्टिकृतानि च नानुशेते सर्वबुद्धधर्मान् बलवैशारद्यप्रभृतींश्च श्रद्दधाति। श्रद्धाय च विगतकथंकथस्तान् बुद्धधर्मान्समुदानयति। इदमुच्यते श्रद्धेन्द्रियम्॥ तत्र कतमद्वीर्येन्द्रियं। यान् धर्मान् श्रद्धेन्द्रियेण श्रद्दधाति तान्धर्मान् वीर्येन्द्रियेण समुदानयतीदमुच्यते वीर्येन्द्रियं॥ तत्र कतमत् स्मृतीन्द्रियं। यान्धर्मान्वीर्येन्द्रियेण समुदानयति तान्धर्मान् [142a] स्मृतीन्द्रियेण न विप्रणाशयति। इदमुच्यते स्मृतीन्द्रियम्॥ तत्र कतमत्समाधीन्द्रियं। यान्धर्मान् स्मृतीन्द्रियेण न विप्रणाशयति तान् समाधीन्द्रियेणैकाग्रीकरोतीदमुच्यते समाधीन्द्रियं॥ तत्र कतमत्प्रज्ञेन्द्रियम्। यान्धर्मान्समाधीन्द्रियेणैकाग्रीकरोति तान् प्रज्ञेन्द्रियेण प्रत्यवेक्षते प्रतिविध्यति। यदेतेषु धर्मेषु प्रत्यात्मज्ञानमपरप्रत्ययज्ञानमिदमुच्यते प्रज्ञेन्द्रियं॥ एवमिमानि पञ्चेन्द्रियाणि सहितान्यनुप्रबद्धानि सर्वबुद्धधर्मान्परिपूरयन्ति ' व्याकरणभूमिं चाप्ययन्ति [इति][1]॥

श्रद्धादीनां बलानां सदाऽभ्यासः कार्यः। यथोक्तमार्यरत्नचूडसूत्रे। तत्र कतमत्कुलपुत्र बोधिसत्त्वस्य बलचर्यापरिशुद्धिः। यदेभिरेवेन्द्रियैरुपस्तब्धो ऽनवमर्द्यो भवति सर्वमारैः। असंहार्यो[2] भवति श्रावकप्रत्येकबुद्धयानाभ्यां। अविनिवर्त्यो भवति महायानात्। दुर्धर्षो भवति सर्वक्लेशैः। दृढो भवति पूर्वप्रतिज्ञासु। तृप्तो भवति चित्तेन। बलवान् भवति कायेन। गुप्तो[3] भवतीन्द्रियैः। दुःपराजयो भवति तीर्थिकैः ' इत्यादि॥

एवं तावच्छ्रद्धादीनां सदा ऽभ्यासः पुण्यवृद्धये॥

का मैत्री॥ यथाह चन्द्रप्रदीपसूत्रे।

1) ཞེས་གསུངས་པ་བཞིན་ནོ. The quotation accordingly ends here.

2) Cf. Mhv. II. 367.18 'not to be captivated by . .', Tib. མི་འཕྲོག་པར་འགྱུར

3) *yenāgupto* MS.; but Tib. (192 b. 1) དབང་པོ་རྣམས་སྲིད་པར་འགྱུར

यावन्ति पूजा बहुविध अप्रमेया या क्षेत्रकोटी [142 b] नयुतबिम्बरेषु[1]।
तां पूजकृत्वा पुरुषवरेषु नित्यं संख्याकलापो[2] न भवति मैत्रचित्त ' इति॥

का बुद्धाद्यनुस्मृतिः॥

तत्र राष्ट्रपालसूत्रे संवर्णिता।

[3]वन्दामि ते कनकवर्णनिभा वरलक्षणा विमलचन्द्रमुखा।
वन्दामि [ते][4] असमज्ञानपरा[5] सदृशो न ते ऽस्ति त्रिभवे विरजा॥
मृदु चारु[6] स्निग्ध शुभ केश नखा गिरिराजतुल्य तव चोष्णिरिह।
नोष्णीषमीक्षितु तवास्ति समो विभ्राजते भुवि[7] तवोर्णा मुने॥
कुन्देन्दुशङ्खहिमशुभ्रनिभा नीलोत्पलाभशुभनेत्रवरा।
कृपयेक्षसे जगदिदं हि यया वन्दामि ते विमलनेत्र[8] जिन॥
जिह्वा प्रभूत तनु ताम्रनिभा वदनं च छादयसि येन स्वकं।
धर्मं वदन्विनयसे च जगत् वन्दामि ते मधुरस्निग्धगिरा[9]॥
दशनाः शुभाः सुदृढ वज्रनिभाः त्रिंशद्दशाप्यविरलाः सहिताः।
कुर्वन्स्मितं विनयसे च जगत् वन्दामि ते मधुरसत्यकथा॥
रूपेण चाप्रतिसमो ऽसि जिनः प्रभया च भासयसि क्षेत्रशतान्।
ब्रह्मेन्द्रपालजगतो भगवन् जिह्मीभवन्ति तव ते प्रभया॥

1) Cf. Kern, Saddh. tr. p. 3 n. 6.

2) གྲངས་དང་ཆར་མི་ཕོད་ 'is not commensurate with any number' (?).

3) See the edition (R.) of the text by M. Finot in the Bibliotheca Buddhica where it is called R⁰. paripṛcchā; see pp. 50.9 sqq. The principal variants are noted below. Metre: Pramitāksharā with - for ⏑⏑ usually at the beginning.

4) om. A.

5) *dharā* R.

6) *cāruaçubhakeça* A; *keça jinā* R.

7) °*vi vare 'pi tave*° contra metrum R.

8) so Tib.: རྒྱལ་བ་འདྲི་མེད་སྤྱན. *hitakaraṃ asama* A.

9) *snigdha madhura* A, unmetrically as above; *giram* R.



एणेय जङ्घ भगवन्नसमा गजराजबर्हिमृगराजगतो[1]।
ईक्षन्व्रजस्यपि युगं भगवन् संकम्पयन्धरणिशैलतटान्॥
[143 a] कायश्च लक्षणचितो भगवन् सूक्ष्म[2] छवी कनकवर्णनिभा।
नेक्षञ्जगद्व्रजति[3] तृप्तिमिदं रूपं तवाप्रतिमरूपधर॥
त्वं पूर्वकल्पशतचीर्णतपाः त्वं सर्वत्यागदमदानरतः।
त्वं सर्वसत्वकृपमैत्रमनाः वन्दामि ते परमकारुणिकम्॥
त्वं दानशीलनिरतः सततं त्वं क्षान्तिवीर्यनिरतः सुदृढः।
त्वं ध्यानप्रज्ञप्रभतेजधरो वन्दामि ते असमज्ञानधर[4]॥
त्वं वादिसूर कुगणप्रमथी त्वं सिंहवन्नदसि पर्षदि[5] च।
त्वं वैद्यराज त्रिमलान्तकरो वन्दामि ते परमप्रीतिकर[6]॥
वाक्कायमानसविशुद्ध मुने त्रिभवेष्वलिप्तजलपद्ममिव[7]।
त्वं ब्रह्मघोषकलविङ्करुतो वन्दामि ते त्रैभवपारगतम्॥
मायोपमं जगदिदं भवता नटरङ्गस्वप्नसदृशं विदितं।
[8]नात्मा न सत्व न च जीवगतो धर्मा मरीचिदकचन्द्रसमाः॥
शून्याश्च शान्त अनुत्पादनयं अविजानदेव[9] जगदुद्भ्रमति।
तेषामुपायनययुक्तिशतैः अवतारयस्यतिकृपालुतया[10]॥

1) °*teḥ* R.

2) *çlakshṇa* A., sec. m. and R. Tib. འཇམ 'soft'.

3) A (against metre) *na prekshya yāti tava jagat tṛptim. idaṃ rūpam* is supported by the Tib. གཟུགས་འདི

4) *raṃ* A.

5) so R. *parshadimam* A.

6) °*rāḥ* A.

7) *jaga* A. Tib. with R.

8) so R and Tib. *nāmnā* A.

9) so R. with Tib. A unmetrically: *anutpādaçāntaçūnyanayaṃ avijñānam eva.*

10) °*syapi* R.

रागादिभिश्च बहुरागशतैः संभ्रामितं सतत वीक्ष्य[1] जगत् ।
वैद्योपमो विचरसे ऽप्रतिमो परिमोचयन्[2] सुगत[3] सत्त्वशतान् ॥
जातीजरामरणशोक[143 b]हतं प्रियविप्रयोगपरिदेवशतैः ।
सततातुरं जगदवेक्ष्य मुने परिमोचयन्विचरसे कृपया ॥
5 रथचक्रवद्भ्रमति सर्वजगत् तिर्यक्षु प्रेतनिरये सुगतौ ।
मूढा अदेशिक अनाथगताः तस्य प्रदर्शयसि मार्गवरं[4] ॥
ये ते बभूवु पुरिमाश्च जिनाः धर्मेश्वरा जगति चार्थकराः ।
अयमेव तैः प्रकथितार्यपथो यद्देशयस्यपि विभो ऽप्रतिमः ॥
स्निग्धं त्वकर्कश[5] मनोज्ञ वरं ब्रह्माधिकं परमप्रीतिकरं ।
10 गन्धर्वकिन्नरवराप्सरसाम् अभिभूय तां गिरमुदाहरसे ॥
सत्यार्जवाक्षय[6]मुपायनयैः परिशोधितां गिरमनन्तगुणां ।
श्रुत्वा हि यां नियुतसत्त्वशताः यानत्रयेण जनयन्ति[7] शमम् ॥
तव पूजया सुखमनेकविधम् दिव्यं लभन्ति मनुजेषु तथा ।
आढ्यो महाधन महाविभवो भवते जगद्धितकरो नृपतिः ॥
15 बलचक्रवर्त्यपि च द्वीपपतिः[8] जगदावृणोति दशभिः कुशलैः ।
रत्नानि सप्त लभते सुशुभा त्वयि संप्रसादजनको ऽप्रतिमः ॥

1) *saṃtāpitaṃ* .. °*tam īkshya* (sic) R.
2) *caya* R.
3) om. A.
4) R. *mārgaṃ*.
5) ཞིང་མཉེན་ལ 'in a soft place' Tib.; *hy ăkarshaya* R.
6) This reading is founded on the Tib. (193. b. 5) བདེན་དང་དྲང་པ་མི་ཟད་ཐབས་ཚུལ་གྱིས. R has *satyārjavăkshayam upāya*°. *satyāryavākyam anāpāya*° A.
7) so also Tib.; *jina yānti* R.
8) *dīpayatī* A.



ब्रह्मापि शक्र अपि लोकपतिः भवते च संतुषित देवपतिः ।
[1]परनिर्मितो ऽपि च स यामपतिः त्वत्पूजया भवति चापि जिनः ॥
एवं ह्यमोघ तव पूज कृता संदर्शनं [144 a] श्रवणमप्यसमं ।
भवते जगद्द्विविधदुःखहरं स्पृशते पदं[2] च परमं विरजं ॥
मार्गज्ञ मार्गकुशला भगवन् कुपथान्निवारयसि लोकमिमं । 5
क्षेमे शिवे विरजि आर्यपथे प्रतिष्ठापयसि[3] जगद्भगवन् ॥
पुण्यार्थिकस्य तव पुण्यनिधे[4] सततात्वया भवति पुण्यक्रिया ।
बहुकल्पकोटिषु न याति क्षयं यावद्धि न स्पृशति बोधि वरां[5] ॥
परिशुद्धक्षेत्र लभते रुचिरं परनिर्मिताभ सद प्रीतिकरं ।
शुद्धाश्च कायवचसा मनसा सत्त्वा भवन्त्यपि च क्षेत्रवरे ॥ 10
इत्येवमादिगुण नैकविधान् लभते जिनार्चनकृतान्मनुजः ।
स्वर्गापवर्ग मनुजेषु सुखं लभते च पुण्यनिधि सर्वजगे ॥
कीर्तियशश्च प्रसृतं[6] विपुलं तव सर्वदिक्षु बहुक्षेत्रशतान् ।
संकीर्तयन्ति सुगताः सततं तव वर्णमाल परिषत्सु[7] जिनाः ॥
विगतज्वरा जगति मोक्षकराः प्रियदर्शना असमकारुणिकाः । 15
शान्तेन्द्रिया शमरता भगवन् वन्दामि ते नरवरप्रवर ॥

1) *parin*° . . *suyāma* R. With our reading compare Mhv. I. 33. 3; and line 9 infra.
2) *param padavaraṃ hy ajaraṃ* R.
3) ⏑––⏑ for ⏓–⏑–. R. reads °*yasy api*, which implies a scansion *pratĭshtha*°.
4) so A with Tib.; *puṇyādhi*° . . °*nidheḥ* R.
5) °*carām* R.; but Tib. དམ་པ
6) Tib. ཕྱུ; *prabhṛtim* A.
7) *parshatsu* (contra metrum) A. R.

लब्धा [1]अभिज्ञ जिन यच्च मया गगने स्थितेन ते निशम्य गिरम् ।
भवितास्मि वीर सुगत[2]प्रतिमो विभजिष्य धर्मममलं जगतः ॥
स्तुत्वाद्य सर्वगुणपारगतं नरदेवनागमहितं सुगतं ।
पुण्यं [3]यदर्जितमिदं [144 b] विपुलं जगदाप्नुयादपि च बुद्धपदम्' इति ॥

अथवा यथार्यधर्मसंगीतिसूत्रे कथितं । पुनरपरं बुद्धा भगवन्तो महापुण्यज्ञानसंभारा महामैत्रीमहाकरुणागोचरा महासत्त्वराशेः त्राणभूता महाभिषज्यशल्यहर्तारः सर्वसत्त्वसमचित्ता नित्यसमाधिगोचराः संसारनिर्वाणविमुक्ता यावत्सत्त्वानां मातापितृकल्पाः समानमैत्रचित्ताः । पे ॥ सर्वलोकानभिभूताः सर्वलोकस्यालोकभूता महायोगयोगिनो महात्मानो महाजनपरिवारा विशिष्टजनपरिवारा अनिवारितदर्शनश्रवणपर्युपासनाः स्वसुखनिरपेक्षाः परदुःखप्रशमनप्रिया धर्मप्रिया धर्मधरा धर्माहारा धर्मभिषजो धर्मेश्वरा धर्मस्वामिनो धर्मदानपतयो नित्यत्यागाभिरता नित्याप्रमत्ता नित्यविवेकाभिरताः सर्वत्र तीर्थसेतुभूता महाराजमार्गप्रख्या [4]यावदसेचनकदर्शना बुद्धा भगवन्त' एवं ताननुस्मरति । एवं च ताननुस्मृत्य तद्गुणपरिनिष्पत्त्यर्थं स्मृतिमुपस्थापयति ॥ तदुच्यते बुद्धानुस्मृतिरिति ॥

अत्रैव धर्मानुस्मृतिमाह । इह बोधिसत्त्वस्यैवं भवति । य एते बुद्धा भगवन्तोऽनन्तापर्यन्तगुणा एते धर्मजा धर्मपदा धर्मनिर्मिता धर्माधिपतेया धर्मप्रभा धर्मगोचरा धर्मप्रतिशरणा धर्मनिष्पन्नाः । [5]पेयालं ॥ यान्यपि [6]लौकिकानि लोकोत्तराणि च सुखानि सन्ति' तान्यपि धर्म[145 a]जानि धर्मनिष्पन्नानि । तस्मान्मया बोध्यर्थिकेन धर्मगुरुकेण भवितव्यं' धर्मगौरवेण धर्मप्रतिशरणेन धर्मपरायणेन धर्मसारेण धर्मान्व...धर्मप्रतिपन्नेन[1]' इतीयमुच्यते बोधिसत्त्वस्य धर्मानुस्मृतिः ॥ पुनरपरं बोधिसत्त्वस्यैवं भवति । समो हि धर्मः समः सत्त्वेषु प्रवर्तते । धर्मो हीनमध्यविशिष्टानपेक्ष्यः प्रवर्तते । तथा मया धर्मसदृशचित्तेन भवितव्यं । न धर्मो सुखप्रेक्षिकया प्रवर्तते' अपक्षपतितो हि धर्मः' तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः कालमपेक्ष्यः[2] प्रवर्तते' [3]आकालिको हि धर्मः' [3]ऐहिपश्यिकः' [6]प्रत्यात्मवेदनीयः' तथा मया धर्मसदृशचित्तेन भवितव्यं । न धर्म उदारे प्रवर्तते हीनेषु न प्रवर्तते' अनुन्नामावनामो हि धर्मः' तथा मया धर्मसदृशचित्तेन भवितत्यं । न धर्मः शुद्धेषु प्रवर्तते क्षतेषु न प्रवर्तते । उत्कर्षापकर्षापगतो हि धर्मस्तथा मया धर्मसदृशचित्तेन भवितव्यं । न धर्म आर्येषु प्रवर्तते पृथग्जनेषु न प्रवर्तते । क्षेत्रदृष्टिविगतो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यं । न धर्मो दिवा प्रवर्तते रात्रौ न प्रवर्तते' रात्र्यां वा प्रवर्तते दिवा न प्रवर्तते' सदाऽधि[145 b]ष्ठितो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मो विनयवेलामतिक्रामति' न धर्मस्य क्वचिद्विलम्बः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मस्योनत्वं न पूर्णत्वमप्रमेयासंख्येयो हि धर्म आकाशवन्न क्षीयते न वर्धते । तथा मया धर्मसदृशचित्तेन भवितव्यं । न धर्मः सत्त्वै रक्ष्यते' धर्मः सत्त्वान् रक्षति । तथा मया धर्मसदृशचित्तेन भवितव्यं । न धर्मः शरणं पर्येषते' धर्मः सर्वलोकस्य शरणं' तथा मया धर्मसदृशचित्तेन भवितव्यं । न धर्मस्य क्वचित्प्रतिघातो' ऽप्रतिहतलक्षणो हि धर्मः'

---

1) Dh.-saṃgr. § 20.

2) བདེ་གཤེགས་མཚུངས་པ (194. b 1) °*tāpr*° A, °*tau pr*° R.

3) གང་སྒྲུབས་ཕྱུར་པ; but R. *yadārcitam*.

4) The several similes (the sun, Brahma etc.) whose omission is denoted by this word are detailed in the Tib. (195 a 1—2).

5) See Tib. 195 a. 5—7 for the passage omitted. For *dharmapadā* see Glossary.

6) 'La loi est la dispensatrice de tous biens terrestres et supérieurs' Minaev, Recherches p. 219 (reproducing this passage).



1) The MS. appears to read: *dharmānvadharmāpra*° Tib. ཆོས་དང་རྗེས་སུ་མཐུན་པའི་ཆོས་བསྒྲུབ་པ. Possibly therefore the reading was *dharmānulomadharmapr*°.

2) Sic MS. One would expect °*lāpekshyaḥ* or °*lam apekshya*.

3) . . 3) This is a traditional description of *dharma*. See Aṅg. n. vol. I p. 222; II. 57. The words also form part of M. Vyutp. § 63 where the *dharma* is described. The context here shows that Böhtlingk's 'rechtzeitig' cannot be correct; rather (with the Tib.) 'without stated time'. (Wörterb. K. F., Nachtr. s. v. *ākālika*).

तथा मया धर्मसदृशचित्तेन भवितव्यं। न धर्मो ऽनुशयं वहति ' निरनुशयो हि धर्मः ' तथा मया धर्मसदृशचित्तेन भवितव्यम्। न धर्मः संसारभयभीतो न निर्वाणानुनीतः। सदा निर्विकल्पो हि धर्मः ' तथा मया धर्मसदृशचित्तेन भवितव्यम्। एवं बोधिसत्वो धर्मवद्धर्मे स्मृतिमुपस्थापयति। तदुच्यते धर्मानुस्मृतिरिति ॥

5 अत्रैवाह। संघो हि धर्मवादी धर्मचरणो धर्मचित्तको धर्मक्षेत्रं धर्मधरो धर्मप्रतिशरणो धर्मपूजको धर्मकृत्यकारी धर्मगोचरो धर्मचारित्रसंपन्नः ' स्वभावऋजुकः स्वभावशु[146a]द्धः सानुक्रोशो धर्मानुकारुणिकः सदा विवेकगोचरः। सदा धर्मपरायणः सदा शुक्लकारीत्यादि ॥ तत्र बोधिसत्वस्य संघमनुस्मरतः एवं भवति। य एते संघस्य भूता गुणा एते मया ऽत्मनः सर्वसत्वानां च निष्पादयितव्या इति ॥

10 यथार्यविमलकीर्तिनिर्देशे[1] बोधिसत्वगुणा उक्तास्तथा संघानुस्मृतिर्भाव्या।

सर्वसत्वान ये रूपा रुतघोषाश्च ईरिताः।
एकक्षणेन दर्शेन्ति बोधिसत्वा विशारदाः ॥
ते जीर्णव्याधिता भोन्ति मृतमात्मान दर्शयी।
सत्वानां परिपाकाय मायाधर्म विक्रीडिताः ॥
15 कल्पोद्दाहं च दर्शेन्ति उद्दहित्वा वसुंधराम्।
नित्यसंज्ञिन सत्वानामनित्यमिति दर्शयी ॥
सत्वैः शतसहस्त्रेभिरेकराष्ट्रे निमन्त्रिताः।
सर्वेषां गृह भुञ्जन्ति सर्वान्नामन्ति[2] बोधये ॥
ये केचिन्मन्त्रविद्या वा शिल्पस्थाना बहुविधाः।
20 सर्वत्र पारमिप्राप्ताः सर्वसत्वसुखावहाः ॥

1) Since writing p. 269, n. 6 sqq. I have been able to consult the English translation of the whole sūtra published with the Chinese version in the magazine 'Hansei Zasshei' vol. xiii. (Tokyo, 1898). The present extract occurs at the end of Ch. VIII.; stanzas 18—41 (tr. pp. 378, sqq.).

2) For *nāmayanti* (°enti), like *paripācati* below.



यावन्तो लोके पाषण्डाः सर्वत्र प्रव्रजन्ति ते।
नानादृष्टिगतं प्राप्तांस्ते सत्वान्परिपाचति ॥
चन्द्रा वा भोन्ति सूर्या वा शक्रब्रह्मप्रजेश्वराः।
भवन्ति आपस्तेजश्च पृथिवी मारुतस्तथा ॥
5 रोग अन्तरकल्पेषु भैषज्यं भोन्ति उत्तमाः।
येन ते सत्व मुच्यन्ते सुखी भोन्ति अ[146b]नामयाः ॥
दुर्भिक्षान्तरकल्पेषु भवन्ती पानभोजनम्।
क्षुधापिपासामपनीय[1] धर्मं देशेन्ति प्राणिनाम् ॥
शस्त्र अन्तरकल्पेषु मैत्रीध्यायी भवन्ति ते।
10 अव्यापादे[2] नियोजेन्ति सत्वकोटिशतान्बहून् ॥
महासंग्राममध्ये च समपक्षा भवन्ति ते।
सन्धिसामग्रि रोचेन्ति बोधिसत्वा महाबलाः ॥
ये चापि निरयाः केचिद्बुद्धक्षेत्रेष्वचिन्तिषु।
संचिन्त्य तत्र गच्छन्ति सत्वानां हितकारणात् ॥
15 यावन्त्या गतयः काश्चित्तिर्यग्योनौ प्रकाशिताः।
सर्वत्र धर्मं देशेन्ति तेन उच्यन्ति नायकाः ॥
कामभोगां[श्च][3] दर्शेन्ति ध्यानं च ध्यायिनां तथा।
विध्वस्त मारं कुर्वन्ति अवतारं न देन्ति ते ॥
अग्निमध्ये यथा पद्ममभूतं तं विनिर्दिशेत्।
20 एवं कामांश्च ध्यानं च अभूतं ते विदर्शयी ॥

1) Sic MS. contra metrum. Should we read *kshutpipās*°? Cf. Bodhic. III. 8.

2) གནོད་སེམས་མེད་པ Tib. *adhyāyādau* corrected to *vyāpā* MS.

3) Supplied *metri gratia*. Tib. ཀྱང.

संचिन्त्य गणिकां भोन्ति पुंसामाकर्षणाय ते ।
रागाङ्कु संलोभ्य बुद्धज्ञाने स्थापयन्ति[1] ते ॥
ग्रामिकाश्च सदा भोन्ति सार्थवाहाः पुरोहिताः ।
अग्रामात्याथ चामात्यः सत्त्वानां हितकारणात् ॥
दरिद्राणां च सत्त्वानां निधाना भोन्ति अक्षयाः ।
तेषां दानानि दत्त्वा च बोधिचित्तं जनेन्ति ते ॥
मानस्तब्धेषु सत्त्वेषु महानग्ना[2] भवन्ति ते ।
सर्वमानसमुद्घातं बोधिं प्रार्थेन्ति उत्त[147 a]माम् ॥
भयार्दितानां सत्त्वानां संतिष्ठन्ते ऽग्रतः सदा ।
अभयं तेषु दत्त्वा च परिपाचेन्ति बोधये ॥
पञ्चाभिज्ञाश्च[3] ते भूत्वा ऋषयो ब्रह्मचारिणः ।
शीले सत्त्वान्नियोजेन्ति क्षान्तिसौरत्य[4]संयमे ॥
उपस्थानगुरून् सत्त्वान् पश्यन्तीह विशारदाः ।
चेटा भवन्ति दासा वा शिष्यत्वमुपयान्ति च ॥
येन येनैव चाङ्गेन सत्त्वो[5] धर्मरतो[5] भवेत् ।
दर्शेन्ति हि क्रियाः सर्वा महोपायसुशिक्षिताः ॥

1) Metre could be restored by reading °*āṅkuçena* ... *thāpenti*°. 'Sometimes the Bodbisattva appears as a Cyprian amongst libertines, attracts them to himself, and then slowly but surely leads them to see the pure wisdom of the Lord'. — Tokyo-translation.

2) The meaning of this word in Buddh. Skt. is 'athlete' as Böhtl.[2] shows. The Tib. appears to understand the expression as meaning 'possessed of the [32] *lakshaṇas*' (and thus fit to strip for athletics?). 'Invisible athlete'. Tokyo-tr.

3) Cf. supra, p. 322, n. 1.

4) Cf. Lal.-v. 29.9 and Divy. 39.12. 40.6, corrected by B[2] s. v. *sauratya*.

5) °*tvā* .. *tā* MS.



येषामनन्ता शिक्षा हि अनन्तश्चापि गोचरः ।
अनन्तज्ञानसंपन्ना अनन्तप्राणिमोचकाः ॥
न तेषां कल्पकोटीभिः कल्पकोटिशतैरपि ।
बुद्धैरपि वदद्भिस्तु गुणान्तः सुवचो भवेद्' इति ॥

यथार्यरत्नोल्काधारण्यां बोधिसत्त्वगुणा उक्तास्तथा भावयितव्याः ।

[1] रश्मि प्रमुञ्चिय माल्यवियूहा माल्यवतंसक माल्य वितानाः ।
माल्यविचिन्नविकीर्णसमन्ताः ते जिनपूज करोन्ति महात्मा ॥
रश्मि प्रमुञ्चिय चूर्णवियूहा चूर्णवतंसक चूर्णवितानाः ।
चूर्णविचित्रविकीर्ण समन्तान् ते जिनपूज करोन्ति महात्मा ॥
रश्मि प्रमुञ्चिय पद्मवियूहा पद्मवतंसक पद्मविताना ।
पद्मविचित्रविकीर्णसमन्तान् ते जिनपूज करोन्ति महात्मा ॥
रश्मि प्रमुञ्चिय हारवियूहा हारवतंसक हारविताना । [147 b]
हारविचित्रविकीर्णसमन्तान् ते जिनपूज करोन्ति महात्मा ॥
रश्मि प्रमुञ्चि ध्वजाग्रवियूहा ते ध्वज पाण्डुरलोहितपीताः ।
नीलमनेक पताक विचित्रा ॥
ध्वज समलंकरिते जिनक्षेत्राः ते मणिजालविचित्रवियूहा ।
पट्ट पताक प्र[ल][2]म्बित दामा किङ्किणिजाल जिनस्वरघोषान् ॥
छत्र धरेन्ति तथागतमूर्ध्ने ते यथ एकजिनस्य करोन्ति ।
पाणितलात्तु अचिन्तियपूजां एवमशेषतसर्वजिनानां ॥
एष समाधि विकुर्व[3] ऋषीणां ते जगसंग्रहज्ञानविकुर्वा ।
अप्रसमाध्यभिनिर्हरमाणाः सर्वक्रिया उपचार सुखेभिः ॥

1) Metre: Dodhaka with occasional resolution of the first dactyl.

2) ལྡྡངས 'hanging'.

3) Cf. 148. b. and Lal.-v. ap. Senart, Mhv. I. 426. 1.

सत्व विनेन्ति उपायसहस्रैः केचि तथागतपूजमुखेन ।
दान अचिन्ति अत्यागमुखेन सर्वधुतंगुणशीलमुखेन ॥
अक्षयक्षान्ति अक्षोभ्यमुखेन केचि व्रतं तपवीर्यमुखेन ।
ध्यान प्रशान्ति विहारमुखेन स्वर्थविनिश्चयप्रज्ञमुखेन ॥
5 सर्व उपाय सहस्रमुखेन ब्रह्मविहार अभिज्ञमुखेन ।
संग्रहवस्तु हितैषिमुखेन पुण्यसमुच्चय ज्ञानमुखेन ॥
सत्यप्रतीत्य विमोक्षमुखेन केचि बलेन्द्रियमार्गमुखेन ।
श्रावकयानविमुक्तिमुखेन प्रत्यययानविशुद्धिमुखेन ॥
उत्तमयानविकुर्वमु[148 a]खेन केचिदनित्यतदुःखमुखेन ।
10 केचि निरात्मनिर्जीवमुखेन अशुभत संज्ञिविरागमुखेन ॥
शान्तनिरोधसमाधिमुखेन यातुक[1] चर्यमुखा जगतीये ।
यातुक धर्ममुखाः प्रतिपन्नः[2] ते तु समन्तविमोक्षमुखेन ॥
सत्व विनेन्ति यथाशय लोके ये तु समन्तविमोक्षमुखेन ।
सत्व विनेन्ति यथाशय लोके तेष निमित्त न शक्य ग्रहीतुं ॥
15 केनचिदेष समाधिविकुर्वाः तेनतिव्यूहत अग्रसमाधीः ।
सर्वजगत्परिपाचनुलोमा सर्वरती सुखप्रीतिप्रहर्षाः ॥
चिन्तिय दर्शयि सर्व विनेन्ति यत्र दुर्भिक्ष सुदुर्लभ सर्वं ।
ये परिष्कार सुखावह लोके तत्र च सर्वभिप्रायक्रियाभिः ॥
दातु ददन्ति करोन्ति जगार्थम् ते वरभोजनपानरसाग्रैः ।
20 वस्त्रनिबन्धनरत्नविचित्रैः राज्यधनात्मप्रियैः परित्यागैः ॥

---

1) Pali *yattaka.*

2) °*ntīḥ* MS. Tib. རབ་ཞུགས་ཏེ 'entering the order' (?).



दानधिमुक्ति जगद्विनयन्ति ते वरलक्षणचित्रितगात्रा ।
उत्तम आभरणा वरघोराः माल्यविभूषितगन्धनुलिप्ता ॥
रूप विदर्शिय सत्व विनेन्ति दर्शन प्रीतिप्रहर्षरतानां ।
ते वररूपसुरूपसुमेधाः उत्तमरूप निदर्शयमानाः ॥
रूपधिमुक्ति जगद्विनयन्ति ते मधुरैः कलविङ्करुतेभी । 5
कोकिलहंसकुणाल[1]रवेण दुन्दुभिकिन्नरब्रह्मरुतेन देशयि सर्वधिमुक्तिषु धर्मम् ॥
ये चतुरेव अशीति सहस्रा येभि जिना जगतो ऽर्थ करोन्ति ।
तेभित[2] धर्मप्रभेदमुखेभिः सत्व विनेन्ति यथाशय लोके ॥
ते सुखदुःखसहाय करोन्ति अर्थअनर्थसहायक भो[148 b]न्ती ।
सर्वक्रियासु सहाय भवित्वा सत्व विनेन्ति सहायमुखेन ॥ 10
दुःखउपद्रवसत्कृतदोषान् ते तु सहन्ति सहायनिदानाम्[3] ।
तेभि सहाय सहन्तिय पीडां सर्वजगस्य हिताय सुखाय ॥
यत्र न निष्क्रम[4][णां] न च धर्मो ज्ञायति रण्यगतो[5] न च मोक्षः ।
तत्र तु राज्यसमृद्धिसहाय निष्क्रमशान्तमना अनिकेताः ॥

---

1) Transliterated not translated in the Tib. According to Foucaux on the similar passage in the Lal.-v. (Ch. 5.; tr., ed. 1. p. 53 n. 5) a Himalayan bird.

2) MS. *te dri(?)ta* altered to *tebhita*; perhaps for *te 'bhitaḥ*. Tib.: ཆོ་ཀྱི་བྱེ་བྲག་སྒོ་མོ་དེ་དག་གིས.

3) So the MS. a sec. man. The original reading was °*nān*. Tib. གྲོགས་ཀྱི་དོན་དུ so that one would construe: 'having aid as their object'.

4) Tib. here has སྔོན་བྱུང 'history', which must apparently be based on a different reading; just below *nishkrama* is rendered སྤངས་ཏེ 'renouncing'.

5) For *araṇya* Tib. དགོན.

ते गृहबन्धनतृष्णानिकेतात्सर्वजगत्परिमोचनहेतोः ।
सर्वत कामरती अनिकेता निष्क्रममोक्ष प्रभावयमानाः ॥
ते दश चर्य प्रभावयमाना आचरि धर्म महापुरुषाणां ।
सर्वमशेषत चर्य ऋषीणां भावयमान करोन्ति जगार्थम् ॥
[1]यत्रमितायुष सत्व भवन्ती सौख्यसमर्पितमन्दकिलेशाः ।
तत्र जरार्दित व्याधिनपृष्टा[2] दर्शयि मृत्युवशं अवशात्मा ॥
रागप्रदीपितु दोषप्रदीप्तं मोहमहाग्निप्रदीपितु लोकम् ।
प्रज्वलितं जरव्याधितमृत्यु लोक निदर्शयि सत्व विनेन्ति ॥
[3]दशबलैश्चतुर्वैशारद्यैरष्टदशैरपि धर्मविशेषैः ।
बुद्धमहात्म तु सूचयमानाः बुद्धगुणेभि करोन्ति जगार्थम् ॥
ते च [4]अदेश ऋद्ध्यनुशास्ती रूपधिष्ठानबलेन समन्तात् ।
दर्शयमान तथागत ऋद्धी ऋद्धिविकुर्वित सत्व विनेन्ति ॥
ते विविधेहि उपायनयेहि लोक[149a]विचारि करोन्ति जगार्थं ।
लोकि अलिप्त जले यथ पद्मं प्रीतिप्रसादकरा विचरन्ति ॥
काव्यकराः कविराज भवन्ती ते नटनर्तक झल्लकमल्लाः[5] ।
[6]उत्कुटशोभिकहारकनृत्या मायकराः पृथु रूपनिदर्शी ॥

---

1) *yatr' amit°* དཔག་མེད.

2) Sic MS. Tib. simply ནད་པ་ཅན ‘having a disease’.

3) The reading is substantially confirmed by the Tib. (199 b. 7); but the metre is not easily explained.

4) The metre again halts. The Tib. has དེ་དག་ཀུན་བརྗོད ‘they all declaring’...

5) Cf. 48. 12 supra and note. The Tib. here རོལ་མོ་མཁན confirms Kern's rendering ‘musicians’.

6) The first three *aksharas* are not clear. Tib. བཙུགས.



ग्रामिक नायक सार्थि भोन्ती सार्थिक श्रेष्ठिक गृहपति भोन्ति ।
राज अमात्य पुरोहित[1]दूता वैद्यविशारदशास्त्रविधिज्ञाः ॥
ते [2]अटवीषु महाद्रुम भोन्ती औषध अक्षयरत्ननिधानाः ।
चिन्त[2]मणि द्रुम कामददाश्च देशिक उत्पथमार्गगतानां ॥
[3]आर्चिय सन्तु तु लोक विदित्वा कर्मविधीषु अजानक सत्वाः ।
ते कृषिकर्मप्रयोगवणिज्या शिल्पविचित्र प्रभावयि लोके ॥
ये अविहेठ अहिंसप्रयोगः सर्वसुखावहविज्ञप्रशस्ताः ।
विद्यबलौषधि शास्त्रविचित्राः सर्व प्रभावित तेभि ऋषीभिः ॥
ये ऋषिणां चरणाः परमाग्रा यत्रधिमुक्त सदेवकु लोकः ।
ये व्रतदुष्कर ये तपश्रेष्ठाः सर्वि प्रभावित तेभि विदूभिः[4] ॥
ते [5]चरकाः परिव्राजक तीर्थ्याः ताप[6]सगोतममोनचराणाम् ।
नग्न अचेल[7]गुरुश्रमणानां तीर्थिक आ[8][चर्या]हि भवन्ति ॥

---

1) Royal chaplains are mentioned with *jhallamallāḥ* in Manu XII. 45–46. With *rāja ... dūtāḥ* cf. 48. 1.

2 ... 2) *te 'ṭa .. cintāmaṇi* contra metrum MS.

3) *acireṇa* marg., and so Tib. མི་རིང. 4) Mhv. II. 46. 5.

5) This important passage is partly traditional. It should be compared generally with Dīgha-n., sutta vii. and Rh. Davids's remarks thereon (tr. ['Dialogues'] p. 220 sq.) in which he cites the list of heretics in Aṅg.-n. [III. p. 276; cf. JRAS '98 p. 197]. The juxtaposition of heretics with low caste-men occurs also in Saddh.-P, Ch. xiii. init (= Kern, tr. p. 263), where the list begins as here and Lal.-v. 2. 20 with Carakas and Parivr. The verse-passage appended occurs above pp. 47—49. The Buddhists themselves were put into similar company by the Ājivakas (Sum.-vil. I. p. 162, tr. Hörnle, Uvāsaga-dasāo, App. II. p. 21). For further references to Jain literature see Additional Notes. The following five stanzas were published with a tentative translation in J R.A.S. 1901 pp. 122—27.

6) Cf. Aṅg-n. l. c. The school of Gautama are also referred to in a list of heretics at Mhv. III 412. 7; where they occur as in the Aṅguttara-list, soon after the Traidaṇḍikas. He is distinguished there from Bhagavān Gautama (Buddha) by the epithet *ānandika-guru-putraka*.

7) Goçālīputra Maskarin, the Ājivaka-leader.

8) These *aksharas* are not fully legible; but see *ācaryā hi* below (to be scanned of course *ācariyā*). The reading here appears to have been *ācaryāṇi*, but the Tib. here renders མུ་སྟེགས་ཅན་གྱི (tīrthikānām) སློབ་དཔོན་མཁས་པར་སྟོན། (200 b. 1).

ते तु अजीविक[1] धर्मचराणां उत्तरिकाणां[2] अनुत्तरिकाणां ।
[3]दीर्घजटान कुमारव्रतानां तेष[पि] आचर्या हि भवन्ति ॥
सूर्यनुवर्तकपञ्चतपानां[4] कुक्कुरगोव्रतिका[5] मृगचर्या[6] ।
[7]चारिक तीर्थ्य दश व्रितपानां तेषपि आचर्या हि भवन्ति ॥
5 देवतज्ञानप्रवेशरतानां तीर्थुपदर्शनदेशचराणां । [149b]
मूलफलाम्बुचरा अपि भूत्वा धर्म अचि[8]न्तिय ते परमाग्राः ॥
उत्कुट[9]स्थायिन एकचराणां कण्टक[9]भस्मतृणा[10]शशयनानां ।
ये मुषलेशय युक्ति[11]विहारी तेषपि आचर्या हि भवन्ति ॥
यावत बाहिरकाः[12] पृथुतीर्थ्या आशय तेषधिमुक्ति समीक्ष्य ।
10 तीक्ष्णदुरासदउग्रतपेभी तीर्थिक दुःखप्रहाणविनेन्ति ॥

---

1) Davids op. cit. p. 71 n. 1 collects the chief passages referring to this sect. *Ajīv*° for *ājīv*° is possibly a term of contempt. See Additional Notes.

2) उत्तरिका न अनुत्तारिकाणां MS.; but the Tib. takes the line as if consisting of two genitives, not *uttarikā na*. Lay and monastic adherents may be intended.

3) Perhaps equivalent to the Jaṭilakā in the Aṅg-n. Jaṭilas in Tib. (Feer, 'Fragments' AMG. V. 128—31) and in Pali. On this line see Add. Notes.

4) Manu VI. 23; Vishṇu § 95.2 Characteristic of the Ājīvakas, Jātaka I. p. 493.

5) These *vratas* are explained in Majjh-n., sutta 57. The latter is also thus defined in Mbh. V. xcix. 14: *yatra tatrāçayo nityaṃ yena kenacid āçitaḥ* | *yena kenacid ācchannaḥ sa* govrata *ihocyate* ||

6) Cf. Mbh. V. cxxi sub fin. The use of *ajina* by ascetics is also well known.

7) Tib. སྣེ་ཁུ not in Lexx.

8) As to *dharma ac*° see Additional Notes.

9 . . 9) Both these words represent Ājīvaka practices; Jāt. l. c. With the first Dr. Leumann compares Aupap. § 30, V. 2 (*ukkuḍuy' āsanie*).

10) Cf. Bhagavatī-sūtra, tr. Hörnle, Uvās., App. p. 8. 18 (*darbha*).

11) Or possibly *mukti*; a marginal gloss apparently on this word gives '*nimittaṃ*' 'contrivance'(?). Tib.: 'dwelling possessed of a bed (མལ་ཅན) of pestle-wood'.

12) 'outsiders' i. e. non-Buddhists; cf. Senart Mhv. I. 587.



दृष्टिसमाकुल लोके विदित्वा सत्त्वकुदृष्टिसमाश्रित तीर्थ्याः ।
सूक्ष्मपदेभिरुपायन येभी सत्यप्रकाशन तेषु करोन्ति ॥
केषुचि[1] द्रामिडमन्त्रपदेभी देशयि सत्य सुगुप्तपदेभिः ।
केषु उज॰॰व्यक्तपदेभिः केषुचिदेव रहस्यपदेभिः ॥
केषुचि अक्षरभेदपदेभिः अर्थविनिश्चयवज्र[2]पदेभिः । 5
वादिप्रमर्दनज्ञानपदेभिः शास्त्रअधर्मकमोक्षपदेभिः ॥
केषुचि मानुषमन्त्रपदेभिः सर्वप्रवेशनिरुक्तिपदेषु ।
केषुचि देवनिरुक्तिपदेभिः नागनिरुक्तित यक्षपदेभिः ॥
[3]राक्षसाथगन्धर्वपदेभिः भूतकु[4]म्भाण्डमहोरगकेभिः ।
किंनरअप्सरगरुडपदेभिः सत्यप्रकाशनमोक्षुपनेन्ति ॥ 10
ते यथसत्य निरुक्तिविधिज्ञा एवमशेषत ये जिनधर्मा ।
धर्ममचिन्तिय वाक्यपथज्ञा देश[150a]यि एष समाधिविकुर्वा ॥
ते जगसौख्यत अग्रसमाधी सर्वजगे अभिनिर्हरमाना ।
रश्मिमचिन्तियमु[5]त्सृजमाना रश्मि प्रमुञ्चिय सत्त्व विनेन्ति ॥
रश्मि प्रमुञ्चिय दर्शयमाना यावत सत्त्व विजानित रश्मि । 15
तेषु सुदर्शन भोति अमोघम् हेतु अनुत्तरि ज्ञानवरस्य ॥
दर्शयि बुद्ध विदर्शयि धर्म संघ निदर्शयि मार्ग नराणाम्[6] ।
दर्शयि चेतिक ते जिनबिम्बा तेन सुदर्शनरश्मि निवृत्ता[7] ॥

---

1) *ca* MS.; but see below. On charms from the Dravidian country, cf. Taran. tr. p. 222, where the Tib. equiv. (see note 3) is the same as here, Drāmiḍa being a by-form of Drāviḍa.

2) '*vajra*-secrets' Tib. One may perhaps compare the Vajrajāpakrama (Pañcak. § II) and V.-Poussin Bouddhisme p. 152 sqq.

3) This is unmetrical. The Tib. seems to suggest a reading *rākshasa* –⏑ *piçācapad*°.

4) So MS.; but qu. *kŭshmāṇḍa*?

5) *acityam* (?) MS.

6) Not rendered in Tib. and not quite clear in the MS.

7) So MS.; but Tib. གྲུབ་པར་འགྱུར 'becomes complete'.

रश्मि प्रमुञ्चि[1] प्रभंकर नामा या प्रभ ज्ञिह्म करोति मनूणां।
सर्वरजं च तमं च हनित्वा सो प्रभ भासति लोकहितानां॥
ताय प्रभासय चोदित सत्वास्ते जिनपूजप्रदीप धरेन्ती।
ते जिनपूजप्रदीप धरित्वा लोकप्रदीपकरा जिन भोन्ति॥
तैलप्रदीप घृतस्य प्रदीपा दारु तृणा नडवेणु प्रदीपान्।
गन्धरसायनरत्नप्रदीपान् दत्व जिनेषु प्रभंकर लब्धाः॥
रश्मि प्रमुञ्चि प्रतारणि नामा ताय प्रभासय चोदित सत्वाः।
* * * *[2] नावप्रतारणिनद्यपथेषु।
[3]दूषित संस्कृत वर्णित शान्ती तेन प्रतारणि रश्मि निवृत्ता॥
रश्मि पिपासविनोदनि नामा ताय प्रभासय चोदित सत्वाः।
कामगुणेषु तृषां प्रजहित्वा धर्मविमुक्तिरसार्थिक भोन्ति॥
[4][कामगुणेषु तृषां प्रजहित्वा] धर्मविमुक्तिरसार्थिक भूत्वा।
बुद्ध भवन्त्यमृतंजलवर्षी तृष्णापिपासविनोदन लोके॥
पुष्करिणी नदिकूपतडागा उत्सय कारित बोधिनिदानाः।
काम विवर्णित वर्णित[150b]ध्याना तृष्णविनोदनि तेन निवृत्ता॥
प्रीतिकरी यद रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्वाः[5]।
प्रीतिफुटा[6] वरबोधिनिदानं चित्त जनेन्ति भविष्य स्वयंभू॥

1) *pramuñciya* MS., but see below.

2) There is a lacuna here. The MS. originally continued with the line *kāmaguṇeshu*°. The passage *nāvapr*° . . . *satvāḥ* has been supplied in the margin in a later hand. But it is clear from the Tib. (201. b. 1, 2) that some 7 pādas are still wanting. The original omission was of course due to the eye of the copyist passing from one refrain (°*codita satvāḥ*) to another.

3) 'Things having the *saṃskāras* are disprized, the repose [of nirvāṇa] is extolled'.

4) Added from the Tib. to complete the line.

5) *satvān* MS., here only.

6) དཀའ་བས་རྒྱས་བྱེད་ 'expanding [like a snake's hood]'?



लक्षणमण्डित पद्मनिषण्णा यत्कृतविग्रह[1] कारुणिकानां।
भाषित बुद्धगुणाः सद कालं प्रीतिकरी प्रभ तेन निवृत्ता॥
रश्मि प्रमुञ्चि रतिंकर नामा[2] ताय प्रभासय बोधित[3] सत्वा।
बुद्धरतीरत धर्मरतीरत संघरतीरत ते सद भोन्ति॥
त्रितयरतीरत ते सद भूत्वा बुद्धसमागमधर्मगणार्ये।
लब्धनुपत्तिकक्षान्ति लभन्ति चोदित स्मारित ये बहु सत्वा॥
बुद्धअनुस्मृतिधर्मगणार्ये बोधि य चित्तगुणान्विवरित्वा।
तेन[4] रतिंकर रश्मि निवृत्ता॥
[5]पुण्यसमुच्चयरश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्वा।
दानु ददन्ति विचित्रमनेकं प्रार्थयमानु अनुत्तरु बोधिं॥
आशय पूरितु याचनकानां यज्ञ निरर्गड[6] तैर्यजमानैः।
सर्वभिप्रायत दानु ददित्वा पुण्यसमुच्चय रश्मि निवृत्ता॥
ज्ञानवती यद रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्वाः।
एक तु धर्म मुखान्तु[7] अनेका धर्ममुखानवबुद्धि क्षणेन॥

1) སྐུ་གཟུགས་ 'bodily shape'.

2) *nāṇā* MS.

3) So MS., the Tib. read *codita* as before.

4) This stanza or the previous one is metrically defective; but by the analogy of the previous verses, the present pāda must end a stanza.

5) *pañcas*° MS.; but see below. Tib. བསོད་ནམས (202. a. 2).

6) 'Unhindered' cf. *sārgaḍa*.

7) °*ntu anekān* MS. (*kān* a sec.). The Tib. appears to understand the passage 'Dharma [being] one is manifold by its approaches (སྒོ་མོ་ནས); *avabuddhi* app. for *avabudhyate* 'understands' ཁོང་དུ་ཆུད

धर्मप्रभेद[1]ग्राहित सत्वान् अर्थविनिश्चय ज्ञान विभक्तो । [151 a]
धर्मपदार्थविभाषण कृत्वा ज्ञानवतो प्रभ तेन निवृत्ता ॥
प्रज्ञप्रदीपय ओसरि रश्मि ताय प्रभासय चोदित सत्वाः ।
शून्य निसत्व[2] अज्ञातविपन्नान् ओतरि धर्म अभावस्वभावान् ।
5 मायमरीचिसमा [3]दकचन्द्रस्वप्नसमान् प्रतिबिम्बसमान् वा ।
धर्म अस्वामिक शून्य निरीहान् भाषति प्रज्ञप्रदीप निवृत्ता ॥
धर्मविकुर्वणि रश्मि प्रमुञ्ची ताय प्रभासय[4] चोदित सत्वा ।
धारणि अक्षयकोषु[5] लभित्वा सर्वतथागतकोषु लभेन्ति ॥
धर्मधराणु परिग्रह कृत्वा धार्मिकरक्ष करित्व ऋषीणां ।
10 धर्म अनुग्रह कृत्व जगस्य धर्मविकुर्वणि रश्मि निवृत्ता ॥
त्यागवती यद रश्मि विमुञ्चो ताय य मत्सर[6] चोदित सत्वा ।
ज्ञात्वा अनित्य अशाश्वतभोगान् त्यागरतीरत ते सद भोन्ति ॥
मत्सरदुर्दम सत्व अदान्ता ज्ञात्व धनं सुपिनाभ्रस्वभावं ।
बृंहित त्याग प्रसन्नमनेन त्यागवतीप्रभ तेन निवृत्ता ॥
15 निष्परिदाह य ओसरि रश्मिः ताय दु(ः)शीलय चोदित सत्वा ।
शीलविशुद्धि प्रतिष्ठित भूत्वा चित्त जनेन्ति भवेय स्वयंभूः ॥

1) MS. broken; a compound of *-grāhita* used actively with the meaning 'captivate, seduce'. Tib. འཛོ་ཏེ་བཙུད (202. a. 5).

2) For **niḥ-satva* བདག་མེད 'without self or substance'. The next words must be read *ajāt' avipanna* (*nnā*?).

3) *i. e. udakac°* ཆུ་ཟླ་

4) MS., here only, *°bhāya saṃco°*.

5) Apparently for *kosheshu*. Tib. མཛོད་ཀྱིས as if for *koshebhyas*. The next occurrence is, however, construed as an accusative.

6) *ka* MS.; but Tib. གང་དག = *ye*.



कर्मपथे कुशले परिशुद्धे शील समादपि यद्बहुसत्वान् ।
बोधयि चित्त समादपनेन रश्मि निवृत्त स निष्परिदाहः ॥ [151 b]
क्षान्तिविपूह य ओसरि रश्मि ताय य अक्षम चोदित सत्वाः ।
क्रोधखिलं[1] अधिमान जहित्वा क्षान्तिरतीरत ते सद भोन्ति ॥
दुःकृत क्षान्ति अपायमतीनां चित्त अक्षोभित बोधिनिदानं । 5
वर्णित क्षान्तिगुणाः सदकालं तेन निवृत्त स क्षान्तिविपूहा ॥
रश्मि उत्तप्तवती यद मुञ्ची ताय कुशीदय चोदित सत्वाः ।
युक्त प्रयुक्त त्रिषू रतनेषु पूज करोन्ति अखिन्नप्रयोगाः ॥
[2][युक्त प्रयुक्त त्रिषू रतनेषु पूज करित्व[3] अखिन्नप्रयोगाः] ।
ते चतु[4] मारपथा अतिक्रान्ताः क्षिप्र स्पृशन्ति अनुत्तर बोधिं ॥ 10
वीर्य समादपि यद्बहुसत्वान् पूज करित्व त्रिषू रतनेषु ।
धर्म धरित्व क्षयंगत काले तेन उत्तप्तवती प्रभ लब्धा ॥
शान्तिकरी यद रश्मि प्रमुञ्ची ताय विभ्रान्तय चोदित सत्वाः ।
तेषु न रागु न द्वेष न मोहाः बोधित भोन्ति समाहित चित्ताः ॥
पाप कुमित्र किलिष्ट चरीये संगणिकाविनिवर्तन कृत्वा । 15
वर्णित ध्यान प्रशान्त अरण्ये शान्तिकरी प्रभ तेन निवृत्ता ॥
प्रज्ञविपूह य ओसरि रश्मी ताय दुःप्रज्ञ[5] संचोदित सत्वाः ।
सत्यप्रतीत्य विमोक्षनयेऽस्मिन्निन्द्रिय ज्ञानगतिं गत भोन्ति ॥

1) ཐ་བ i. e. *akhila*.. For the scansion, cf. 260. n. 2.

2) Supplied from the Tib. (202. b. 7).

3) བྱས་ནས, as contrasted with བྱེད་པར་འགྱུར, the equivalent of *karonti* in the last line.

4) *°tur* MS. contra metrum.

5) The *anusvāra* is written in the MS., but must be, like the *visarga* just before, disregarded in the scansion.

इन्द्रियज्ञानगतिं गत भूत्वा[1] * * * * * ।

[2]सूर्यप्रदीपसमाधि लभित्वा प्रज्ञप्रभास[152 a]करा जिन भोन्ति ॥

राज्यधनात्मप्रियैः परित्यागैः धर्म य मार्गित बोधिनिदानं ।

तं च स[3]त्कृत्य प्रकाशिय धर्मं रश्मि निवृत्त स प्रज्ञवियूहाः ॥

बुद्धवती यद रश्मि प्रमुञ्ची ताय प्रभाय सं[4]चोदित सत्वाः ।

बुद्ध सहस्र अनेक अचिन्त्यान् पश्यिषु पद्मवनेषु निषण्णान् ॥

बुद्धमहात्मत बुद्धविमोक्षा भासित बुद्धविकुर्व अनन्ता ।

बुद्धबलावि[5]प्रभावन कृत्वा बुद्धवती प्रभ तेन निवृत्ता ॥ ॥

ते [6]ऽभयंदद रश्मि प्रमुञ्चो ताय ऽभयार्दित सत्व सस्पृष्टाः ।

भूतग्रहाव[7]धताडनबन्धे मुच्यिषु सर्वुपसर्गभयेभ्यः ॥

ये अभयेन निमन्त्रित सत्वाः प्राणिवधात्तु निवारित भोन्ति ।

त्रायित यच्छरणागत भीतास्तेन भयंदद रश्मि निवृत्ता ॥

सर्वसुखावह ओसरि रश्मी ताय गिलानय आतुर स्पृष्टाः ।

सर्वत व्याधिदुखात्प्रतिमुक्ता ध्यानसमाधिसुखानि लभन्ति ॥

रोगविनोदनि मूल फलोषध रत्न रसायन गन्धनुलेपान् ।

फाणित क्षीर मधू घृत तैलान् भोजन पान ददित्विय लब्धा ॥

1) This pāda is not represented in the Tib.; and neither authority gives a hint as to the missing pāda. 2) M. Vyutp. § 21. 47.

3) *sătkṛ°* seems an extraordinary short syllable; but in view of the Tib. གུས་པར་བྱས་ནས་ correction is unjustifiable.

4) See note above and *sa[ṃ]sprishṭāḥ* below.

5) If we retain the reading of the MS., we must take *āvi* as = *āviṣkṛtvā*; but the Tib. (203 a 7) སྟོབས་དང་རྫུ་འཕྲུལ་ makes a correction to *balarddhi* (*dh* and *v* are often confused in this MS.) all but certain.

6) Sic MS.; *ten'* [*tena samayena*] *abhayaṃda°*?

7) གསང Tib. 'hiding'; as from *ava-dhā*.



बुद्धनिदर्शनि रश्मि प्रमुञ्ची ताय [1]संचोदित आयु क्षयान्ते ।

बुद्ध अनुस्मरि पश्यिषु बुद्धम् ते च्युत गच्छि सबुद्धक्षे[2]त्रं ॥

काल करोन्ति च स्मारित बुद्धा दर्शितप्रीतकरा [152 b] जिनबिम्बान् ।

बुद्धगताः शरणं मरणान्ते [3]भासिय बुद्धनिदर्शनि लब्धा ॥

धर्मप्रभावनि रश्मि प्रमुञ्ची ताय प्रभाय संचोदित सत्वा ।

धर्म पठन्ति शृणवन्ति लिखन्ती धर्मरती रत ते सद भोन्ति ॥

धर्मदुर्भिक्षय द्योतितु धर्मो धर्मगवेषिण पूरित आशा ।

छन्द जनित्व प्रयुज्यथ धर्मे भा[4]षत धर्मप्रभावनि लब्धा ॥

घोषवती यद रश्मि प्रमुञ्ची बुद्धसुता परिचोदनतायां ।

यावतक शब्दप्रचारु त्रिलोके सर्व तथागतघोष शृणवन्ति ॥

उच्च स्वरेण स्तवन्ति महर्षीन् तूर्यमहत्तरघण्टप्रदानैः ।

सर्वजगे जिनघोषरुतार्थं नि[5]श्चरि घोषवती प्रभलब्धा ॥

ते [6]ऽमृतंदद रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्वाः ।

सर्व प्रमाद चिरं प्रजहित्वा सर्वगुणैः प्रतिपद्यति योगं ॥

दुःख अनेक उपद्रवपूर्णा भाषित संस्कृत नि[7]त्यमक्षेमं ।

शान्तिनिरोधसुखं सद क्षेमं भाषयता अमृतंदद लब्धा ॥

रश्मि विशेषवती यद मुञ्ची ताय प्रभासय चोदित सत्वाः ।

शीलविशेष समाधिविशेषं प्रज्ञविशेष शृणोन्ति जिनानां ॥

1) Here the MS. reads *saṁco°*. Above (338.9) where a short syllable is equally required the reading is *sa-spṛshṭāḥ*.

2) This letter is uncertain.

3) *ayam arthas tair darçitaḥ pūrvaṃ* marg.

4) i. e. *bhāshātaḥ* བརྗོད་པས

5) The Tib. རབ་ཏུ་བསྒྲགས 6) Cf. 338 n. 6 supra.

7) *sada 'kshemaṃ saṃskṛta* marg.: i. e. 'things compounded are described as ever unstable'.

शीलत अग्र समाधित अग्रो[1] प्रज्ञत अग्र महामुनिराजा । [153 a]
य स्तुत वर्णित बोधिनिदानं तेन विशेषवती प्रभ लब्धा ॥
रत्नवियूहु य ओसरि रश्मि ताय प्रभासय चोदित सत्वाः ।
अक्षर रत्ननिधान लभित्वा पूजयि रत्नवरेभि महर्षीन् ॥
रत्नविसर्ग जिने जिनस्तूपे संग्रहि कृत्स्नजनं रतनेभिः ।
रत्नप्रदान करित्व जिनानां रश्मि निवृत्त य रत्नवियूहाः[2] ॥
गन्धप्रभास य ओसरि रश्मी ताय प्रभासय चोदित सत्वाः ।
घ्रात्व अमानुष गन्ध मनोज्ञान् बुद्धगुणे निपुतानि भवन्ति ॥
गन्धनुलेपनुमानुषदिव्यैर्यत्कृत पूज नराधिपतीनां ।
गन्धमयान् जिनविग्रहस्तूपान् कृत्व निवृत्त सुगन्धप्रभासः ॥
मुञ्चति रश्मि विचित्रवियूहान् इन्द्रपताकध्वजाग्र विचित्रान् ।
तूर्यनिनादितगन्धप्रधूपित शोभिसुरोत्तमपुष्पविकीर्णा ॥
तूर्यप्रत्युद्गमि पूजजिनानां पुष्पविलेपनधूपनचूर्णैः ।
छत्रध्वजाग्रपताकवितानैस्तेन विचित्रवियूह निवृत्ताः ॥
रश्मि प्रसादकरी यद मुञ्ची पाणितलोपम संस्थिहि भूमिः ।
शोधयती[3] ऋषि आश्रमस्तूपान् तेन प्रसादकरी प्रभ लब्धा ॥
मुञ्चति मेघवती यद रश्मिं संस्थिहि गन्ध प्रवर्षति मेघं ।
स्तूप वराङ्गणगन्धजलेनासिञ्चिय [153 b] मेघवती प्रभ लब्धा ॥
भूषणव्यूह प्रमुञ्चतु रश्मीन्नग्न अचेल सभूषण भोन्ती ।
वस्त्रनिबन्धनहारविचित्रं दत्व विभूषण रश्मि निवृत्ता ॥

1) *agrā* MS.

2) *nirvr°* . . . *raśmivi°* MS.

3) *gandhajalena snapayitvā* says the marginal glossator, referring to a practice still in vogue among Buddhist pilgrims (Cunningham, Mahābodhi, p. 30).



रश्मि रसाग्रवती यद मुञ्ची भुक्षित भोज्य रसाग्र लभन्ती ।
भोजन पान विचित्र रसाग्रान् दत्व रसाग्रवती प्रभ लब्धा ॥
अर्थनिदर्शनि मुञ्चति रश्मीन् रत्ननिधान लभन्ति दरिद्राः ।
अक्षयरत्ननिधिं त्रिभि रत्नैर्दानत अर्थनिदर्शनि लब्धा ॥
चक्षुविशोधनि मुञ्चति रश्मीन् अन्ध तदा दृशि रूप विचित्रम् ।
दीपप्रदान जिने जिनस्तूपे चक्षुविशोधनि रश्मि निवृत्ता ॥
श्रोत्रविशोधनि मुञ्चति रश्मीन् श्रोत्रविहीन शृणी पृथुशब्दान् ।
वाद्यप्रदानजिने जिनस्तूपे श्रोत्रविशोधनि रश्मि निवृत्ता ॥
घ्राणविशोधनि मुञ्चति रश्मीन् घ्रापि अघ्रापितपूर्व सुगन्धान् ।
गन्धप्रदान जिने जिनस्तूपे घ्राणविशोधनि रश्मि निवृत्ता ॥
जिह्वविशोधनि मुञ्चति रश्मीन् स्निग्धमनोज्ञरुतै स्तुति[1] बुद्धान् ।
वाच दुरुक्त विवर्जित रुक्षा श्लक्ष्ण उदीरित रश्मि निवृत्ता ॥
कायविशोधनि मुञ्चति रश्मीन् इन्द्रियहीन सुइन्द्रिय भोन्ति ।
कायप्रणाम जिने जिनस्तूपे कुर्वत कायविशोधनि लब्धा ॥
चित्त[154 a]विशोधनि मुञ्चति रश्मीन् उन्मतु[2] सर्व सचित्त भवन्ति ।
चित्त समाधिवशानुग कृत्वा चित्तविशोधनि रश्मि निवृत्ता ॥
रूपविशोधनि मुञ्चति रश्मीन् पश्यिय चिन्तिय रूपनरेन्द्रान् ।
रूपकशोधनि चित्रसमन्तात् स्तूप अलंकरता प्रतिलब्धा ॥
शब्दविशोधनि मुञ्चति रश्मीन् शब्द अशब्दत शून्य विजानी ।
प्रत्यय जात प्रतिश्रुततुल्यं शब्दप्रकाशन रश्मि निवृत्ता ॥
गन्धविशोधनि मुञ्चति रश्मीन् सर्व दुर्गन्ध[3] सुगन्ध भवन्ती ।
गन्धवराग्र जलैर्जिनस्तूपान् स्नापनबोधिद्रुम प्रभ एषा ॥

1) *stauti* contra metr. MS. 2) *unmatta* or *unmatu* MS.
3) *durgr°* MS.? read *dugr.*, metathesis metri gratia.

ते रसशोधनि मुञ्चति रश्मीन् सद्विष निर्विष भोन्ति रसाग्राः ।
बुद्ध सश्रावकमातृपितॄणां सर्वरसाग्रप्रदान प्रभेषां ॥
स्पर्शविशोधनि मुञ्चति रश्मीन् कक्खट[1] स्पर्श मृदू सुख भोन्ती ।
शक्तित्रिशूल[2]सितोमरवर्षा माल्य मृदू पद्मोत्पल भोन्ती ॥
दुष्य अनेक मृदू सुखस्पर्शा संस्तरि मार्गि व्रजन्ति जिनानां । [154b]
पुष्पविलेपनचीवरसूक्ष्मा माल्यवितान प्रदान प्रभेयम् ॥
धर्मविशो[ध]नि मुञ्चति रश्मीन् सर्वत रोमत चिन्तिय धर्मान् ।
निश्चरतः[3] श्रुणि लोकहितानां तोषयि सर्वधिमुक्तिजिनानाम् ॥
प्रत्यय जात अजात स्वभावा धर्मशरीर अजातशरीराः ।
धर्मत नित्यस्थिता गगनस्था सूचत[4] धर्मविशोधनि लब्धा ॥
रश्मि सुखाप्रमुखा इति कृत्वा एकतु रोममुखात्तु ऋषीणां ।
निश्चरि गङ्गरजोपम रश्मी सर्वपृथग्विधकर्मप्रयोगाः ॥
ते यथ एकत रोममुखातो ओसरि[5] गङ्गरजोपम रश्मी ।
एवमशेषत सर्वतु रोमा देश समाधिविकुर्व ऋषीणां ॥
येन गुणेन य रश्मि निवृत्ता तस्मि गुणेषु सहायक पूर्वे ।
तेषु तमेव प्रमुञ्चति रश्मिं ज्ञानविकुर्वण एष ऋषीणां ॥
तेष य पुण्य सहायक पूर्वे यैरनुमोदित याचित येभिः ।
येभि च दृष्ट शुभोपचितं वा ते इम रश्मि प्रजानति तेषां ॥
ये च शुभोपचिताः कृतपुण्याः पूजित येभि पुनः पुन बुद्धाः ।
अर्थिक छन्दिक बुद्धगुणेभिः चोदन तेष करोतियि[6] रश्मिः ॥

1) MS. here *khakkh°*; see 245, n. 2.
2) *°çūl'-asi*. A half-daṇḍa in the MS. intended as a hyphen has been altered into *ā*.
3) The equiv. of this appears to be འབྱུང་བ 'originating'.
4) *sūcayanti dharmatām* marg. 5) *niḥsaranti* marg.
6) For *°ty aya(ṃ)*. Tib. as if *°nt' ime raçmayaḥ*.



सूर्य यथा जात्यन्ध न पश्यी नो च स नास्ति उदेति स लोके ।
चक्षुसमेत उदागमु ज्ञात्वा सर्व प्रयुज्य[1] [155a] स्वक स्वक धर्मे ॥
[2]एवत रश्मि महापुरुषाणां अस्ति च ते इतरे च न पश्यी ।
मिथ्यहता अधिमुक्तिविहीनाः दुर्लभ ते च उदारमतीनां ॥
आभरणानि निपान विमानाः रत्न रसायन गन्धनुलेपाः ।
ते पि तु अस्ति महात्मजनस्य ते च सुदुर्लभ कृच्छ्रगतानां ॥
एवत रश्मि महापुरुषाणां अस्ति च ते इतरे च न पश्यी ।
मिथ्यहता अधिमुक्तिविहीनाः दुर्लभ ते च उदारमतीनां ॥
यस्यिमु रश्मिप्रभेद श्रुणित्वा भेष्यति अद्दधिमुक्ति प्रसादः ।
तेन न काङ्क्ष न संशय कार्या नाङ्ग न भेष्यि महागुणकेतुः ॥
ते परिवारविपूहविकुर्वा अप्रसमाध्यभिनिर्हरमाणाः ।
सर्वदशाद्दिशि[3] अप्रतिमानाः दर्शयि बुद्धसुताः परिवारं ॥
ते त्रिसहस्र[4]प्रमाणुविचित्रं पद्ममधिष्ठिहि रश्मिविपूहाः ।
कायपर्यङ्क परिस्फुटपद्मं दर्शयि एष समाधिविकुर्वा ॥
ते दशक्षेत्ररजोपम अन्ये पद्ममधिष्ठिहि संपरिवारं ।
सर्व परीवृत बुद्धसुतेभी ये च समाध्यसमाधिविहारी ॥
ये परिपाचित तेन ऋषीणां सत्व निष्पादित बुद्धगुणेषु ।
ते परिवारि अतं महपद्मं सर्व उदि[5]क्षिषु प्राञ्जलिभूताः ॥

1) Correction in MS. perhaps meant for *°yuñji*.
2) MS. *eshata* here and *evata* in the similar passage below. Tib. དེ་བཞིན in both places, whence I have supposed the form to be connected with *evaṃ*, though Ap. Pkt *evaḍu* represents *iyat* (Hem. VIII. iv. 408). 3) cf. 259 n. 5.
4) *trisahasrapramāṇapadme paryaṅkaṃ darçayanti buddhā ṛddhyā* marg.
5) *mahāpadmaṃ* MS. *udi° = uddikshu* 'celestial regions' ཕྱོ་ཞེང (206. a. 6).
No break after this verse occurs in the MS., but the Tib. here adds a long passage, resuming the text as we have it at 207. b. 3.

ते च समाहित बाल[1]शरीरे व्युत्थि[155 b]हि यौवनवेगस्थितेभ्यः ॥
यौवनवेगस्थितेषु समाहित [2]व्युत्थिहि जीर्णक वृद्ध शरीराः ।
जीर्णकवृद्धशरीरि समाहित व्युत्थिहि श्रद्ध उपासिककायात् ॥
श्रद्ध उपासिककायसमाहित व्युत्थिहि भिक्षुणिकायशरीरा ।
5 भिक्षुणिकाय शरीरि समाहित व्युत्थिहि भिक्षुबहुश्रुतकायाः ॥
भिक्षुबहुश्रुतकाय समाहित व्युत्थिहि शैक्ष अशैक्षशरीराः ।
शैक्ष अशैक्षशरीरि समाहित व्युत्थिहि प्रत्यय[3]बुद्धशरीरा ॥
प्रत्यय बुद्ध शरीरि समाहित व्युत्थिहि बुद्धवराग्रशरीरा ।
बुद्धवराग्रशरीरि समाहित व्युत्थिहि देवतक[ा]य शरीरा ॥
10 देवतकायशरीरि समाहित व्युत्थिहि नागमहर्द्धिककायाः ।
नागमहर्द्धिककायसमाहित व्युत्थिहि यक्षमहर्द्धिककायाः ॥
यक्षमहर्द्धिककायसमाहित व्युत्थिहि सर्वतभूतशरीराः ।
सर्वतभूतशरीरि समाहित व्युत्थिहि एकतुरोममुखातः ॥
[4]एकतु रोममुखस्मि समाहित व्युत्थि[5]हि सर्वत रोममुखे[6]षु ।
15 सर्विषु रोममुखेषु समाहित व्युत्थिहि एकतु वाल[7]पथातः ॥
एकतु वालपथस्मि समाहित व्युत्थिहि सर्वत वालपथेभ्यः ।
सर्विषु वालपथेषु समाहित व्युत्थिहि ते परमाणुरजातः ॥
एकरजस्मि समाहित भूत्वा व्युत्थिहि सर्वरजेभ्य अशेषम् ।
सर्वरजेषु समाहित भूत्वा व्युत्थिहि सागरवज्रतलातः ॥

1) Marginal note (partly broken off): *Buddhāḥ te bālye samādhiṃ samāpannāḥ yauvane.*
2) *samādheḥ sakāçād uttishṭhanti* marg.
3) *pratyeka* marg.
4) *ekaromṇi līnāḥ santaḥ spharanti tu,* marg.
5) *eki tu* (here only) MS.
6) Cf. 295. 5 supra
7) °*shuḥ* MS.



सागरवज्रतलस्मि समाहित [156 a] व्युत्थिहि ते मणिवृक्षफलेभ्यः ।
वृक्षफलेषु समाहित भूत्वा व्युत्थिहि रश्मि[1]मुखेभि जिनानां ॥
रश्मिमुखेषु जिनान समाहित व्युत्थिहि सागरतोयनदीभ्यः ।
सागरतोयनदीषु समाहित व्युत्थिहि तेजपथातु महात्मा ॥
तेजपथस्मि समाहित भूत्वा व्युत्थिहि वायुपथानुस्मृतीमान् । 5
वायुपथे तु समाहित भूत्वा व्युत्थिहि भूमितलातु महात्मा ॥
भूमितले तु समाहित भूत्वा व्युत्थिहि सर्वतु देवविमानात् ।
सर्वि तु देवब[2]लान समाहित व्युत्थिहि ते गगनानुस्मृतीमान् ॥
[3]इति समाधि विमोक्ष अचिन्त्यास्तेष अचिन्त्यगुणोपचितानाम् ।
कल्प अचिन्त्य प्रभाषियमाणाः सर्वजिनेभि न शक्य क्षपीतुम् ॥ 10
सर्वजिनेभि च भाषित एते कर्मविपाकु जगस्य अचिन्त्यो ।
नागविकुर्वित बुद्धविकुर्वा ध्यायिन ध्यान अचिन्त्य विकुर्वा ॥
ते च वशे स्थित अष्ट [4]विमोक्षाः श्रावक एक भवीबहु भोन्ती ।
भूत्व बहुः पुन एक भवित्वा ध्यायति प्रज्वलते गगनस्मि[5]न् ॥
ते हि महाकरुणाय विहीना बोधि अनर्थिकु लोक उपेक्षी । 15
दर्शयि कायविकुर्व अचिन्त्या कस्य न दर्शयि लोक हितैषी ॥
चन्द्र स सूर्य नभे विचरन्तौ दर्शयि सर्वदिशि प्रतिभासं ।
[6]उत्समरोह्रदकूपतडा[156 b]गे भाजनरत्नसमुद्रनदीषु ॥

1) Compare the rays from the face and head of Amitābha in Buddhist art.
2) Tib. implies *sarvatu . . vimāna* u tsupra.
3) *ete* (°*tē*) marg.
4) Dh.-saṅgr. § 59.
5) °*nesmin* MS.
6) *kutra kutrety āha* marg.

एवमचिन्तिय दर्शिथि रूपं सर्वदशद्दिशि ते नरवीराः।
सर्वसमाधिविमोक्षविधिज्ञा यत्र तथागत सान्ति स्वयंभूः[1]॥
सागरदेव रुताव्रतिनामा यावत्सत्व समुद्युत्पन्ना।
तेषु स्वराङ्गरुतेषु विधिज्ञा तोषयि सर्वरुतान् स्वरुतेन॥
5 सा हि सराग सदोष रुतावति सर्वरुते प्रतिघोष विधिज्ञा।
धारणिधर्मबलं वशिप्राप्ता कः स न तोषि सदेवकलोकम्॥
मायकरो यथ विद्यविधिज्ञो दर्शयि रूप विचित्र अनन्तान्।
रात्रिदिवैकमुहूर्ततु[2][c] मासान् वर्षशतं पुन स्फीतप्रदीप्तान्॥
मायकरो हि सरागु सदोषो तोषयि मायविकुर्वित लोकं।
10 ध्यान अभिज्ञ विमोक्षसुशिक्षित कस्य न तोषयि चर्यविधिज्ञः॥
शक्र यथे[3][ष] य निर्मणि कांय कुर्वति वज्र पदे तलबन्धं।
दर्शन सागरु नाभिप्रमाणं भोति सुमेरुतले सम शीर्षः॥
सोऽपि सरागु सदोष समोहो शक्र निदर्शयि ईदृश ऋद्धी।
मारप्रमर्दन लोकप्रदीप कस्य न दर्शयि ऋद्धि अनन्ता॥
15 पश्य[4] अचिन्तिय [शक्रवि][5]कुर्वा देवसुरे[6]न्द्ररणास्मि प्रवृत्ते।
यातुक बिम्ब[7]रनेकसुराणां तातुक निर्मणि शक्र [157 a] स्वकायान्॥

1) From this point to the end of the chapter, a considerable number of verses not found in the Sanskrit are reproduced or added in the Tib.

2) i. e. *muhūrtam ekam.*

3) Syllable obliterated. Tib. འདོད་པ་བཞིན ‘according to desire’. *nirmaṇi* is glossed in marg. as *nirmiṇoti.*

4) *yasya* MS.: but Tib. ལྷས

5) Letters mostly destroyed. Tib. བརྒྱ་བྱིན་རྣམ་འཕྲུལ

6) °*raasu*° MS., अ being added in the margin to indicate that we must understand an elision (*dev’ asur*°).

7) The reading of the MS. looks more like *biṃdhar*’; but I have replaced the present form (cf. 157 n. 1) from the Tib. which has (209. b. 6): ལྷ་མིན་བྱེ་བ «milliards of Asuras».



सर्वसुरेन्द्रसुराश्च विज्ञानी श[1]क्रम ‑ पुरतो गत स्वायुम्।
एष गृह्णेत[1] वज्रधराणां संभ्रमु गच्छिमु सर्वसुरेन्द्राः॥
नेत्र सहस्र भयङ्कर दर्शी ज्वालप्रमुञ्चन वज्र गृहीतं।
वर्मित काय दुरासद तेन शक्रमुदीक्ष्य पला[2]तु सुरेन्द्राः॥
5 सो हित इत्व[3]रपुण्यबलेना शक्र विकुर्वति देवगणार्थी।
सर्वजगस्य अशेषत त्राणां अनन्तपुण्य कुतो न विकुर्वी[4]॥
******************************
वायुत संभुत मेघप्रवर्षो वायुत मेघ पुनः प्रसमेत्ती।
वायुत सस्य विरोहति लोके वायु सुखावह सर्वजगस्य॥
10 सो हि अशिक्षित पारमितासु बुद्धगुणेषु अशिक्षित वायुः।
दर्शयि लोकविपाक अचिन्त्या कस्य न दर्शयि ते वरलब्धा॥

इति शिक्षासमुच्चये रत्नत्रयानुस्मृतिनामाष्टादशः परिच्छेदः समाप्तः॥

1 . . . 1) Syllables obliterated. *ya krama* + *pur*° MS. Tib.: བརྒྱ་བྱིན་ (*Çakra*) རང་རང་མདུན་དུ་འདུག་པར (as if for *svaāyalana?*) ཀྱིས། དེ་ནི་རྡོ་རྗེ་འཆང་བས་བཟུང་ངོ་ཞེས (supply *’ti* after *gṛhyeta?*)།

2) *palātu* = *palā*(yi)*tāḥ*.

3) ཕལ་པ ‘ordinary, moderate’ a meaning which fits with the context in the two other passages (Divy., Mhv.) where *itvara* occurs.

4) The Tib. here reproduces a considerable passage (210. a. 2 — 211. a. 3), continuing chiefly the same topic (Çakra and the Asuras).

# XIX.

## नवदशः परिच्छेदः

अन्योऽपि पुण्यवृद्धये हेतुः कार्यः। यो ऽयं सर्वावस्थासु सत्त्वार्थः ॥

यथा कथितं चार्यरत्नमेघे[1] स तथागतचैत्ये वा तथागतविग्रहे वा पुष्पं वा धूपं वा गन्धं
5 वा ददत्सर्वसत्त्वानां दौःशील्यदौर्गन्ध्यमलापनयनाय तथागतशीलप्रतिलम्भाय च परिणाम-
यति। स सम्मार्जनोपलेपनं कु[157b]र्वन् सर्वसत्त्वानामप्रासादिकेर्यापथविगमाय प्रासादिके-
र्यापथसंपदे च परिणामयति। स पुष्पच्छत्रमारोपयन् सर्वसत्त्वानां सर्वक्लेशपरिदाहविगमाय
परिणामयति। स विहारं प्रविशन्नेवं चित्तमुत्पादयति ' सर्वसत्त्वान् निर्वाणपुरं[2] प्रवेशयेयं। स
निष्क्रमन्नेवं चित्तमुत्पादयति ' सर्वसत्त्वान्संसारचारकान्निष्क्रामयेयं। स लयनद्वारमुद्घाटय-
10 न्नेवं चित्तमुत्पादयति ' सर्वसत्त्वानां लोकोत्तरेण ज्ञानेन निर्वाणसुगतिद्वारमुद्घाटयेयं। स
पिथदेवं[3] चित्तमुत्पादयति ' सर्वसत्त्वानां सर्वापायद्वाराणि पिदध्यां। स निषीदन्नेवं चित्तमु-
त्पादयति। सर्वसत्त्वान्बोधिमण्डे निषादयेयं। स दक्षिणेन पार्श्वेन शय्यां कल्पयन्नेवं चित्तमु-
त्पादयति ' सर्वसत्त्वानेव परिनिर्वापयेयं। स ततो व्युत्तिष्ठन्नेवं चित्तमुत्पादयति ' सर्व-
सत्त्वान् व्युत्थापयेयं सर्वक्लेशपर्युत्थानेभ्यः। स शरीरगत्या गच्छन्नेवं चित्तमुत्पादयति ' स-
15 र्वसत्त्वा महापुरुषगत्या गच्छन्तु। स तत्रोपविष्ट एवं चित्तमुत्पादयति ' सर्वसत्त्वा निःश-
ल्यक्रिया[4] यदुत रागद्वेषमोहेभ्यः। स शौचं कुर्वन्नेवं चित्तमु[158a]त्पादयति ' सर्वसत्त्वानां
क्लेशमलात्प्रक्षालयेयं। स हस्तौ प्रक्षालयन्नेवं चित्तमुत्पादयति ' सर्वसत्त्वानां सर्वक्लेश-

1) Cf. Minaev, Recherches p. 108. With the foregoing line cf. 350. n. 1.
2) Cf. 3. 1 supra.
3) For *pidadhat*; cf. *pidhitvā* (Mhv.) and *pithita* (ibid. & Lal.-v.).
4) Sic MS. °*tvānām* °*kriyā bhavatu*?



वासनामपनयेयं। स पादौ प्रक्षालयन्नेवं[1] चित्तमुत्पादयति सर्वसत्त्वानामनेकप्रकाराणि
क्लेशर[ज]ांस्यपनयेयं। मुखं प्रक्षालयन्नेवं चित्तमुत्पादयति ' सर्वसत्त्वानां सर्वधर्ममुखानि
परिशोधयेयं। स दन्तकाष्ठं भक्षयन्नेवं चित्तमुत्पादयति ' सर्वसत्त्वानां नानाविधान् क्लेशम-
लानपनयेयं। सर्वां कायावस्थां सर्वसत्त्वहितसुखाय परिणामयति। तथागतचैत्यं वन्दमान
एवं चित्तमुत्पादयति ' सर्वसत्त्वा वन्दनीया भवन्तु सदेवकस्य लोकस्येति ॥ 5

अथवा यथार्यप्रज्ञापारमितायां। पुनरपरं शारिपुत्र व्याडकान्तारमध्यगतेन बोधिस-
त्त्वेन महासत्त्वेन नोत्त्रसितव्यं न संत्रसितव्यम् न संत्रासमापत्तव्यम्। तत्कस्माद्धेतोः।
तथा हि तेन सर्वं परित्यक्तं सर्वसत्त्वानामर्थाय। तेनैवं चित्तमुत्पादयितव्यम्। सचेन्मां
व्याडा भक्षयेयुस्तेभ्य एव तद्दानं दत्तं भवतु। मम च दानपारमितापरिपूरिर्भविष्यति।
अभ्यासन्ना च भविष्यति। तथा च करिष्यामि यथा मे ऽनुत्तरां सम्यक्संबो[158b]धिमभि- 10
सम्बुद्धस्य सतस्तत्र बुद्धक्षेत्रे तिर्यग्योनिगताः सत्त्वाः सर्वेण[2] सर्वं न भविष्यन्ति न प्रज्ञा-
स्यन्ते ॥ चोरकान्तारमध्यगतेन शारिपुत्र बोधिसत्त्वेन महासत्त्वेन नोत्त्रसितव्यं न संत्रसि-
तव्यं न संत्रासमापत्तव्यं। तत्कस्माद्धेतोः। सर्वस्वपरित्यागकुशला हि ते बोधिसत्त्वा
महासत्त्वा उत्सृष्टकायेनापि च बोधिसत्त्वेन भवितव्यं परित्यक्तपरिष्कारोपकरणेन च।
तेनैवं चित्तमुत्पादयितव्यं ' ते चेन्मे सत्त्वाः परिष्कारोपकरणानि हरन्ति तेभ्य एवैतद्दानं 15
दत्तं भवतु। सचेन्मां केचिज्जीविताद्व्यपरोपयेयुः तत्र मया न द्वेषो न क्रोध उत्पादयितव्यः।
तेषामपि मया न कायेन न वचसा न मनसा ऽपराद्धव्यं ' एवं च मे तस्मिन्समये दानपार-
मिता च शीलपारमिता च क्षान्तिपारमिता च परिपूरिं गमिष्यति ' अनुत्तरा च मे सम्य-
क्संबोधिरभ्यासन्ना भविष्यति। तथा च करिष्यामि तथा प्रतिपत्स्ये यथा मे ऽनुत्तरां स-
म्यक्संबोधिमभिसंबुद्धस्य सतस्तत्र बुद्धक्षेत्रे ' एते चान्ये च दोषाः सर्वेण सर्वं सर्वथा सर्वं न 20
भविष्यन्ति न प्रज्ञास्यन्ते ॥ पानीयकान्तारमध्यगतेन शारिपुत्र बोधिसत्त्वे[159a]न महास-

1) *prakhyāl*° here MS.; below *prakhāl*°.
2) 'wholly'; v. Indices to Divy. and Mhv.

त्त्वेन नोत्त्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यं। तत्कस्माद्धेतोः। असंत्रस्तधर्माणो
हि बोधिसत्त्वा महासत्त्वा भवन्ति। एवं चानेन चित्तमुत्पादयितव्यं। सर्वसत्त्वानां मया सर्वतृ-
ष्णाच्छेदाय शिक्षितव्यं। न बोधिसत्त्वेन महासत्त्वेन संत्रासमापत्तव्यं। सचेदहं तृष्णया
कालं करिष्यामि। अपि तु खलु पुनः सत्त्वानामन्तिके महाकरुणाचित्तमुत्पादयिष्यामि।
अहो बताल्पपुण्या अमी सत्त्वा यदेतेषां लोके एवंरूपाणि पानीयकान्ताराणि प्रज्ञायन्ते।
तथा पुनरहं करिष्यामि तथा प्रतिपत्स्ये यथा मे ऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सत-
स्तत्र बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं पानीयकान्ताराणि न प्रज्ञास्यन्ते। तथा च सर्वस-
त्त्वान् पुण्यैः संयोजयिष्यामि यथाष्टाङ्गोपेतपानीयलाभिनो भविष्यन्ति। तथा दृढं वीर्यमार-
प्स्ये सर्वसत्त्वानां कृतशो यथा वीर्यपारमिता तस्मिन्समये परिपूरिं गमिष्यन्ति॥ पुनरपरं
शारिपुत्र बुभुक्षाकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्त्रसितव्यं न संत्रसितव्यं
न संत्रासमापत्तव्यं। एवं चानेन संनाहः संनद्धव्यः। तथा दृढं वीर्यमारप्स्ये तथा च स्वं
बु[159 b]द्धक्षेत्रं परिशोधयिष्यामि यथा मे ऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तत्र
बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं एवंरूपाणि बुभुक्षाकान्ताराणि न भविष्यन्ति न प्रज्ञा-
स्यन्ते। सुखिता एव ते सत्त्वा भविष्यन्ति सुखसमङ्गिनः। सर्वसुखसमर्पितास्तथा च करि-
ष्यामि यथा तेषां सत्त्वानां यो य एवाभिप्रायो भविष्यति यद्यदेवाकाङ्क्षिष्यन्ति मनसा तत्त-
दे[व प्रा]दुर्भविष्यति। तद्यथापि नाम देवानां त्रायस्त्रिंशानां मनसा सर्वं प्रादुर्भवति मन-
सा सर्वमुत्पद्यते। तथा दृढं वीर्यमारप्स्ये यथा तेषां सत्त्वानां धार्मिका अभिप्रायाः परि-
पूरिं गमिष्यन्ति। अवैकल्यं च जीवितपरिष्कारैः सर्वसत्त्वानां भविष्यति सर्वेषां सर्वतः
सर्वदेति॥

एवमयं
[1]सर्वावस्थासु सत्त्वार्थः पुण्यवृद्धिहेतुः। विस्तरतस्त्वार्यगोचरपरिशुद्धिसूत्रे
द्रष्टव्यः॥

किं च।
धर्मदानं निरामिषं[1] [।] पुण्यवृद्धिनिमित्तं भवति॥

1 ... 1) The underlined words form together the first line of Kārikā 26 (see the Introduction). For the second line see below [f. 162 a].



यथोक्तमार्याध्याशयसंचोदनसूत्रे। विंशतिरिमे मैत्रेयानुशंसा निरामिषदाने। यो लाभ-
सत्कारमप्रतिकाङ्क्षन् धर्मदानं ददामि। कतमे विंशतिः। यदुत। स्मृतिमांश्च भवति
मतिमांश्च भवति बुद्धिमांश्च भवति गतिमांश्च भवति धृतिमांश्च भवति प्रज्ञावांश्च भवति।
[160 a] लोकोत्तरां च प्रज्ञामनुविध्यति[1]। अल्परागो भवति। अल्पद्वेषो ऽल्पमोहः। मा-
रश्चास्यावतारं न लभते। बुद्धैर्भगवद्भिः समन्वाहृयते[2]। अमनुष्याश्चैनं रक्षन्ति। देवाश्चा-
स्यौजः काये प्रक्षिपन्ति। अमित्राश्चास्यावतारं न लभन्ते। मित्राणि चास्याभेद्यानि भव-
न्ति। आदेयवचनश्च भवति। वैशारद्यांश्च[3] प्रतिलभते। सौमनस्यबहुलश्च भवति विद्वत्प्र-
शस्तश्च। अनुस्मरणीयं चास्य तद्धर्मदानं भवति। इमे मैत्रेय विंशतिरनुशंसा इति॥

आर्यप्रज्ञापारमितायां त्वाह। सचेत्त्वमानन्द[4] श्रावकयानिकानां पुद्गलानां श्रावकभूमौ
धर्मं देशयेः। तस्यां च धर्मदेशनायां ये त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वास्ते सर्वे ऽर्हत्वं
साक्षात्कुर्युस्तदद्यापि त्वया मे श्रावकेण श्रावककृत्यं न कृतं स्यात्। सचेत्पुनः त्वमानन्द
बोधिसत्त्वस्य महासत्त्वस्यैकमपि प्रज्ञापारमिताप्रतिसंयुक्तं पदं देशयेः प्रकाशयेरेवमहं
त्वया श्रावकेणाराधितः स्यां। तया च पूर्विकया धर्मदेशनया ये त्रिसाहस्रमहासाहस्रे
लोकधातौ सत्त्वास्ते सर्वे ऽर्हत्वं प्राप्नुयुस्तेषां चार्हतां यद्दानमयं पुण्यक्रियावस्तु शील-
म[160 b]यं पुण्यक्रियावस्तु भावनामयं पुण्यक्रियावस्तु। तत्किं मन्यसे आनन्दापि तु स
बहु पुण्यस्कन्ध[ः]। आह। बहु भगवन् बहु सुगत। भगवानाह। अतः स आनन्द श्रा-
वकयानिकपुद्गलो बहुतरं पुण्यस्कन्धं प्रसवति यो बोधिसत्त्वानां महासत्त्वानां प्रज्ञापार-
मिताप्रतिसंयुक्तं धर्मं देशयति। अतो ऽप्यानन्द बहुतरं पुण्यस्कन्धं प्रसवति यो बोधिस-
त्त्वो महासत्त्वो ऽपरस्य बोधिसत्त्वस्य प्रज्ञापारमिताप्रतिसंयुक्तं धर्मं देशयति। अन्तश एक-

1) རྗེས་སུ་རྟོགས་པར་འགྱུར་བ་ཡིན (213. b. 3) i. e. 'fully penetrates'.

2) 'is regarded, remembered'; cf. Mhv. Ind.

3) Sic MS. Tib. (213. b. 5): ཚིག་གཟུང་བར་འོས་པ་ཡིན which may imply *vaiçāradaç ca* or °*dyāc ca*.

4) त्विम (?) MS.

